शिखर आदि मोटां मोटां स्थळोनुं वर्णन कर्युं छे, ते हकीकत करतां कविरवदृष्टिने वधु स्पर्शे छे. श्रीविजयप्रभसूरिनुं चरित जाणवा माटे अन्तमां आपेल परिशिष्टनो भावानुवाद आप्या पछी काव्यसार नीचे आपवामां आवे छे.

## ५. परिशिष्टनो भावानुवाद

श्रीविजयप्रभसूरि प्रत्यक्ष प्रभावशाळी, प्रतिष्ठाशील, ज्ञानाभ्यासी, ग्रंथसंशोधक, प्रतिभावान्, उपदेश-प्रभावनामां प्रयत्नशील अने क्रियानिष्ठ हता. तेओ दुष्कर तपथी विघ्नोने दूर करता. गच्छने सारणा-वारणादि वडे व्यवस्थित राखता अने पोताने आधीन गीतार्थो तेमज संघना अभ्युदय माटे यत्नशील रहेता.

तेमनो जन्म कच्छना मनोहरपुरमां सं० १६७७ ना माहसुदि ११ ना दिवसे थयो हतो. पितानुं नाम शिवगण अने मातानुं नाम भानुमती (भांणी) हतुं. तेओ वृद्धोपकेशवंशना अने घोपा गोत्रना हता. पोते नव वर्षनी लघु वये पटले सं० १६८६ मां श्रीविजयदेवसूरि पासे दीक्षा लई श्रीवीरविजय नाम धारण कर्युं हतुं. तेमने सं० १७०१ मां पंन्यासपद अने सं० १७१० ना वैशाख सुदि १० ना दिवसे गंधारमां आचार्यपद मळतां तेओ श्रीविजयप्रभसूरि नामे प्रसिद्धि पाम्या.

एक समये परमगुरु तपागच्छाधिराज श्रीविजयदेवसूरि जिनशासननी पट्टपरंपराना प्रवाहने वधारवा "मारा पछी शासनाधीश कोण थशे;" ए प्रकारे सूरिमंत्रवडे ध्यान कर्युं त्यारे वधता तप-जपथी आकर्षित थयेला मंत्राधिष्ठायक देवे ते स्थळे आवीने नमस्कारपूर्वक सूरिने विज्ञप्ति करी के, "हे स्वामिन्! हजी शासनना अधिष्ठातानी दीक्षा ये थई नथीः आपनुं आयुष्य पण लांबुं छे. तेथी आवी चिंता करवाथी शुं! अवसरे सामान्य तपथी मने संभारतां हुं आवीने तरत ज कही जईश." ए प्रमाणे कहीने देव तिरोहित थया.

केटलोक काळ वीत्या पछी पोतानी पाटे जिनशासनना अधिराजनी स्थापनानो अवसर जोई गंधपुर (गंधार) मां जईने गुरुए ध्यान कर्युं त्यारे ते ज क्षणे मंत्राधिष्ठायक देवे आवीने निवेदन कर्युं के, "हे स्वामिन्! सौभाग्यनिधान, विद्या-महासागर, त्यागी, उत्कट चारित्रशील, सरळ स्वभावी श्रीवीरविजय (श्रीविजयप्रभ-सूरि) महाराजने पट्टे स्थापवा योग्य छे. तेओ केशवनी जेवा त्रण भुवनना उपकारक, पुरुषोत्तमनी जेवा नरकना नाश करनार, अने जगत्ने आनंददायी, शिवनी जेम महाव्रती, कामविजेता अने दक्ष, प्रजा प्रति प्रेमाळ, बृहस्पतिनी जेवा निर्मळबुद्धि तेमज विद्वानोमां श्रेष्ठ छे. एमनी आगळ मानथी ये महिमा अधिक वधशे" आ प्रमाणे कही देव तिरोहित थया.

गांभीर्यसागर गुरुए बहार देववाणीने अनुमोदन आपता शुभ शकुनो जोयां तेथी शासनना अधिनायक माटे संघने विश्वास आप्यो अने दृढचित्ते निर्णय करीने राजनगर (अमदावाद)थी तरत आवेला रत्ना शाह प्रमुख राजनगरसंघना आग्रहथी खंभात, पाटण, सूरत वगेरे अनेक देश, नगर अने गामोना संघ समक्ष गंधार बंदरे अतिशयवाळी श्रीमहावीरस्वामीनी मूर्त्ति आगळ, मंदिरना प्रांगणमां विक्रमसंवत् १७१० ना वैशाख सुदि १० ने गुरुवारे पुष्यनक्षत्रमां सारा मुहूर्त्ते श्रीविजयदेवसूरिए श्रीवीरविजयने पोतानी पाटे स्थाप्या.

ए समये त्यांना चित्रविचित्र मोटा मोटा मंडपोनी भव्य शोभा निहाळवा मानवमेदनी ऊलटी हती. विविध वाजिंत्रोना नादे आकाश प्रदेशने क्यांई सुधी व्याप्त करी दीधो हतो. धूपादिनी सुगंधे वातावरणने भरी दीधुं हतुं अने ज्यां त्यां हर्ष-प्रमोदभरी वार्तानो झरो वही रह्यो हतो. त्यारे सज्जन शिरोमणि अखइना पुत्र वर्धमाने पोतानी माता साहेबदेवी साथे प्रत्येक घरे रुपिया सहित थाळीनी लांणी करी अने चतुर्विध संघने वस्त्रादि दान वडे उत्सवनी शोभा वधारी.

नवानगर (जामनगर) मां देवसूरि चातुर्मास स्थित रह्या. ते समये दक्षिण देशनी चतुरिका नामनी भक्त श्राविका देवसूरिने वांदवा आवी अने तेणे अनेक मूर्तिओनी प्रतिष्ठा करावी तेमज साधर्मिकवात्सल्यथी त्यांना संघने प्रसन्न कर्यो.

चतुरिका जे, देवसूरिनां छेल्लां चार चतुर्मासमां आवीने तेमने दक्षिणमां पधारवा विज्ञप्ति करती हती; तेणे अवसर जोई व्याख्यान समये ज सविनय विनति करी के, गुरुदेव! दक्षिणमां आपना पधारवाथी अनेक प्रकारनां सुकृत-पुण्यकार्यो थवानी आशा छे.

आ प्रकारनी प्रतिदिन विज्ञप्ति करतां श्रीदेवसूरिए चातुर्मास पछी दक्षिण तरफ विहार कर्यो अने दक्षिणना औरंगाबादमां प्रथम चातुर्मास कर्युं. ते पछी बीजापुरमां चातुर्मास कर्युं ज्यां देवचंद्र नामना धनिक श्रावके देवसूरिहस्तक बिंबप्रतिष्ठा करावी. ते पछी देवसूरिए मोटा संघसहित कलिकुंड पार्श्व अने करहेडा पार्श्व नामना तीर्थोनी यात्रा करी बीजापुर तथा बहानपुरमां बे चतुर्मास वीताव्यां. पछी तेओ तिलंगदेशमां विचर्या अने तेमणे भाग्यपुरमां यवनपति (कुतुबसाहि)ने उपदेश आपी जिनबिंबनी प्रतिष्ठा करी. पछी तेओ बीजापुर आव्या अने त्यां चतुर्मास कर्युं अने तेमना उपदेशथी प्रभावित थयेला त्यांना पादशाह (इदलसाहि) ए समग्र देशमां गोवधना निषेधनी आज्ञा फरमावी.

त्यां देवचंद्र नामना श्रावके जिनबिंबनी प्रतिष्ठा करावी अने अमरचंद्र नामना मुनिने वाचक पदवी अपावी.

देवसूरि दक्षिणमांथी सीधा गुजरात तरफ आव्या अने श्रीविजयप्रभसूरिने आचार्य बनाव्या. गुरुश्री विजयप्रभसूरि आचार्यश्रेष्ठ देवसूरि साथे सौराष्ट्रमां आव्या अने त्यां ऊनामां देवसूरि अनशन लई देवगत थया.

सर्ग. ५—ते पछी श्रीविजयप्रभसूरिए भट्टारकरूपे संघसमुदाय पर पोतानी आज्ञानो दोर जमाव्यो अने संघीय व्यवस्थाने बनावी राखवा सम विहारो कर्या.

तेओ प्रथम दीव नगरमां आव्या अने त्यांथी नावद्वारा दरियाने वटावी, गाम-नगरोमां उपदेश आपता शत्रुंजय तीर्थे आव्या. अने त्यां घनौघपुर (घोघा) मां चतुर्मास कर्युं. त्यांथी पुनः विमलगिरिनां दर्शन करी तेओ अमदावाद आव्या अने त्यां बे चतुर्मास कर्यां. त्यांथी तेओ शंखेश्वर तीर्थे थईने, तेमणे पाटण आवी चतुर्मास कर्युं. त्यांथी पुनः शंखेश्वर थई सयद्दविपुर (सिरोही) मां चतुर्मास वीतावी जीवा नामना श्रावकना दृढ आग्रहथी उदयपुरमां पार्श्वजिननी प्रतिष्ठा करवाने अचलगिरि (आबू) गया. त्यांना भीलोना नायके गुरुना उपदेशथी त्रस प्राणीओनो वध न करवानी प्रतिज्ञा करी. त्यांथी तेओ नाहीपुर थईने उदयपुर आव्या. त्यां भव्य समारोहपूर्वक तेमनुं स्वागत थयुं. त्यांना राणाए पोताना सेना-सरंजाम साथे शाहीरीते तेमनुं स्वागत करी श्रीविजयप्रभसूरिने वंदन कर्युं.

सर्ग. ६—गुरुराज त्यांथी आदि जिनेश्वरना वंदन माटे रुडग नामना वागड मंडळमां गया. त्यां वागड भूपतिने प्रतिबोध पमाडी तेओए पाछा उदयपुर आवीने चतुर्मास कर्युं अने त्यांना राणाने जैनधर्ममां दृढानुरागी बनाव्यो.

चतुर्मास वीततां गुरुराजे मेवाडना प्रत्येक गामे विहरतां विरहतां जिनधर्मनो उपदेश कर्यो अने प्रतिष्ठा-महोत्सवो कर्या.

सर्ग. ७—उदयपुरथी तेओ सादडी (सादडी) आव्या. त्यांथी मेदिनीपुर, नारायणपुर,

पण करी. आम उग्र विहार करी कच्छदेशमां आव्या त्यारे त्यांना राजाए तेमनुं सन्मान कर्युं. दीवबंदरमां मेघबाई नामनी श्राविकाने गच्छपतिने पधराववानो उत्साह थवां त्यांना संघनो श्रीसूरिने बोलाववानो विचार थयो. आथी मेघबाईए पोतानी वहूओ वगेरे परिवार सहित कच्छ जई आचार्यने विनति करी. आथी सूरि दीव आव्या. अजाहरा पार्श्वनाथ, श्रीविजयहीरसूरिनो थूभ वगेरेने वंदन करीने तेओ ऊना पधार्या. आ उत्सवमां मेघबाईए घणुं द्रव्य खरच्युं. गुरुए दीवमां लागलागट चार चोमासां कर्यां. ते पछी जेतांबाइए शत्रुंजयनो संघ काढ्यो. तेमां श्रीगुरुए संघ साथे पाछा दीव पधारीने नवलख पार्श्वनाथने वंदन कर्या. देश देशना संघपतिओ अने मनुष्योए आवीने पूजा-प्रभावना करी. दीवमां संघपति अभयचंद अने सामा नामना मंत्रीए आग्रहथी गुरुने त्रण चोमासां कराव्यां. गुरुए छठ, अट्ठम, नित्य एकाशन, आयंबिल, नीवी वगेरे तपश्चर्याओ करी. ते पछी गुरु ऊना पधार्या अने त्यां सं० १७४९ ना वैशाख वदि एकादशीने दिने अनशनपूर्वक चउविहार आदरी तेरसने दिने स्वर्गवास पाम्या. परिख जेसंग सुत विजयसंगे तेरखंडी मंडावी तेमां शबने पधराव्युं त्यारे श्रावकोनी ठठ जामी हती. जे स्थळे श्रीहीरविजयसूरि अने विजयदेवसूरिना थूभो हता तेनी नजीकमां ज सुगंधी द्रव्यथी शबनो संस्कार कर्यो. त्यां परिख विजयसंगे श्रीविजयप्रभसूरिनो थूभ कराव्यो. ते पछी श्रीविजयरत्नसूरि पट्टधर थया. [—जुओ, 'श्रीविजयप्रभसूरि-निर्वाणरास'.]

## ६. काव्य सार

सर्ग. १—कविए काव्यारंभमां चोविश श्लोकोमां 'स्वस्तिश्री' थी शरू थता चोविशे तीर्थंकरोनी स्तुति करी छे. पछी श्रीगौतम तथा इन्द्रभूति प्रमुख गणधरोने स्तवीने दुर्जननिंदा, काव्यहेतु, काव्यनाम अने जंबूद्वीपनुं वर्णन—जेमां नदी, पर्वतो अने वनोनुं वर्णन 'संग्रहणी' मुजब आपेलुं छे.

सर्ग. २—भरतक्षेत्रनुं आखुं ये वर्णन 'संग्रहणी' मुजब आलेख्युं छे.

सर्ग. ३—भगवान् महावीरना अतिशयो अने समवसरणमां रहीने भगवाने उपदेश कर्यो तेनुं वर्णन छे.

सर्ग. ४—भगवान् महावीरनी पट्टपरंपरमां थयेला श्रीविजयप्रभसूरि सुधीना पट्टधर आचार्योनुं वर्णन छे, तेमां श्रीविजयदेवसूरि ६० मा भट्टारक थया; तेमनुं चरित वर्णवे छे—

श्रीविजयदेवसूरि भट्टारक थया ते पछी मारवाड, सोराष्ट्र, गूजरात, मेवाड आदि देशोमां विहरतां भव्य प्राणीओने उपदेश आप्यो. ए उपदेशथी धर्म पामेलाओए मोटां मोटां चैत्यो, जीर्णोद्धारो अने प्रतिष्ठाओ करावी.

मेवाडाधीश राणा जगत्सिंहे श्रीदेवसूरिना उपदेशथी उदयसागर अने पीछोला नामनां बे मोटां सरोवरोमां थती जीवहिंसा बंध करी. वळी खंडित जिनमंदिरोनो उद्धार पण ते राजा पासे कराव्यो.

मेवाडथी तेओ विहार करी अमदावाद आव्या अने पोताना समुदायनो वधी पडेलो भार हळवो करवा तेमना शिष्य श्रीविजयसिंहसूरिने युवराजपदे स्थाप्या. श्रीविजयसिंहसूरिए पण ते समयना उपस्थित कलहशत्रुओने जीतवा प्रयत्न कर्यो, अने निर्मोह भावे गुरुना हृदयने जीती लीधुं. पोताना समुदायने वारणा-स्मारणादि शिक्षाप्रकारोथी वशमां कर्यो.

पछी देवसूरि त्यांथी विमलगिरिनी यात्राए संघसहित चाल्या. ते संघमां बीजा नगरोना अनेक संघो आवीने मळ्या हता. तेमां अनेक रथ, घोडा, ऊंट अने हाथीओ हता. संघना धनाढ्य श्रावकोए मार्गना प्रत्येक गाम-नगरोमां अंगपूजा माटे अने दानमां सोना-रूपानी पुष्कळ मुद्राओ वापरी, सौराष्ट्रनो पुण्योचित कार्योनो उद्धार कर्यो.

नवानगर (जामनगर) मां देवसूरि चातुर्मास स्थित रह्या. ते समये दक्षिण देशनी चतुरिका नामनी भक्त श्राविका देवसूरिने वांदवा आवी अने तेणे अनेक मूर्त्तिओनी प्रतिष्ठा करावी तेमज साधर्मिकवात्सल्यथी त्यांना संघने प्रसन्न कर्यो.

चतुरिका जे, देवसूरिनां छेल्लां चार चतुर्मासमां आवीने तेमने दक्षिणमां पधारवा विज्ञप्ति करती हती; तेणे अवसर जोई व्याख्यान समये ज सविनय विनति करी के, गुरुदेव! दक्षिणमां आपना पधारवाथी अनेक प्रकारनां सुकृत-पुण्यकार्यो थवानी आशा छे.

आ प्रकारनी प्रतिदिन विज्ञप्ति करतां श्रीदेवसूरिए चातुर्मास पछी दक्षिण तरफ विहार कर्यो अने दक्षिणना औरंगाबादमां प्रथम चातुर्मास कर्युं. ते पछी बीजापूरमां चातुर्मास कर्युं ज्यां देवचंद्र नामना धनिक श्रावके देवसूरिहस्तक बिंबप्रतिष्ठा करावी. ते पछी देवसूरिए मोटा संघसहित कलिकुंड पार्श्व अने करहेडा पार्श्व नामना तीर्थोनी यात्रा करी बीजापूर तथा बर्हानपुरमां बे चतुर्मास वीताव्यां. पछी तेओ तिलंगदेशमां विचर्या अने तेमणे भाग्यपुरमां यवनपति (कुतुबसाहि)ने उपदेश आपी जिनबिंबनी प्रतिष्ठा करी. पछी तेओ बीजापूर आव्या अने त्यां चतुर्मास कर्युं अने तेमना उपदेशथी प्रभावित थयेला त्यांना पादशाह (इदलसाहि) ए समग्र देशमां गोवधना निषेधनी आज्ञा फरमावी.

त्यां देवचंद्र नामना श्रावके जिनबिंबनी प्रतिष्ठा करावी अने अमरचंद्र नामना मुनिने वाचक पदवी अपावी.

देवसूरि दक्षिणमांथी सीधा गूजरात तरफ आव्या अने श्रीविजयप्रभसूरिने आचार्य बनाव्या. गुरुश्री विजयप्रभसूरि आचार्यश्रेष्ठ देवसूरि साथे सौराष्ट्रमां आव्या अने त्यां ऊनामां देवसूरि अनशन लई देवगत थया.

सर्ग. ५—ते पछी श्रीविजयप्रभसूरिए भट्टारकरूपे संघसमुदाय पर पोतानी आज्ञानो दोर जमाव्यो अने संघीय व्यवस्थाने बनावी राखवा उग्र विहारो कर्या.

तेओ प्रथम दीव नगरमां आव्या अने त्यांथी नावद्वारा दरियाने वटावी, गाम-नगरोमां उपदेश आपता शत्रुंजय तीर्थे आव्या. अने त्यां घनौघपुर (घोघा) मां चतुर्मास कर्युं. त्यांथी पुनः विमलगिरिनां दर्शन करी तेओ अमदावाद आव्या अने त्यां बे चतुर्मास कर्या. त्यांथी तेओ शंखेश्वर तीर्थ थईने, तेमणे पाटण आवी चतुर्मास कर्युं. त्यांथी पुनः शंखेश्वर थई सयद्दविपुर (सिरोही) मां चतुर्मास वीतावी जीवा नामना श्रावकना दृढ आग्रहथी उदयपुरमां पार्श्वजिननी प्रतिष्ठा करवाने अचलगिरि (आबू) गया. त्यांना भीलोना नायके गुरुना उपदेशथी त्रस प्राणीओनो वध न करवानी प्रतिज्ञा करी. त्यांथी तेओ नाहीपूर थईने उदयपुर आव्या. त्यां भव्य समारोहपूर्वक तेमनुं स्वागत थयुं. त्यांना राणाए पोताना सेना-सरंजाम साथे शाहीरीते तेमनुं स्वागत करी श्रीविजयप्रभसूरिने वंदन कर्युं.

सर्ग. ६—गुरुराज त्यांथी आदि जिनेश्वरना वंदन माटे खडग नामना वागड मंडळमां गया. त्यां वागड भूपतिने प्रतिबोध पमाडी तेओए पाछा उदयपुर आवीने चतुर्मास कर्युं अने त्यांना राणाने जैनधर्ममां दृढानुरागी बनाव्यो.

चतुर्मास वीतवां गुरुराजे मेवाडना प्रत्येक गामे विहरतां विरहतां जिनधर्मनो उपदेश कर्यो अने प्रतिष्ठा-महोत्सवो कर्या.

सर्ग. ७—उदयपुरथी तेओ सादच्छदिकपुर (सादडी) आव्या. त्यांथी मेदिनीपुर, नारायणपुर,

संग्रामपुर, मालपुर, अने मारवाड आव्या. मारवाडमां तेमणे [सं० १७३२ मां] श्रीविजयरत्नसूरिने आचार्यपदे स्थाप्या.

सर्ग. ८—तेओ सं० १७३७ मां शिवपुरी (सिरोही) आव्या अने त्यांना शंखेश्वर पार्श्वजिनने स्तुतिपूर्वक वंदन कर्युं. (कविए तेनुं वर्णन अत्यंत कवित्वमय वाणीमां करतां आखो सर्ग रोक्यो छे.)

सर्ग. ९—सिरोहीमां वसतां श्रीविजयप्रभसूरि त्यांना संघ अने पोताना शिष्यादि वर्गने उपदेश आपवा ज रह्या. त्यांथी तेओ सुवर्णगिरि (जालोर) गया. ते गिरि परनां जिनचैत्योनी लक्ष्मी, पर्वतनी शोभाने वधारती हती. तेना पर रहेता मोटा धनाढ्यो (कोट्याधीशो), कविओ, पंडितो अने त्यां विद्याधरोनी रमणीओ आवती होवाथी ए गिरि स्वर्ग समो दीसे छे. तेनी नीचे जालंधर (जालोर) गाम छे. त्यां पण अनेक जिनविहारो शोभे छे.

त्यांथी तेओ मेदिनीपुर गया अने केटलोक समय त्यां पसार कर्यो.

सर्ग. १०—त्यांथी तेओ विहार करता करता बादशाह जहांगीरना पाटनगर (आगरा) मां आव्या. आगरानी वाटिकाओ, प्राकारो, जिहांनाबाद, बादशाहनो महेल, वेपारीओनी हवेलीओ, उपवनो वगेरेनुं वर्णन कवित्वदृष्टिए करायेलुं छे.

सर्ग. ११—आगरानुं वर्णन, यमुना, गंगा, सरस्वती अने त्रणे नदीओथी बनेली त्रिवेणीनुं वर्णन, पार्श्वनाथना जन्मस्थल वाराणसी नगरी अने त्यां वसता लोको, त्यांनां गृहो, उपवनो वगेरेनुं सुंदर वर्णन छे. त्यांथी पूर्वदेश तरफ विहार करतां पत्तन-पटणा आव्या अने तेना मार्गनुं वर्णन करवामां आव्युं छे.

सर्ग. १२—पटणाना जिनमंदिरो अने नागरिकोनुं वर्णन तेमज विहार नगरना नागरिको अने त्यांना सुंदर भवनोनुं वर्णन रोचकभरी शैलीए कर्युं छे.

सर्ग. १३—आ सर्गमां सम्मेतशिखरनुं वर्णन छे. बधाये पर्वतोमां आ पर्वत श्रेष्ठ अने पवित्र छे. चोविशे तीर्थंकरो अने गणधरोनुं स्तुतिपूर्वक आ पर्वतनुं माहात्म्य कविए भक्ति-आवेशमां वर्णव्युं छे.

प्रान्ते, साक्षररत्न आचार्य श्रीजिनविजयजी अने विद्वद्वर्य पं० बेचरदासजीए समय समय पर आपवा योग्य सूचनाओ अने प्रेरणाओ न आपी होत तो आ ग्रंथनुं संपादन कार्य आ स्वरूपे भाग्ये ज प्रकाशमां आवी शकत; ए बदल तेमनो आभार मानुं छुं.

अमदावाद
१-६-४४

अंबालाल प्रेमचंद शाह

# परिशिष्टोल्लिखित-भट्टारकानां घटनाक्रमः।

### १ विजयसेनसूरिः—

सं० १६०४ नारदपुर्यां जन्म।
सं० १६१३ दीक्षा।
सं० १६२६ पंन्यासपदम्।
सं० १६२८ उपाध्यायपदपूर्वकमाचार्यपदम्।
सं० १६३२ चांपानेरदुर्गेऽर्हत्प्रतिमाशतानां प्रतिष्ठा।
सं० १६५२ भट्टारकपदम्।
सं० १६५४ विजयचिन्तामणिपार्श्वबिम्बस्य शकन्दरपुरे प्रतिष्ठा।
सं० १६७१ स्वर्गमनम्।

### २ श्रीविजयदेवसूरिः—

सं० १६३४ ईडरदुर्गे जन्म।
सं० १६४३ दीक्षा।
सं० १६५५ पण्डितपदम्।
सं० १६५६ उपाध्यायपदपूर्वमाचार्यपदम्।
सं० १६५८ पत्तने गणानुज्ञानन्दिमहोत्सवः।
सं० १६७१ भट्टारकपदम्।
सं० १६७३ कतिचिदुपाध्यायैः स्वकीयमतं प्रादुष्कृतम्।
सं० १६८७ मीरमोजाख्यभूपसमीपे सागरपाक्षिकैः सह वादः।
सं० १७०५ ईलादुर्गे प्रतिष्ठा कारिता।
सं० १७१३ ऊनानगरे स्वर्गमनम्।

### ३ श्रीविजयसिंहसूरिः—

सं० १६४४ जन्म।
सं० १६५४ दीक्षा।
सं० १६७२ वाचकपदम्।
सं० १६८१ सूरिपदम्।
सं० १६८४ गणानुज्ञानन्दिमहोत्सवः।
सं० १७०८ नवीनपुरे स्वर्गमनम्।

### ४ श्रीविजयप्रभसूरिः—

सं० १६७७ मनोहरपुरे जन्म।
सं० १६८६ दीक्षा।
सं० १७०१ पंन्यासपदम्।
सं० १७१० आचार्यपदम्।
सं० १७१३ भट्टारकपदम्।
सं० १७१५, सं० १७१७, सं० १७२० } सुराष्ट्रदेशे चातुर्मासकम्।
सं० १७२३ घोघाबन्दिरे जसूकारिताऽर्हत्प्रतिमानां प्रतिष्ठा कारिता।

महोपाध्यायश्रीमन्मेघविजयगणिविरचितं

# दिग्विजयमहाकाव्यम् ।

## प्रथमः सर्गः ।

ओँ ऐँ ह्रीँ श्रीँ क्लीँ अर्हं श्रीशङ्खेश्वरपार्श्वपरमेश्वराय
जगदीश्वराय जगदेकवीराय नमः ॥ 5



स्वस्तिश्रीर्नृसुरासुरक्षितिभृतां वाल्लभ्यमभ्यस्यति
यत्पादाम्बुजसेवनापरिचयादुत्तीतपीतद्युतिः ।
तारुण्यातिशये जगत्त्रयजयं रूपेण लब्ध्वा स्वयं
कारुण्याद् भगवान् स नाभितनयः[4] पुष्णातु पुण्योदयम् ॥ १ ॥

---

### ग्रन्थकारकृतानि टिप्पणानि

श्रीसङ्खेश्वरपार्श्वार्हद्ध्यानोद्बुद्धधिया मया । काव्ये दिग्विजयाह्वाने किञ्चिद् विव्रियतेऽधुना ॥ १ ॥

[१] १ 'स्वस्तिश्रीः' मङ्गललक्ष्मीः सर्वत्र [शुभकार्याऽऽरम्भे] वल्लभा । २ तत्र कवेरुत्प्रेक्षा 'यत्पादाम्बुजसेवनापरिचयात्' अत एव 'उत्तीतपीतद्युति'रिति हेतूत्प्रेक्षालङ्कारः ।

---

### संपादककृतानि टिप्पणानि

यत्कीर्तितगुणाम्भोधिबिन्दुस्पर्शप्रसादितः । मादृशोऽप्यल्पमेधः स्यात् किं पुनः स्तुतिकृद् गणी ॥ १ ॥
पूर्वाऽऽचार्यैरनेकैर्यद्गुणाम्भोधिनिमज्जने । कृतेऽपि न गताः पारं तद्गुणाम्भोधये नमः ॥ २ ॥
गुणाम्भोधिं श्रीमद्वीरं प्रणिपत्य च सद्गुरुम् । अम्बालालाऽऽह्वविद्यार्थी कुरुते काव्यटिप्पणम् ॥ ३ ॥

[1] 1 'वाल्लभ्यम्' प्रियताम् । 2 'अभ्यस्यति' अधीते । 3 ''पीतद्युतिः' ऋषभदेवप्रभोः सुवर्णकान्तिमत्त्वात् । कमलेऽपि पीतवर्णं रजः स्यात् । 4 'नाभितनयः' नाभिनाम्नः राज्ञः पुत्रः श्रीऋषभदेवप्रभुः ।

महोपाध्यायश्रीमन्मेघविजयगणिविरचितं

# दिग्विजयमहाकाव्यम् ।

## प्रथमः सर्गः ।

ओँ ऐँ ह्रीँ श्रीँ क्लीँ अर्हं श्रीशङ्खेश्वरपार्श्वपरमेश्वराय
जगदीश्वराय जगदेकवीराय नमः ॥



स्वस्तिश्रीर्नृसुरासुरक्षितिभृतां वाल्लभ्य[1]मभ्यस्यति[2]
यत्पादाम्बुजसेवनापरिचयादुज्झीतपीत[3]द्युतिः ।
तारुण्यातिशये जगत्त्रयजयं रूपेण लब्ध्वा स्वयं
कारुण्याद् भगवान् स नाभितनयः[4] पुष्णातु पुण्योदयम् ॥ १ ॥

---

### ग्रन्थकारकृतानि टिप्पणानि

श्रीसङ्खेश्वरपार्श्वार्हद्ध्यानोद्बुद्धधिया मया । काव्ये दिग्विजयाह्वाने किञ्चिद् विव्रियतेऽधुना ॥ १ ॥

[१] १ 'स्वस्तिश्रीः' मङ्गललक्ष्मीः सर्वत्र [ शुभकार्याऽऽरम्भे ] वल्लभा । २ तत्र कवेरुत्प्रेक्षा 'यत्पादाम्बुजसेवनापरिचयात्' अत एव 'उज्झीतपीतद्युति'रिति हेतुरलङ्कारः ।

---

### संपादककृतानि टिप्पणानि

यत्कीर्तितगुणाम्भोधिबिन्दुस्पर्शप्रसादितः । मादृशोऽप्यल्पमेधः स्यात् किं पुनः स्तुतिकृद् गणी ॥ १ ॥
पूर्वाऽऽचार्यैरनेकैर्यद्गुणाम्भोधिनिमज्जने । कृतेऽपि न गताः पारं तद्गुणाम्भोधये नमः ॥ २ ॥
गुणाम्भोधिं श्रीमद्वीरं प्रणिपत्य च सद्गुरुम् । अम्बालालाऽऽह्वविद्यार्थी कुरुते काव्यटिप्पणम् ॥ ३ ॥

[1] 1 'वाल्लभ्यम्' प्रियताम् । 2 'अभ्यस्यति' अधीते । 3 ''पीतद्युतिः' ऋषभदेवप्रभोः सुवर्णकान्तिमत्त्वात् । कमलेऽपि पीतवर्णं रजः स्यात् । 4 'नाभितनयः' नाभिनाम्नः राज्ञः पुत्रः श्रीऋषभदेवप्रभुः ।

स्वस्तिश्रीरिव यस्य मूर्त्तिरमला मूर्त्तेव लोकप्रिया
सेव्या भव्यसुरासुरैर्नवरविप्रौढप्रभाभासुरैः ।
श्रीपद्मासनसंस्थिता करतले लीलाम्बुजालङ्कृता
सोऽस्माकं विजयाय नाम विजयासूनुर्जिनः स्याद् भुवि ॥ २ ॥

स्वस्तिश्रीविभवाय शंभवविभुर्भूयात् तृतीयोऽर्हतां
यस्य ध्यानविधाननिश्चितधियां सर्वे विधेयाः सुराः ।
आधेयं हृदि नामधेयमनिशं स्वाहाभुजामीश्वरै-
र्ध्येयं निस्तुलरूपधेयमपि च स्यात् पुण्यनैपुण्यतः ॥ ३ ॥

स्वस्तिश्रीसरितां पयोनिधिरभिधानं महासे(शे)वधिः
सिद्धीनामघधिर्विधिर्विधिकथां कारुण्यतारुण्यभाक् ।
आद्यः सर्वविदां विदान्तिकधृतिर्ध्यानेऽद्वितीयो गिरि-
र्मेरुर्मे रुचयेऽभिनन्दनविभू रत्नत्रयस्यास्तु सः ॥ ४ ॥

स्वस्तिश्रीरतिकर्मकर्मठमतिर्यो योगभाजां पतिः
सौभाग्यप्रकृतिः कृतिस्तुतिशतैर्व्यावर्ण्यमानाऽऽकृतिः ।
नम्रामर्त्यपतिः प्रतिष्ठितमहालक्ष्मीयशःसंतति-
स्तीर्थेशः सुमतिश्चिरं स जयति ध्यानाधिलीनाऽऽयतिः ॥ ५ ॥

---

[२] १ 'श्रीपद्मासनसंस्थिता करतले' अन्यापि लक्ष्मीः करतले अम्भोजं धत्ते, पद्मासने तिष्ठति इयमपि करतले पद्मरेखयाऽङ्किता ।

[३] २ 'विधेयाः' विनयस्थाः । 'विधेये विनयस्थः स्याद्' इति [ है० कां० ३ श्लो० ९६ ] ।

[४] ३ 'अभिधानम्' नाममधिकृत्य निधिरेव । ४ 'सिद्धीनाम्' अणिमादीनाम् [ 'अणोर्भावोऽणिमा, महानपि भवत्यणुः' । है० कां० २ श्लो० ११६ ] । ५ 'विधिः' ब्रह्मा । ६ 'विधिकथाम्' विधयः क्रियाऽऽचाररूपास्तल्लक्षणवेदपाठानाम् ।

[५] ७ 'ध्यानाधिलीनाऽऽयतिः' ध्यानेऽधिलीना स्वाधीभूता आयतिरुत्तरकालो यस्य सः ।

---

[2] 1 'नवरविप्रौढप्रभाभासुरैः' नव्यो यः सूर्यस्तद्वत् प्रौढा या प्रभा ताभिः देदीप्यमानैः । 2 'विजयासूनुः' 'विजया' मातुः पुत्रः अजितनाथप्रभुः ।

[3] 3 'शंभवविभुः' संभवनाथप्रभुः । 'शंभवे संभवोऽपि च' इति [ शब्दरत्नाकर', कां० १ श्लो० ४ ] 4 'आधेयम्' आधातुं योग्यं स्थेयमिति यावत् । 5 'स्वाहाभुजामीश्वरैः' देवतानामधिपैः इन्द्रैरिति । 6 'निस्तुलरूपधेयम्' निरुपमं रूपधेयं रूपम् 'नामरूपभागाद् धेयः' ७-२-१५८ इति सिद्धहैमसूत्रेण स्वार्थे धेयप्रत्ययः ।

[4] 7 'महाशेवधिः' महानिधिः 'निधानं तु कुनाभिः शेवधिर्निधिः' इति [ है० कां० २ श्लो० १०६ ] 8 'विदान्तिकधृतिः' विशेषेण दान्तिकानां तपःक्लेशसहां धैर्यम् 'तपःक्लेशसहो दान्तः' इति [ है० कां० २ श्लो० ४७५ ]

9 'अद्वितीयः' श्रेष्ठः । 10 'विभू रत्न' अत्र 'रो रे लुग् दीर्घश्चादिदुतः' १-३-४१ इति सिद्धहैमसूत्रेण रकारलोपः पूर्वस्वरस्य दीर्घश्च । 11 'रत्नत्रयस्य' ज्ञान-दर्शन-चारित्ररूपरत्नत्रयस्य ।

[5] 12 'सौभाग्यप्रकृतिः' शोभनो भगो रूपं श्रीर्वा यस्य स सुभगस्तस्य भावः सौभाग्यं-सौभाग्यया प्रकृतिः स्वभावः यस्य सः ।

२ 'कृतिः' विद्वान् । 13 'नम्रामर्त्यपतिः' नम्राः अमर्त्याः देवास्तेषां पतिः ।

स्वस्तिश्रीर्मकराकरात् समुदभूच्छैवी कथाऽसौ वृथा
किन्तु स्नात्रजदुग्धवार्धिकलिकासंलब्धजन्मा ह्यसौ ।
तद् यस्य क्रमपूजनैर्बहुजनैः सद्यः समासाद्यते
श्रीपद्मप्रभनामधेयभगवान् जीयात् स पद्माऽङ्कितः ॥ ६ ॥

स्वस्तिश्रीर्वसति स्म विस्मयकरप्राज्यप्रभाभाजने
यत्पादद्वितयाम्बुजन्मनि ततस्तत् स्वस्तिकालङ्कृतम् ।
प्राणम्रामरमौलिरत्नरुचिभिश्चित्रीयितं दीव्यति
श्रीमान् सोऽस्तु सुपार्श्वशाश्वतरविर्दोषाभिशोषाय नः ॥ ७ ॥

स्वस्तिश्रीर्निजसोदरं जिनपतेर्यस्यांह्रियुग्मे स्थिरं*
मत्वा पूर्णकलाधरं समुदितस्निग्धाऽऽशया सत्वरम् ।
रेमेऽभ्येत्य ततः प्रणेमुषि जने स्रोपा विशेषाऽऽदरा
श्रीचन्द्रप्रभशम्भुरद्भुततया भाग्योदयायास्तु नः ॥ ८ ॥

स्वस्तिश्रीकरपीडनोत्सवविधौ बद्धावधानः प्रभुः
प्रावीण्याद् धवलं दुकूलमदधादामूलचूलाऽऽवृतम् ।
गङ्गाभङ्गतरङ्गसङ्गसुभगा तेनैव यस्य द्युतिः
स श्रीमान् सुविधिर्विबोधविधये साहाय्यकर्त्ताऽस्तु नः ॥ ९ ॥

स्वस्तिश्रीः प्रतिलोकमोकसि गुणैः स्वस्यानुरूपं पतिं
मन्येऽन्वेष्टुमिव भ्रमन्त्यनुदिनं संगत्य सुश्चत्यमुम् ।
अन्तस्तापभृता धृता जिनपतिं यं शीतलत्वं श्रिता
सारस्यात्तनु शीतलः स भगवाँस्तन्याद्दलं मङ्गलम् ॥ १० ॥

[ ६ ] १ 'स्वस्तिश्रीः' स्वस्तिश्रीनिवासचिह्नमेतद् येन स्वस्ति-कालङ्कारः श्रीवसतौ तद्देशिष्यात् ।

[ 6 ] 1 'मकराकरात्' समुद्रात् । 2 'शैवी कथा' शिवाम्नाया पौराणिकी कथा; यथा चतुर्दशरत्नानां मध्ये लक्ष्मीविशिष्टरत्नस्य जन्म समुद्रादभूदिति । 3 'स्नात्रजदुग्धवार्धिकलिकासंलब्धजन्मा' [ प्रभोः जन्मावसरे स्नानार्थं देवता मेरोः शिखरे प्रभुं नयन्तीति जैनाम्नायस्तस्मात् ] स्नानाद् समुद्भूतो यो वार्धिः समुद्रस्तस्य कलिका वीचयस्ताभ्यः प्राप्तजन्मा । 4 'असौ' लक्ष्मीः । 5 'पद्माऽङ्कितः' पद्मलाञ्छनेन चिह्नितः अथवा लक्ष्मीरेखया युक्तः ।

[ 7 ] 6 '°अम्बुजन्मनि' कमले । 7 'प्राणम्रामरमौलिरत्नरु-चिभिः' प्रकर्षेण आ समन्तान्नम्राः प्रणताः ये अमरास्तेषां मस्तकेषु यानि रत्नानि तेषां कान्तिभिश्चित्रीयितम् । 'प्राणम्र°' इत्यत्र "अदु-रुपसर्ग°" २-३-७७ इति हैमसूत्रेण णत्वम् ।

8 'दोषाऽभिशोषाय' रात्रीणां पापानां वा नाशाय ।

[ 8 ] 9 'निजसोदरं' स्वभ्रातरम् [ चन्द्रोऽपि समुद्रादजनीति प्रसिद्धेः ] 10 'प्रणेमुषि' प्रणामं कर्तरि अत्र "अदुरुपसर्ग°" इत्य-नेन णत्वभावः ॥

[ 9 ] 11 'करपीडन°' 'करपीडनं' विवाहः । 12 'दुकूलं' 'क्षौमं दुकूलं दुगूलं स्याद्' इति [ है० का० ३ श्लो० ३३३ ] 13 'अदधाद्' 'डुधांगृक्' धारणे च इति धातोः ह्यस्तन्याः रूपम् । 14 'आमूलचूलाऽऽवृतम्' पादाभ्यां आरभ्य मस्तकशिखापर्यन्तं छन्नम् । 15 'विबोधविधये' सम्यग्ज्ञानकर्मणे ।

[ 10 ] 16 'ओकसि' गृहे 'ओको निवास आवासो' इति [ है० कां० ४ श्लो०५७ ] 17 'भ्रमन्ती' 'भ्रमू' चलने इति धातोः शतृप्र-त्ययत्वात् स्त्रीलिङ्गस्य रूपम् । 18 'धृता' सम्भक्ता । 'धृङ्' सम्भक्तौ 'सम्भक्तिः संसेवा' इति धातोः क्तप्रत्ययस्य रूपम् । 19 'सारस्यात्' सरसस्य भावः सारस्यं तस्मात् । 20 तन्याद् 'तनूयी' विस्तारे इति धातोः आशीर्लिङ्के रूपम् ।

* P. स्थितं ।

स्वस्तिश्रीमति योगशालिमनसि स्थेयान् विमुक्तिस्त्रियाः
प्रेयान् यः प्रसुरद्भुतैरतिशयैः श्रेयान् विनेयान् प्रति ।
जेयान् कर्मरिपून् विजित्य सहसा मेयान् शिवस्याध्वनो
धेयान् बोधनयान् दिदेश सुदृशां पेयान् स नः श्रेयसे ॥ ११ ॥

स्वस्तिश्रीर्देवपूजोपहितहितकृतां दीप्रदीपाङ्कुराणां
व्याजाद् राजा सुराणामरुणकिरणभाग् या ढुढौके पुरस्तात् ।
सा नित्याऽऽसीद् यदंह्योर्दशनखरशिखावेशतोऽशेषतोयं
देवः श्रीवासुपूज्यः प्रथयतु परमानन्ददीपोत्सवं नः ॥ १२ ॥

स्वस्तिश्रीर्विमलाऽऽशयेऽनुरजति स्नानार्चदानादिभि-
र्भक्तिव्यक्तिमुपेयुषी जिनगुणोद्गानस्पृशां भूस्पृशाम् ।
यत्पादाब्जनखावलीमिषयलाल्लक्ष्मीप्रसूनप्रसू-
स्तत्कण्ठस्थितकण्ठिका किमु यदस्तेयं स देवो मुदे ॥ १३ ॥

स्वस्तिश्रीः समुपाश्रयत् किमु मिषाद् यत्कौङ्कुमाऽऽलेपजाद्
व्याख्यायां पुरुषोत्तमोऽयमिति तद्रागेण यस्य प्रभोः ।
गौरी देहरुचिं विचिन्त्य निचितामङ्गे ह्यनन्तप्रभो-
र्मास्त्वेषा पतिवल्लभेति हृदये स्पर्द्धाऽनुसंवर्धनात् ॥ १४ ॥

स्वस्तिश्रीः स्थिरतामुपैति नियतेः श्रीधर्मभक्ताऽऽत्मना-
मित्येषाऽत्र जनश्रुतिः श्रुतिभृता निश्चीयते स्वाख्यया ।
येनानन्तचतुष्टयी रसमयी भूताऽतिपूताऽऽत्मना
श्रीधर्मो भगवान् नवान् स विभवान् देयात् सतां सोत्सवान् ॥ १५ ॥

स्वस्ति श्रीविश्वसेनक्षितिधव ! भवते यस्य वंशोप्णकेतु-
र्हेतुः कीर्तेर्यमासेऽजनि जनितविपच्छान्तिरर्हन् स शान्तिः ।
राज्ञस्त्राणेऽपि लब्धे वियति नियतितः सैंहिकेयो हिनस्ती-
त्याभृत्याऽऽयस्य यस्य क्रमशरणमगाद्यस्य गोकर्णलपर्णः ॥ १६ ॥

---

[ १२ ] १ 'राजा' इत्यत्र तृतीया ।

[ १४ ] २ 'कौङ्कुमाऽऽलेपजाद् मिषाद्' कौङ्कुमाऽऽलेपमिषेण स्वस्तिश्रीराश्रिता इत्युत्प्रेक्षा । ३ 'गौरीदेहरुचिं' यथोऽयम-नन्तप्रभुस्तस्य गौरी भवानीदेहद्युतिमिषादाश्रिता, इयं बहु-तया वल्लभा । ४ 'अनन्तप्रभोः' अनन्तः शेषनागस्तदाभरण-त्वात् प्रभुस्तस्य ।

[ १६ ] ५ 'श्रीविश्वसेनक्षितिधव !' इति सम्बोधनम् । ६ भवते स्वस्ति अस्तु । ७ 'राज्ञः' चन्द्रस्य । ८ 'सैंहिकेयः' राहुः सिंहश्च । ९ 'आयस्य' आयासं उद्यमं विधाय । १० 'गोक-र्णलपर्णः' गोकर्णो मृगविशेषस्तस्य तर्णः बालः ।

---

[ 11 ] 1 'श्रेयान्' श्रेयः कर्ता । [ अस्मिन् श्लोके श्रेयांस-प्रभोः स्तवे तैरसौ मध्ये पदे 'श्रेयान्' इति शब्देन श्रेयांसनाथः सूच्यते ] 2 'शिवस्याध्वन' मोक्षस्य मार्गस्य ।

[ 12 ] 3 'स्तम्बर' नगर- वनः "करजे नखरोऽनु नखोऽस्त्री-" इति शब्दार्णवः [ कां० ३ श्लो० १०२ ]

[ 13 ] 4 'विमलाऽऽशये' निर्मलभावे अथवा विमलप्रभोः विषये । 5 'भक्त्यर्चादि-' इत्यस्य रीतिः 'अवदानं कर्म वृत्तम्' [ हैं० कां० ३ श्लो० ४७५ ]

[ 14 ] 6 'पुरुषोत्तम-' पुरुषश्रेष्ठः कृष्णश्च । 7 'अनन्तप्रभो-' अनन्तनाथस्य शम्भोश्च ।

[ 15 ] 8 'भूता' प्राप्ता । 'भुवः प्राप्तौ' २-४-१९ इत्यादिना णिचि भावयते प्राप्नोति इति 'भू'धातोः क्तप्रत्ययस्य रूपम् । 9 'अतिपूताऽऽत्मना' अतिपवित्रिताऽऽत्मना ।

[ 16 ] 10 'त्राणे' रक्षणे ।

स्वस्ति श्रीकुक्षयेऽस्तु स्तुतिशतमथवाऽवैतु वै तुष्टिभाजां
राजां स्वर्गस्य रम्भानटनघटनया धीरनीराजना सा ।
यस्यामद्यामकीर्त्तिस्त्रिभुवनविजयी चक्रभृत्तीर्थनाथः
पाथोधिर्बोधिवारां समजनि भगवान् कुन्थुनामाऽभिरामः ॥ १७ ॥

स्वस्तिश्रीहृदयप्रियैः सहृदयैर्योगीव यो गीयते
भोगी श्रीभरतस्य मुक्तसमरः श्रीमानरस्तीर्थकृत् ।
बिम्बे यस्य मणीमये सुमनसां स्रक् कण्ठगा संक्रमाद्
द्वे रूपे दधतीव वक्ति विमुतां तीर्थेशचक्रिश्रियोः ॥ १८ ॥

स्वस्तिश्रीर्भ्रमरीव यन्मणिमयाऽर्चासन्निधौ बम्भ्रमी-
त्युत्फुल्लस्रवमल्लिकासुमनसामामोदमेदस्वला ।
स्वच्छन्दादमरीगतागतविधौ जातप्रतिच्छन्दत-
श्छिन्द्यान्मल्लिजिनो जनेऽत्र वृजिनाज्जन्यान्यजन्यानि नः ॥ १९ ॥

स्वस्तिश्रीमुनिसुव्रतोऽभिदिशतादुद्दिश्य दिश्यं सतः
पद्मानन्दनसंज्ञयाऽङ्गमहसा विस्मारयन् स स्मरम् ।
यत्पादप्रणमन्नृनाकिमुकुटज्योतिर्जलान्तर्लल-
ल्लक्ष्मस्थः कमठोऽपि कर्मठ इव प्रोल्लासते चर्यया ॥ २० ॥

स्वस्तिश्री सरसी इवामृतरसाऽऽपूर्णे विभोर्लोचने
यन्नीलोत्पलवैभवं जगृहतुश्चित्रं न तत् किञ्चन ।
तेनैतन्नु सेवतेऽङ्कमिषतो यस्यांह्रिपङ्केरुहं
पुत्रः श्रीविजयस्य नः स विजयं पुष्याज्जिनेन्दुर्नमिः ॥ २१ ॥

---

[ १९ ] १ 'श्रीकुक्षये' श्रीनाम्न्याः राजपत्न्याः [ कुन्थुनाथप्रभोः मातुर्नाम श्रीरस्याः ] कुक्षये स्वस्ति अस्तु । २ स्वर्गस्य राज्ञां स्तुतिशतं सा तुष्टिः अवैतु प्राप्नोतु ।

[ १९ ] ३ 'अजन्यानि' ईतयः ।

[ २० ] ४ 'दिश्यं' दिग्भवं वस्तु । २ सतः सज्जनान् उद्दिश्य दिशतात् । ५ 'पद्मा' पद्मादेवी लक्ष्मीश्च ।

---

[ 17 ] 1 'चक्रभृत् तीर्थनाथः' चक्रवर्तित्वे तीर्थङ्करपदप्राप्तिः । 2 'पाथोधिः' समुद्रः । 3 'बोधिवारां' सम्यग्दर्शनरूपजलानाम् ।

[ 18 ] 4 'श्रीभरतस्य भोगी' षट्खण्डभारतस्य भोक्तृत्वेन चक्रवर्ती । 5 'मुक्तसमरः' इति स्थाने 'नन्दितनरः' इति पाठान्तरं मूलप्रतौ दर्शितम् ।

6 श्रीमान्, अरः, तीर्थकृत्, इति पदविभागः । 7 'अरः' अरनाथप्रभुः । 8 'सुमनसां' देवतानाम् । 9 'संक्रमाद्' प्रतिबिम्बनात् । 10 'तीर्थेशचक्रिश्रियोः' तीर्थकृत् चक्रवर्ती च तयोः श्रीः लक्ष्मीस्तयोः ।

[ 19 ] 11 'बम्भ्रमीति' 'भ्रम्' चलने इति धातोः यङ्लुगन्तस्य रूपम् । 12 'आमोदमेदस्वला' सुगन्धेन मेदुरा । 13 'वृजिनात्' पापात् । 14 'जन्यानि अजन्यानि' उत्पादितानि अजन्यानि ईतयः ।

[ 20 ] 15 "पद्मानन्दन" पद्मायाः नन्दनः पुत्रः कामदेवः 16 "नृनाकिमुकुट" मनुष्यदेवतानां मुकुटः शिरस्त्राणः ।

17 'कमठः' कच्छपः 'कच्छपः कमठः कूर्मः' इति [ है० कां० ४ श्लो० ४१४ ] प्रभोः कूर्मलाञ्छनयुक्तत्वात् । 18 'चर्यया' पूजया ।

[ 21 ] 19 'सरसी' कासारः 'कासारः सरसी सरः' इति [ है० कां० ४ श्लो० १६० ] 20 'अङ्कमिषतः' लाञ्छनव्याजात् [ नमिनाथप्रभोर्लाञ्छनं पद्ममिति प्रसिद्धिः ]

स्वस्ति श्रीपतिना त्रिखण्डभरते साम्राज्यरूपं रया-
ल्लेभे वैरिबलं विजित्य सकलं यस्याङ्गसाहाय्यकात् ।
सर्वाङ्गीणशिवाय सोऽस्तु भगवान् नेमिः शिवानन्दनो
भास्वाँश्चारुसुदारुशैलशिखरे नित्योदयश्रीमयः ॥ २२ ॥

स्वस्तिश्रीसुखसंततिः शुभमतिर्विद्याऽनवद्या स्थितिः
नित्यं सज्जनसंगतिः शिवगतिः साम्राज्यलक्ष्मीः स्थिरा ।
यस्य श्रीपरमेश्वरस्य चरणाम्भोजन्मसंसेविनां
स श्रीपार्श्वजिनोऽष्टसिद्धिविषये ध्येयस्त्रिसन्ध्यं बुधैः ॥ २३ ॥

स्वस्तिश्रीरनुगामिनी बहुरसा स्यात् कामिनीयाऽऽहता
विघ्नानां विलयस्तथा रिपुजयः क्षुद्रादिभीतिक्षयः ।
यस्य श्रीत्रिजगत्पतेः स्मृतिकृतां पञ्चास्यलक्ष्मा प्रभुः
श्रीवीरोऽतिगभीरधीरचरितैः पायादपायात् स नः ॥ २४ ॥

येषां विशेषाङ्गभृतां प्रवृत्तैरनेकपानामिव गर्जितानाम् ।
धैर्यं धियां स्यान्निजपाक्षिकाणां ते गौतमाद्या गणिनो जयन्तु ॥ २५ ॥

यदङ्गशोभा त्रिपदीनिबन्धाद्धस्तेन येषां सकलार्थसिद्धिः ।
जात्येव भद्रा गणनायकास्ते महेन्द्रभूतिप्रमुखाः सुखाय ॥ २६ ॥

---

[२५] १ 'विशेषाङ्गभृताम्' विशेषेण महाकायानां पक्षे आचाराद्यङ्गधारिणाम् । 'प्रवृत्तैः' प्रवृत्तिः वार्त्ता तस्याः [ 'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः' इति है० कां० २ श्लो० १७४ ] पक्षे दानवारितस्य । २ 'अनेकपानाम्' अनेकान् पान्ति इत्यनेकपास्तेषाम् । पक्षे [ गजानाम् ] ३ 'गर्जितानाम्' मत्तानाम् [ 'मत्ते प्रभिन्न गर्जितौ' इति है० कां० ४ श्लो० २८६ ] ४ 'धैर्यम्' साहसं पाण्डित्यञ्च ।

[२६] ५ 'त्रिपदी' गात्रबन्धः उत्पादादि [ उत्पादव्ययध्रौव्यादि ] पदत्रयी वा । ६ 'हस्तेन' शुण्डादण्डेन पाणिना वा । ७ 'महेन्द्रभूतिप्रमुखाः' इन्द्रभूत्याद्याः [ गणधराः ] शक्रादयो प्रभृतयः ।

---

[22] 1 '॰श्रीपतिना' कृष्णेन । [ अस्मिन् श्लोके इतिवृत्तं वर्त्तते तद् यथा-कृष्णजरासन्धयोर्युद्धप्रसङ्गे यादवसैन्यं जरासन्धेन जराग्रस्तं कृतं तेन नेमिनाथसदर्शितमूर्त्याः स्नात्रजवारि आनेतुं कृष्णं आदिशेत् । कृष्णस्य प्रत्यागमनं यावत् नेमिनाथः स्वस्य भुजबलेन शत्रुसैन्यमरुणत् । वारि आनीय कृष्णेन सैन्यं जराविमुक्तं कृतं पश्चात् शत्रुसैन्य विजित्य जयलक्ष्मीं लेभे इति । 2 'सुदारु' 'सुदारुः पारियात्रकः' इति [ है० का० ४ श्लो० ९७ ] अत्र वने रैवतक इष्टः पर सुदारुशैलः पारियात्रकस्य वाचकः, न रैवतकस्य । कविना कुत्रचिद् सुदारुशब्दः रैवतकवाची दृष्टः स्यात् तेनात्र प्रयोजितो ज्ञायते ।

[23] 3 'अष्टसिद्धिविषये' अणिमाद्यष्टसिद्धिविधानार्थम् । अष्टसिद्धयस्तावद्—

"लघिमावशिते शित्वं प्राकाम्यं महिमाऽणिमा ।
यत्रकामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥
[ इति है० कां० २ श्लो० ११६ ]

[25] 4 'पञ्चास्यलक्ष्मा' सिंहलाञ्छनः । 5 'अपायात्' विघ्नात् पापाद् वा ।

[25] 6 'गौतमाद्याः' गौतमगणधरादयः ।

[26] 7 'यदङ्गशोभा' यस्य शरीरकान्तिः पक्षे यस्य प्रभोः आचाराद्यङ्गानां कान्तिः । 8 'त्रिपदी द्वयोरग्रजङ्घयोः पश्चिमजङ्घायां गजस्य बन्धनम् 'त्रिपदी गात्रयोर्बन्ध एकस्मिन्नपरेऽपि च' इति [ है० कां० ४ श्लो० २९६ ] 9 'सकलार्थसिद्धिः' समग्रवस्तूनां सिद्धिः । 10 'जात्येव भद्राः' भद्रजातिकाः हस्तिषु भद्रजातिकाः गजाः श्रेष्ठा गण्यन्ते । पक्षे स्वभावेन ऋजुप्रकृतिकाः ।

एकोऽपि सूरिर्धनराशिभर्त्ता यदाऽऽगमो राजगृहे शुभाय ।
पद्मप्रसादाज्जगतीं पुनाना वन्द्या न किं सूरिपरम्परा सा ? ॥ २७ ॥
सरस्वती सन्निहिता हिताय जडेऽपि पद्माऽभ्युदयेन भूयात् ।
आनन्दनीया कविना विनोदैर्या राजहंसैः सरसोह्यतेऽर्थे ॥ २८ ॥
ये संयता अप्यपरस्य बन्धं विनाशनं वा जनयन्त्यवश्यम् ।
दूरेण हेया न मुमुक्षुणा किं ते शृङ्खलाऽभासि खलाः फलार्थे ॥ २९ ॥
असङ्कूल्यकूटैः स्वपुटाः प्रपातस्थानानि भीमा विलसन्महेभ्यः ।
सदोचगोत्रा अपि मेखलाऽङ्का हिताय तेषां भुवि पक्षपातः ॥ ३० ॥
युक्तोऽतिजिह्मैर्विटपैरगम्यः प्रवृत्तिहेतुर्बहुनिम्नगानाम् ।
गोत्राधरोऽप्यायतमेखलो यस्तस्मिन् वरत्राशिखराधिरोहः ॥ ३१ ॥

[ पाठान्तरम् ]

जगज्जुगुप्सुः समितिप्रयोगी सदाप्यसाधुर्मलहृद् विरागः ।
स्फुरद्गुणग्रामकथासु मौनी निर्बन्धभेदं न विवेद किं सः ॥ ३२ ॥

---

[२७] १ 'सूरिः' गुरुः । २ 'धनराशिभर्त्ता' धनसमूहं पुष्णाति । ३ 'यदाऽऽगमः' यस्य सूरेरागमः सिद्धान्तः । ४ 'राजगृहे' राजगृहनामनगरे । ५ 'शुभाय' [ कल्याणाय ] अभूदिति शेषः । पक्षे–'यदाऽऽगमः' यस्य गुरोः आगमनम् । 'राजगृहे' चन्द्रगृहे कर्कराशौ उच्चस्थानत्वात् । ६ 'पद्मप्रसादाद्' पद्मानि वासकादीनि प्रदानात् ।

[२८] ७ 'सरस्वती' सरस्वती देवी । ८ 'सन्निहिता' योजिता । ९ 'जडे' मादृशे मूर्खे । १० 'पद्माऽभ्युदयेन' लक्ष्मीवर्धनेन । ११ 'आनन्दनीया' वर्द्धनीया । १२ 'कविना' पण्डितेन । १३ 'राजहंसैः' राजसु हंसैः श्रेष्ठैः । १४ 'अर्थे सरसा' इति ॥

[ पक्षे 'सरस्वती' वाणी । 'जडेऽपि' जडेऽपि । 'पद्मा' लक्ष्मीः शोभा इति यावत् । 'राजहंसैः' चन्द्रसूर्यैः । 'उह्यते' धार्यते । चन्द्रार्कमण्डले शिरसिव । 'सरस्वती' नदी । 'जडे' जले [ 'डलयोरैक्यम्' इति नियमात् ] । 'कविना' ब्रह्मणा । देवीपक्षेऽपि राजहंसैः उह्यते निगृह्यते ]

[२९] १५ 'संयता' अन्योऽन्यं बद्धा । १६ 'अपरस्य बन्धं जनयन्ति' १७ 'विनाशनम्' अशनं भोजनं विना ।

[ पक्षे 'संयताः' संयमकुशलाः । 'अपरस्य बन्धम्' काव्यादिसंदर्भम् । 'विनाशनं जनयन्ति' विनाशं प्रापयन्ति ॥

[३०] १८ 'कुटैः' कूटानि शिखराणि छलानि वा । १९ 'स्वपुटाः' विषमोन्नताः । २० 'प्रपातस्थानानि' प्रपातोऽवटः स्खलितं वा तदास्पदम् । २१ 'भीमाः' रुद्राः । २२ 'विलसन्महेभ्यः' बिल सद्, महा, इभ्य, इति पदविभागः [ बवयोरैक्यमिति ] बिले सीदन्तीति बिलसदः सर्पाः महामहिषास्तेभ्योऽपि । २३ 'सदोचगोत्रा' विशिष्टवंशा अपि । २४ 'मेखलाऽङ्काः' मे, खल, अङ्का, इति पदविभागः । 'मे' मम, 'खलाङ्काः' खलशब्द, अङ्कश्चिह्नं लक्षणं येषां ते ॥

[३१] २५ 'अतिजिह्मैः' अतिवक्रैः । २६ 'विटपैः' विटपाः शाखाः दुर्जनाश्च तैः । २७ 'प्रवृत्ति' शिक्षाकरः । २८ 'निम्नगानाम्' असन्मार्गगानां पुंसाम् । २९ 'गोत्राधरः' भूधरो गोत्रेण हीनो वा । ३० 'अप्यायतमेखलः' अधिकं आयता मेखला यत्र । अधि, आयतमे, खलः, इति पदविभागे प्रवृत्तः अध्यायः अध्यायतमस्तत्र खलः दूषकः । ३१ 'तस्मिन् वरत्राशिखराधिरोहः' तस्मिन् वरत्रया रज्ज्वा शिखरेऽधिरोहः । वर, त्रासि, खरे, ऽधिरोहः, इति पदविभागे त्रासोऽस्मिन्नस्तीति त्रासी [ त्रासयतीति त्रासी इत्यर्थः ] खरेऽधिरोहो वरम् ॥

[३२] ३२ 'जगज्जुगुप्सुः' संसारनिन्दकः संसाररक्षको वा । ३३ 'समितिप्रयोगी' समितय ईर्याद्याः समितिः कलहः [ समितिप्रयोगी रणतत्परः ] ३४ 'सदाप्यसाधुः' सदामाप्यः सेव्यः [ प्राप्योऽभिगम्य इति यावत्; साधुः सज्जनः ] ३५ 'मलहृत्' मलं पापं हरति पक्षे मलो देवादिपूजायामभावस्तद्वत् हृदयं यस्य सः; पक्षे पापहृत् ] ३६ 'गुणग्रामकथासु' गुणभाजनरूपास्वपि ग्रामकथासु । पक्षे गुणगणमूहवार्तासु । ३७ 'मौनी' अभाषकः देशकथानिषेधात् । ३८ 'निर्बन्धभेदः' निबन्धः कर्मबन्धस्तस्य प्रकारं पक्षे काव्यादिदोषम् । ३९ 'विवेद' वेत्ति ।

---

[30] 1 'अखिलगद् महेभ्यः' महेभ्यः महाऽऽढ्याः लक्ष्मीपतन् अखिलगद् विलासं करोति स । 2 'गोत्राः' पर्वताः । 3 'मेखला' कटिसूत्रं पर्वतस्य मध्यभागो वा । 4 'पक्षपातः' पक्षे पातः पक्षयो वा पातः नाश इति यावत् ।

[31] 5 'निम्नगानाम्' सरिताम् 'स्रोतस्विनी धुनी सिन्धुः स्रवन्ती निम्नगाऽऽपगा' इति [ धनञ्जयः श्लो॰ २४ ]

[32] 6 'अपरः' 'अपरापरः हीनपश्चिमे' इति [ दे॰ वर्ग २ श्लो॰ ११ ]

प्रयान्ति ये प्रेम जनेष्वपूर्वं वैधेयराजोऽपि विना निमित्तम् ।
परस्य वैकृत्यनिबद्धचित्तास्ते सज्जनाः सन्तु मयि प्रसन्नाः ॥ ३३ ॥
मुखे निबन्धस्य खलप्रवृत्तिं बुधाः सुधावन्न मुधाऽऽद्रियन्ते ।
स्रवेद् विनैतां विलसत्पदा गौरसौ रसौघं न यतोऽद्भुताऽपि ॥ ३४ ॥
स भासतामन्यगुणानुरागः सभा सतामुल्लसतीव यस्मात् ।
प्रमोदयं प्राप्य गवां रहस्ये प्रमोदयन्ती हृदयं कवीनाम् ॥ ३५ ॥
लभ्याः कवीनां सुकृतैः पुराणैः सभ्याः कृपापूर्णदृशं दिशन्तु ।
यथाऽब्जबन्धुप्रभयेव लोकोऽपदोषवृत्तिर्गिरिसानुरागः ॥ ३६ ॥
जगद्गुरूणामतिगौरवेणाभिनम्य सम्यक् चरणारविन्दम् ।
प्रारभ्यतेऽपूर्वधियाऽनुभाव्यं श्राव्यं मया 'दिग्विजयाख्यकाव्यम्' ॥ ३७ ॥

इहास्ति जम्बूपपदः प्रथीयान्, द्वीपोऽवनीपः सकलाश्रयाणाम् ।
प्रदीपरूपः स्वसमीपवृत्त्योरूर्ध्वस्थिताऽधः स्थितलोकयोर्यः ॥ ३८ ॥
स्वर्णाऽऽतपत्रप्रतिमं सुमेरुमुच्चैर्दधानः क्षितिभृत्प्रधानः ।
शीतातिशीतोदकयो रयाभ्यां कृतोत्तरासङ्ग इवैष रेजे ॥ ३९ ॥

---

[ ३३ ] १ 'अपूर्वं प्रेम' अमेमो द्वेष इत्यर्थः ।
२ 'वैधेयराजोऽपि' मूर्खवरा अपि पक्षे विधेय एव वैधेयो विनयी तद्राजोऽपि । विनयकराः सन्तः । ३ 'विना निमित्तम्' निष्कारणं स्वार्थं विना पक्षे निरर्थकम् ।
४ 'परस्य वैकृत्यनिबद्धचित्ताः' परदूषणदक्षमनसः पक्षे वै निश्चितं परस्य कार्यानुरागिमनसः ।

[ ३४ ] ५ 'गौः' वाणी सुरभिश्च ।
[ ३५ ] ६ 'सभा सतामुल्लसतीव' सतां सभा उल्लसतीव ।
७ 'प्रमोदयम्' ज्ञानोदयम् ।
[ ३६ ] ८ 'अपदोषवृत्तिः' अपगता दोषवृत्तिर्यस्मात् सः ।
९ 'गिरिसानुरागः' इति समस्तपदे पर्वतेषु सानूनां शिखराणां रागो लोहितिमा ।

---

[ 33 ] 1 'वैधेय°' वैधेयो मूर्खः 'वैधेयो मातृशासितः' इति [ है० का० ३ श्लो० १६ ] 'वैधेय' विनयस्थः 'विधेये विनयस्थ-स्मात्' इति [ है० का० ३ श्लो० ९६ ]

[ 34 ] 2 'मुखे' प्रारम्भे । 3 'निबन्धस्य' ग्रन्थस्य । 4 'खल-प्रवृत्तिम्' दुर्जनप्रवृत्तिम् ।

5 'बुधा.' पण्डिताः कवयः ग्रन्थकर्तार इति यावत् ।

6 'आद्रियन्ते' गृह्णन्ति । 7 'विलसपदा' विलसन्ति पदानि पादा वा यस्यां सा । 8 'रसौघम्' शृङ्गारवीरादिरसानां ओघः प्रवाहः ।

[ 35 ] 9 'भासताम्' दीप्यताम् 'भासि' दीप्तौ इति धातोः पञ्चम्याः रूपम् । 10 'अन्यगुणानुराग.' अन्येषां गुणानामनुरागः प्रीतिः । 11 'गवाम्' वाणीनाम् । 12 'प्रमोदयन्ती' आनन्दयन्ती प्रमोदं कुर्वन्ती ।

[ 36 ] 13 'कृपापूर्णदृशम्' कृपया प्रसादेन पूर्णाश्च ते दृशस्तम् । अथवा कृपाविजयः इति स्वगुरोर्नाम स्मृतम् । 14 'अब्जबन्धु-प्रभया' सूर्यकान्त्या । अथवा चरित्रनायकस्य 'प्रभ' इत्यनेन श्रीप्रभ-सूरेः स्मरणम् । 15 गिरि सानुराग इति पदविभागे 'गिरि' वाण्याम् । 16 'सानुराग.' अनुरागेण प्रीत्या सह वर्तमान इति ।

[ 37 ] 17 'जगद्गुरूणाम्' जगतो गुरवस्तेषाम् । अत्र 'जगद्गुरु' इत्यनेन हीरविजयसूरेः स्मरणं संभाव्यते तस्य तथाविधबिरुदत्वात् ।

18 'अपूर्वधिया' अपूर्वबुद्ध्या अथवा 'पूर्वधिया' इति पदत्वे पूर्वेषां बुद्ध्या यथा पूर्वैः कथितं तथैव ।

19 'अनुभाव्य' स्वयमनुभूयमानं चरित्रविषयं स्वं प्रयुज्येति ।

20 'श्राव्यम्' श्रोतुं श्रावयितुं वा योग्यम् ।

[ 38 ] 21 'जम्बूपपद.' उप समीपे पूर्वं वा पदस्येत्युपपदं जम्बू उपपदं यस्य सः । जम्बूतरुप्रधानत्वाज्जम्बूद्वीपः ।

22 'प्रथीयान्' विस्तृतः । '°योजनशतसहस्रविष्कम्भो जम्बूद्वीपः' इति [ तत्त्वार्थः ३–९ ] 23 'अवनीपः' अवनीं पृथ्वीं पाति रक्षतीत्यवनीपः राजा ।

[ 39 ] 24 'स्वर्णातपत्रप्रतिमम्' सुवर्णस्य छत्रतुल्यम् । 25 'क्षितिभृत्प्रधान.' पर्वतेषु श्रेष्ठः । 26 'शीतातिशीतोदकयोः' शीतलातिशीतलजलयुक्तयोः 'शीता' 'अतिशीता' इति नाम्नी नद्यौ 27 'रयाभ्याम्' वेगाभ्याम् । 28 'उत्तरासङ्गः' प्रावारः "वैकक्षं प्रावारोत्तरासङ्गौ बृहतिकाऽपि च" इति [ है० कां० ३ श्लो० ३३९

रत्नप्रभायाः प्रथमांशरूपे सिंहासनेऽयत्ननिबद्धरत्ने ।
यस्तस्थिवान् दिग्चरकन्यकाभिर्व्याधूयमानानिलचामरश्रीः ॥ ४० ॥
वेलाऽवलास्तुङ्गतरङ्गहस्तैः पयोनिधेर्यं समवाकिरन्ति ।
समीरनुन्ना मणिमौक्तिकानां व्रजेन वर्द्धापनयोजितेन ॥ ४१ ॥
यः स्वैर्मणीभिर्नगराजजन्यैर्नदीमहावेगलघुप्रयुक्तैः ।
रत्नाकरत्वं जलधेर्विधत्ते समानयोन्यांय्यतमौचितीयम् ॥ ४२ ॥
किं स्वर्निवासः स्फुटतामुपैति तारावताराग्निशि भीतभीतः ।
क्वचित् प्रभाते प्रपलाय्य याति स्थानेऽधिपः कौशिक एव तस्य ॥ ४३ ॥
स्वर्गेऽपि सम्भाव्य भियाऽसुराणां चलाचलत्वं तदिदं सुराणाम् ।
पुरीं सुमेरोः शिखरेऽध्युवास द्वीपाधिराजः शरणं प्रपद्य ॥ ४४ ॥
एकैव सिन्धुर्वनमेकमेव सरोऽपि चैकं दिवि वेद्यते ज्ञैः ।
द्वीपे सहस्रप्रमितास्तटिन्यः कोटिः प्रमाणं सरसां वनानाम् ॥ ४५ ॥
मन्यामहे द्वीपवरे ह्यमुष्मिन् महौषधीमृत्पयसां विशेषम् ।
इन्द्राभिषेके तत एव तेषामादित्सयाऽऽयान्ति सुरा धरायाम् ॥ ४६ ॥
रसो न तादृक् दिवि देवभोज्ये सुधान्धसो द्वीपमुपेत्य तस्मात् ।
जोहूयमानं हविरास्वदन्ते जाज्वल्यमाने ज्वलने प्रविश्य ॥ ४७ ॥
तावद् विमानस्थललक्षपूर्णस्वर्गस्य लक्ष्मीविजयस्य चिह्नम् ।
द्वात्रिंशदेते विजया विभान्ति द्वीपे जिनानां जनुषाऽतिपूताः ॥ ४८ ॥
यत्प्राभृतं काञ्चनभूमिभागे तारावतारात् त्रिदिवं करोति ।
मुक्तामयेऽराजत कुम्भशोभा तत्रेन्दुबिम्बप्रतिबिम्बनेन ॥ ४९ ॥
दिवा विभूतिर्बहुधैव यस्य द्वीपाधिराजः प्रतिभाति रत्नैः ।
तैस्तसंवरे रात्रिचरोडुरत्नैः स्वर्गस्य शोभाऽभिनिवेशलेशः ॥ ५० ॥

---

[ 40 ] 1 'रत्नप्रभायाः' 'रत्नप्रभा' इति प्रथमनरकस्थित-पृथिव्या नाम तस्याः । "अथ रत्नप्रभा घर्मा" इति हैमः [ अभि० चिं० कां० ५ श्लो० ३ सिलशेषे श्लो० १ ] ।

[ 41 ] 2 'समीरनुन्नाः' पवनेन क्षिप्ताः । 3 'व्रजेन' समूहेन । 4 'वर्द्धापन°' वधामणी इति भाषायाम् ।

[ 42 ] 5 'नगराजजन्यैः' पर्वतराजोत्पन्नैः । 6 '°रत्नाऽऽकरत्वम्' रत्नानामाकरस्तस्य भावः । 7 'समानयोः' नदीपर्वतयोः ।

[ 43 ] 8 'कौशिकः' इन्द्रः 'कौशिकः पूर्वदिग्देवाऽप्सरःस्वर्गेशचीपतिः' इति हैमः [ अभि० चिं० कां० २ श्लो० ८७ ] ।

[ 44 ] 9 'पुरी' अमरावती [अभि० चिं० कां० २ श्लो० ९२]

[ 45 ] 10 'सिन्धुः' स्वर्गङ्गा । 11 'वनम्' नन्दनम् [ अभि० चिं० कां० २ श्लो० ९२ ] 12 'सरः' नन्दीसरः [ अभि० चिं० कां० २ श्लो० ९२ ] 13 'ज्ञैः' बुधैः । 14 'तटिन्यः' नद्यः ।

[ 46 ] 15 'महौषधीमृत्पयसाम्' महती चासौ औषधी च महौषधी मृच्च पयश्च इति ।

[ 47 ] 16 'सुधान्धसः' सुधाऽमृतमन्धोऽन्नं भोज्यं येषां ते देवाः 'अन्धः पीयूषममृतं सुधा' इति हैमः [ अभि० चिं० कां० २ श्लो० ३ ] ।

17 'जोहूयमानम्' अतिशयेन हूयमानम् 'हुंक्' दानादनयोः [ दानमत्र हविष्प्रक्षेपः, अदनं भक्षणम् ] इति धातोः यङि कृते आनश् प्रत्ययस्य रूपम् । 18 'ज्वलने' अग्नौ ।

[ 48 ] 19 'विजयाः' महाविदेहस्थितद्वात्रिंशद्विजयाः ।

20 'जनुषा' जन्मना [ अद्यापि विंशतिविहरमानजिनानां विदेहे जन्मसम्भवात् ] ।

[ 49 ] 21 '°प्राभृतम्' ढौकनम् ।

[ 50 ] 22 'तत्संवरे' तत्पिधाने ।

23 'रात्रिचरोडुरत्नैः' रात्रिचरश्चन्द्रः, उडूनि ताराश्चेति रात्रिचरोडूनि एव रत्नानि तैः ।

24 'अभिनिवेशलेशः' ईषद् निर्बन्धः 'निर्बन्धोऽभिनिवेशः स्यात्' इति हैमः [ अभि० चिं० कां० ६ श्लो० १३६ ] ।

यद्रूपणानां मणिमौक्तिकानां रात्रौ वियद्दर्पणबिम्बितानि ।
उत्पश्यतो नश्यति रूपगर्वः स्वर्गप्रदेशस्य तदैव सर्वः ॥ ५१ ॥

कविर्बुधो वा गुरुरेक एव स्वर्गे हरेर्मानसरञ्जनाय ।
समुद्भवन्त्यत्र सहस्रशस्ते कस्तेन नाकस्य तुलाविमर्शः ॥ ५२ ॥
द्वीपेन सार्धं तुलने गुणौघैर्यदूर्ध्वलोके लघुता बभूव ।
तेनायमुच्चैः स्थिरतामवाप निदर्शयन् स्वं त्रपया निशीव ॥ ५३ ॥

अत्याकुलो भोगिकुलेन नागलोको द्विजिह्वाऽऽश्रयदोषबुद्ध्या ।
अधःकृतोऽतः परितापयोगाद् विषोपशान्त्यै पवमानमत्ति ॥ ५४ ॥
न-वस्तुतः कश्च न-भोगभावादमुष्य लक्ष्म्यास्त्रिदिवेऽतिरेकः ।
नक्षत्रलोकस्पृशि सम्भृतस्य जनेन सत्सङ्गरसङ्गतेन ॥ ५५ ॥
श्रीनन्दनोऽप्यङ्गविभासरङ्गः कृष्णो न यस्मिन् ननु जिष्णुलोकः ।
न रुद्रता कापि महेश्वरेषु द्वीपोऽतिशेते स्वगुणैः स्वरेवम् ॥ ५६ ॥
घनेऽपि रम्भाः शतशोऽधिपार्श्वं नृणां सुखायाप्सरसां प्रसङ्गे ।
नासत्यरूपा जनता समाऽस्मिन् द्वीपः कथं स्वर्गजयाय नालम् ॥ ५७ ॥
द्विजाधिराजेऽपि कलङ्कपङ्कः सूरेऽपि यत्र ग्रहणप्रसङ्गः ।
भोक्ता पुराणः पुरुषो रमायाः स्वर्वाससौख्यं त्वियतैव गम्यम् ॥ ५८ ॥

कलाविलासः सततं द्विजेशे सूरेऽत्र निर्दोषसुवृत्तभावः ।
लक्ष्म्या नु रागः पुरुषोत्तमानां द्वीपस्य न स्वर्विषयः प्रतीपः ॥ ५९ ॥
राजाऽपि कन्यां परिभोक्तुमीष्टे गुरोः कवेः काऽत्र नये जुगुप्सा ।
प्रभाकरो मीनमजं च भुङ्क्ते स्ववासिनां धर्मकथाऽन्यथाऽसौ ॥ ६० ॥

---

[५५] १ 'न वस्तुतः' नव । स्तुतः इति पदविभागे नवीनस्तुतः वर्णितः । २ 'कश्चन भोगभावात्' कश्च । नभोगभावात् । इति पदविभागे देवसद्भावात् । ३ 'अमुष्य' जम्बूद्वीपस्य । [ 'कश्च । न । भोगभावात्' इति पदविभागे कश्च न अस्ति । पक्षे अमुष्य द्वीपस्य भोगभावात् अतिशयः कश्चन वस्तुतः स्वर्गेऽपि नास्ति ] ४ 'त्रिदिवे' स्वर्गे । ५ 'अतिरेकः' अतिशयः । ६ 'नक्षत्रलोकस्पृशि' दिवि । ७ 'सत्सङ्गरसङ्गतेन', सतां सङ्गस्य यो रसस्तं प्राप्तेन; अथवा सन् यः सङ्गरे व्याकरणस्तत्र सङ्गतो मिलितस्तेन ॥

[५६] ८ 'श्रीनन्दनः' व्यवहारी पक्षे स्मरः ।

[५७] ९ 'अप्सरसाम्' अब्युक्तानि सरांसि तेषाम् । १० 'नासत्यरूपा' नासत्यावश्विनीकुमारौ तद्वद् रूपं यस्याः सा ।

---

[52] 1 'कवि.' शुक्रः । 2 'बुध ' सौम्यः । 3 'गुरुः' बृहस्पतिः । 4 'हरेः' इन्द्रस्य । 5 'नाकस्य' स्वर्गस्य । 6 'तुलाविमर्शः' तुलनाविचारः ।

[54] 7 'भोगिकुलेन' सर्पकुलेन । 8 'नागलोक.' नागकुमारदेवतागणः ।

[56] [ स्वर्गे स्मरस्यानङ्गत्वम् कृष्णस्य कृष्णत्वम्; रुद्रस्य महादेवस्य रुद्रता अस्ति ] परमत्र द्वीपे [ परिहारस्वरूपे ] 9 'अङ्गविभासरङ्गः' व्यवहारी लोकः 10 'जिष्णुलोकः' विजयिलोक. कृष्णो न । 11 महेश्वरेषु महाऽऽढ्येषु रुद्रता न । तस्मात् द्वीपः स्वगुणैः स्वरं स्वर्गमतिशेते ।

[57] 12 'रम्भाः' कदल्यः अप्सरसश्च ।

13 'नासत्यरूपा' सर्वैद्यरूपा, असत्यरूपा न ।

[58] 14 'द्विज०' द्विजः चन्द्रमाः । 15 'सूरे' सूर्ये । 16 'ग्रहणप्रसङ्ग.' राहोः ग्रसनप्रसङ्गः । 17 'पुराणः पुरुषः' ब्रह्मा । 18 'रमाया.' लक्ष्म्याः स्वपुत्र्या भोक्तेति प्रसिद्धिः ।

[59] 19 'कलाविलासः' चतुःषष्टिकलानां विलासः वैभवः । 20 'द्विजेशे' ब्राह्मणश्रेष्ठे । 21 'सूरे' सूर्ये, 'शूरे' वीरे ।

22 'निर्दोषसुवृत्तभावः' निर्गतः दोषः यस्मात् स निर्दोषः । सुवृत्त- सु वृत्तं चरित्रं यस्य सः सुवृत्तः । निर्दोषश्च सुवृत्तश्च निर्दोषसुवृत्तयोः भावः । 23 'प्रतीप.' प्रतिकूलम् ।

[60] 24 'राजा' चन्द्रस्तस्य कन्याराशेर्परिभोगत्वात् । 25 'गुरोः' बृहस्पतेः । 26 'प्रभाकरः' सूर्यः ।

क्ष्माधराणां गुरुतां प्रपन्नो जनः प्रवृत्तिं भजते सुशीलाम् ।
कलाधरोऽधःकुरुते भवाङ्गं द्वीपे ह्यसौ धार्मिकताऽसधर्मा ॥ ६१ ॥
पराक्रमाऽऽक्रान्तदिगन्तरालौ द्वीपस्य बाहू इव तौ विशालौ ।
शैलाधिराजौ निषधोऽथ नीलः पूर्वापरायामधरौ धरायाम् ॥ ६२ ॥
तन्मध्यगं भाति विदेहवर्षं विचित्ररूपैर्विजयैः सहर्षम् ।
द्वीपश्रियाऽमण्डि दुरोदराङ्कस्तद्व्याजतस्त्वर्द्धितयीजयाय ॥ ६३ ॥
नीलाद्रिणाऽमा निषधाचलेनाऽन्योऽन्यं युयुत्सावशतो न्यताधि ।
स्वं स्वं भुजद्वन्द्वमिवैतदन्ताचकासिरे ते किल हस्तिदन्ताः ॥ ६४ ॥
माध्यस्थ्यमास्थाय किमन्तरेऽस्थाद् नगाधिराजोऽतिमहान् सुमेरुः ।
नमेरुरूपैः कलितोऽपि चित्रं महात्मनां स्यादयमेव भावः ॥ ६५ ॥
अपारिजातोऽपि सपारिजातस्त्रैलोक्यलक्ष्म्या इव नाभिभूतः ।
युक्तो वनैरप्यवनः सुराणां रराज राजेव स शैलराजः ॥ ६६ ॥
राशिर्मणीनां रमणीयभावं नीतः सुरैः क्रीडनहेतवे किम् ।
गर्तीभवंस्तेन जलैरपूरि स भूरिभिर्वारिनिधिप्रतीत्या ॥ ६७ ॥
क्वचित् स्फटिकसानुभिर्धवलभावमुद्भावयन्
क्वचिच्च बहुधातुभिर्बहलशोणिमानं वमन् ।
क्वचिन्मणिमरीचिभिर्धनुरथैन्द्रमुल्लासयन्
करोति सुरयोषितां मनसि मान्मथोद्दीपनम् ॥ ६८ ॥

---

[ ६१ ] १ 'भवाङ्गम्' क्रोधादिपक्षे ईश्वरदेहम् ।

[ ६६ ] २ 'अपारिजातोऽपि' [ अपारीणि बहूनि जातानि समूहाः प्रक्रमात् तरूणां तिरश्चां वा यत्र ] अपगतानि [ रत्नयोरैक्यपक्षात् ] आलिजातानि अनर्थसमूहा यत्र 'आलिः सख्यावली सेत्वनर्थेषु विशदाऽऽशये' इत्यनेकार्थः ।

३ 'अवनः' सुराणां तर्पकम् । 'प्रीणनेऽवनतर्पणे' इति हैमः [ अभि० चिं० कां० ६ श्लो० १३८ ]

---

[ 61 ] 1 'क्ष्माधराणाम्' पर्वतानां तपस्विनां च । 2 'कलाधरः' चन्द्रः । 3 'अधःकुरुते' तिरस्कुरुते ।

[ 62 ] 4 'निषधः' 'नीलः' इत्याख्यौ पर्वतौ । 5 'पूर्वापरायाम्' पूर्वायां पश्चिमायां दिशि । 6 'अधरौ' ओष्ठौ ।

[ 63 ] 7 'विदेहवर्षम्' विदेहनामकं क्षेत्रम् । 8 'विजयैः' द्वात्रिंशद्विजयैः ।

9 'अमण्डि' अशोभि । 10 'दुरोदराङ्कः' द्यूतस्य पाशकः । 'दुरोदरं कैतवं च द्यूतमक्षवती पणः' इति हैमः [ अभि० चिं० कां० ३ श्लो० १५० ] ।

[ 64 ] 11–12 'नीलाद्रि'–'निषधाचल'–इति नामकौ पर्वतौ । 13 'युयुत्सा' योद्धुमिच्छा युयुत्सा । 14 'न्यताधि' न्यताडि; 'तायृङ् सन्तानपालनयोरिति धातोः "दीपजनबुध"–३–४–६७ इत्यनेन हैमसूत्रेण अद्यतन्यां कर्तरि जिच् वा स्यात् । 15 'भुजद्वन्द्वम्' शुण्डाद्वन्द्वम् । 16 'चकासिरे' दिदीपिरे । 17 'हस्तिदन्ताः' हस्तिनो दन्ताः अनेन वलयाकृतित्वं दीपसमुद्राणामिति ज्ञेयम् ।

[ 65 ] 18 'नमेरुरूपैः' वृक्षविशेषस्वरूपैः ।

[ 67 ] 19 'गर्तीभवन्' अगर्तः गर्तः भवन्निति 'च्विप्रत्यये' गर्तीभवन् ।

[ 68 ] 20 'शोणिमानम्' लौहित्यम् । 21 'मणिमरीचिभिः' मणीनां मरीचयः किरणास्तैः । 22 'धनुरथैन्द्रम्' ऐन्द्रं इन्द्रसम्बन्धि धनुः । अथेत्यव्ययम् । 23 'सुरयोषिताम्' सुरललनानाम् । 24 'मान्मथोद्दीपनम्' मन्मथस्य स्मरस्य भावः मान्मथं तस्योद्दीपनम् ।

इतः शशिकरक्षरत्सलिलचान्द्रसान्द्र[1]च्छटा-
मिलद्घनघटापटुं सृजति नित्यवर्षाऽऽगमम् ।
इतो रविकरैस्तपत्तपनरत्न[2]जाताऽऽतपा-
न्निदाघसमयः[3] शमं नयति जाड्यमेणीदृशाम्[4] ॥ ६९ ॥

इतो विबुधसुन्दरी[5] व्रजति साऽभिलापं दरीः[6]
प्रियेण सहसा हसन् मनसि मान्मथं बिभ्रती ।
इतोऽनवरतं[7] रतं[8] सपदि कर्तुकामः स्फुरन्
सुरः सुरसभाषितैर्[9]नयति सान्त्वनं कामिनीम्[10] ॥ ७० ॥

इतस्तपति चारणः[11] सकलजन्तुसाधारणः
शमी शमितपातकः क्षपितमोहदुर्घातकः ।
इतोऽर्चनमहोत्सवं रचयतीह देवोऽर्हतां
पटुर्बहुधू[12]रितो नटति हावभावोद्भटम्[13] ॥ ७१ ॥

गुञ्जन्मञ्जुमृदङ्गजङ्गमरसाऽऽवेशात् समादेशतः
स्वर्नाथस्य सभासु भासुरमणीहारान्विता[14] स्वर्वधूः ।
नृत्यन्ती जनयत्यनन्यजमहो[15] यूनां मयूनां[16] हृदि
वैराग्यं शमिनामहो विषमता पात्रेतरप्राणिनाम्[17] ॥ ७२ ॥

उच्चैर्योजनलक्षसम्मिततनुः श्रीरत्नसानुर्[18]महान्
मूर्द्धन्यार्हतचैत्यनित्यविलसद्रम्यध्वजान्दोलनात् ।
जम्बूद्वीपमहीपतेर्मणिभुवां कोटीश्वरत्वं[19] जने
किं प्रख्यापयतीव पीवरतरस्वर्णांशुभिर्भास्वरः ॥ ७३ ॥

द्वीपः श्रीपतिनर्मकर्मभवनं[20] निर्दम्भसंरम्भभूः[21]
स्तम्भस्तस्य सुरेन्द्रशैलमिषतो[22] मध्ये बभावुच्छ्रितः ।
भित्तेः सा जगती प्रतीतिमदधाद् धौताम्बुधेर्वीचिभिः
सूर्याचन्द्रमसोर्द्वयी वितनुते दीपक्रियां सर्वतः ॥ ७४ ॥

---

[69] 1 '°चान्द्र°' चान्द्रं चन्द्रोत्थम् । 2 '°तपनरत्न°' तपनरत्नं सूर्योपलः । 3 'निदाघसमयः' ग्रीष्मकालः । 4 'एणीदृशाम्' मृगीदृशां मृगनयनानाम् ।

[70] 5 'विबुधसुन्दरी' देवललना । 6 'दरीः' गुहाः । 7 'अनवरतम्' सततम् । 8 'रतम्' सम्भोगम् । 9 'सुरसभाषितैः' सुष्ठु रसो येषु भाषितेषु तैः । 10 'कामिनीम्' कामुकीम् ।

[71] 11 'चारणः' मुनिविशेषः, 'चारणस्तु कुशीलवः' इति हैमः [अभि० चिं० कां० २ श्लो० २४३] । 12 'बहुधूः' भारवाहकः । 13 'हावभावोद्भटम्' हावश्च [ सविलासविकारः । ... ] भावश्च [ ... ] इति हावभावौ तत्स्थामुद्भटम् ।

[72] 14 'भासुरमणीहारान्विता' देदीप्यमानानां मणीनां हारस्तैर्युक्ता । 15 'मदः' उन्मादः । 16 'मयूनाम्' किन्नराणाम् 'किन्नरस्तु किंपुरुषस्तुरङ्गवदनो मयुः' इति हैमः [ अभि० चिं० कां० २ श्लो० १०८ ] । 17 'पात्रेतरप्राणिनाम्' नाट्येऽधिकृताः पात्रं तस्माद्भिन्नानां जीवानाम् ।

[73] 18 'श्रीरत्नसानुः' लक्ष्मीयुक्तो मेरुः 'अथ मेरुः कर्णिकाचलः रत्नसानुः' इति हैमः [ अभि० चिं० कां० ४ श्लो० ९७–९८ ] । 19 'कोटीश्वरत्वम्' कोट्याधीशत्वम् ।

[74] 20 'श्रीपतिनर्मकर्मभवनम्' लक्ष्मीपतेः विष्णोर्वा केलिक्रियामन्दिरम् । 21 'निर्दम्भसंरम्भभूः' निर्दोषोद्यमस्य भूमी । 22 'सुरेन्द्रशैलमिषतः' मेरोर्व्याजतः ।

महाहिमाद्रिर्ननु रुक्मिनामा द्वीपे परौ द्वौ सहजाविवागौ ।
दिशोरुदग्दक्षिणयोर्दिदृक्षोरन्तर्जवन्याविव रत्नसानोः ॥ ७५ ॥
तदन्तराले हरिवर्ष-रम्यकक्षेत्रे पुनर्भोगभुवौ प्रतीते ।
कल्पद्रुमाऽऽमोदमिषाद् यशोभिः स्वीयैर्द्युलोकश्रियमाश्रयन्त्यौ ॥ ७६ ॥
लघुर्हिमाद्रिः शिखरी द्वितीयोऽचलावमू तत्परतोऽतितुङ्गौ ।
वार्द्धि तितीर्षू इव पाणिपादं विस्तार्य कार्यं कुरुतः प्रमायाः ॥ ७७ ॥
हैमन्त-हैरण्यकनामधेयं क्षेत्रद्वयी सौख्यमयीव भोगैः ।
यस्या नरैः प्राग्भवदानयोगाद् वश्याः क्रियन्ते त्रिदशा रसाऽऽद्यैः ॥ ७८ ॥
तथोत्तरस्यां शिखरीन्द्रशैलादैरावतं वर्षमतर्यलोकम् ।
यन्नाम रागादिव किं समागात् स्वर्गस्थितिः सूरकलाधराद्यैः ॥ ७९ ॥
वर्षाणि सप्तापि विभज्य शैलैर्निवेशयामास यथाऽर्हवृत्त्या ।
यः सप्तलोकमसुतां स्वकीयां प्रख्यापयन् सर्वजने समृद्ध्या ॥ ८० ॥
जम्बूवृक्षसमाश्रयन् निजकुले पत्रावलम्बीव यो
　द्वीपाम्भोनिधिवेष्टितो निधिरिव स्वर्णाद्रिसान्द्रच्छविः ।
चक्रीयोत्तमदैवतोत्तरकुरुक्षेत्रद्वयाऽऽभोगवान्
　संवासेन महोदयश्रियमयं द्वीपो ददात्वन्वयाम् ॥ ८१ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
जम्बूद्वीपवर्णनो नाम प्रथमः सर्गः ॥ १ ॥



[७५] १ "अन्तर्जवन्याविव रत्नसानोः" इत्यत्र मेरुरत्न इति न ताभ्यां समयपानमिति विचार्यं दूरस्थत्वात् । लघुनाऽपि वस्तुना दूरस्थमाच्छाद्यते ॥

[75] 1 'महाहिमाद्रिः' एतन्नामा पर्वतः । 2 'रुक्मिनामा' 'रुक्मि' इत्याख्यो गिरिः । 3 'सहजौ' भ्रातरौ । 4 'अगौ' पर्वतौ । 5 'जवन्यां' यवनिके ।
[76] 6 'हरिवर्ष-रम्यक'-एतन्नाम्नी क्षेत्रे । 7 'कल्पद्रुमाऽऽमोदमिषाद्' कल्पद्रुमस्य सुरभिव्याजतः ।
[77] 8 'लघुर्हिमाद्रिः' एतन्नामा पर्वतः । 9 'शिखरी' एतन्नामकः पर्वतः । 10 'प्रमायाः' मानस्य ।
[78] 11 'हैमन्त-हैरण्यकनामधेयम्' 'हैमन्तय' 'हैरण्यकय' इत्येतयोर्नामधेयमभिधानम् ।
[79] 12 'सूरकलाधराद्यैः' सूर्याचन्द्रमःप्रभृतिभिः देवैः ।

## द्वितीयः सर्गः ।

अथास्त्यमुष्मिन् दिशि दक्षिणस्यां हिमाद्रितः श्रीभरताऽऽख्यवर्षम् ।
तच्चारुतां द्रष्टुमिवोडुनेत्रैर्विभाति रात्रौ त्रिदिवं सतर्षम् ॥ १ ॥

सुवर्णमौलिर्हिमवान् नगेन्द्रो यस्योत्तमाङ्गे नृपचिह्नमाभात् ।
रूप्याद्रिरस्याऽऽभरणं बभूव ग्रैवेयकं रत्नमयूखपूर्णम् ॥ २ ॥

†मुक्ताकलापश्रियमस्य धत्ते स्वःसिन्धुसिन्धुद्वितयस्य धारा ।
पयोधिरूपं दधतो दुकूलं वेलाऽनुकूलं नृपतेरिवात्र ॥ ३ ॥

वैताढ्यशृङ्गस्थितचैत्यमूर्द्धध्वजैर्विजेत्रै रजतप्रभाणाम् ।
स्वर्गस्य शोभाजयजन्यमन्तस्तापं व्यपाकर्तुमिवोद्यतो यः ॥ ४ ॥

काश्मीरजार्चिर्निचयैरजस्रं धृताङ्गरागोऽद्भुतकौशलाऽऽढ्यः ।
वहन् सजीवां धनुराकृतिं स राजेव रेजे भरतप्रदेशः ॥ ५ ॥

स्वर्गेऽन्धकारस्य विकारसत्ता स्वभांशुकाप्प्यर्यादनुमीयते ज्ञैः ।
उच्चैः क्षिपन्नंशुभरं मणीनां यः सौहृदात् तामिव धिक् चिकीर्षुः ॥ ६ ॥

सुरानुभावान्मदवार्त्तयैव स्वर्गोऽतिशेतां भरतप्रदेशात् ।
न तत्त्वतो यत्र चतुर्दशापि रत्नानि सिन्धोर्मथनाद् धृतानि ॥ ७ ॥

राजा कलङ्की मघवाऽपि गोत्रच्छेदी तथाऽमूहृषिदारजारः ।
प्रजापतिः स्वां चकमेऽङ्गजातां स्वर्गोऽमुना किं समतानयेन ॥ ८ ॥

---

[५] १ 'काश्मीर०' काश्मीरो देशः पक्षे काश्मीरजं कुङ्कुमम् । २ '°अङ्गरागः' अङ्गरागो विलेपनं पक्षे अङ्गो देशस्तस्य रागः । ३ 'कौशल°' कौशलं पाण्डित्यं पक्षे कौशलाऽयोध्या ॥

[७] ४ 'सुरा°' सुराः देवाः मदिरा च ।

---

[1] 1 'उडुनेत्रै.' उडूनि तारका एव नेत्राणि चक्षूंषीति ।

[2] 2 'सुवर्णमौलिः' सुवर्णं मौलौ शिखरे यस्य सः । 3 'उत्तमाङ्गे' मस्तके । 4 'नृपचिह्नम्' मुकुटम् । 5 'ग्रैवेयकम्' ग्रीवाप्रदेशनिविष्टं कण्ठभूषेत्यर्थः । 'ग्रैवेयकं कण्ठभूषा' इति हैमः [ अभि० चिं० का० ३ श्लो० ३२१ ] । 6 'रत्नमयूखपूर्णम्' रत्नानां मयूखैः किरणैः पूर्णम् ॥

[3] † "प्रावारलीलामनुशीलतीव" इति वा पाठः मूलप्रतौ निर्दिष्टम् । 7 'मुक्ताकलापश्रियम्' मुक्तानां कलापः समूहस्तस्य श्रीः शोभा ताम् । 8 'स्व.सिन्धु॰' स्वर्गङ्गा । 9 'दुकूलम्' क्षौमम् "क्षौमं दुकूलं दुगूलं स्याद्" इति हैमः [ अभि० चिं० कां० ३ श्लो० ३३३ ] । 10 'वेलानुकूलम्' समयानुकूलं समुद्राम्भसः कूलं तटं वा ।

[4] 11 'वैताढ्यशृङ्ग॰' वैताढ्यो नाम पर्वतस्तस्य शृङ्गं शिखरम् । 12 'विजेत्रै.' विजयनशीलैः । 13 'रजतप्रभाणाम्' सुवर्णप्रभाणाम् । 14 'व्यपाकर्तुम्' दूरीकर्तुम् ।

[5] 15 'निचयै.' समूहैः । 16 'अजस्रम्' नित्यम् । 17 'सजीवाम्' जीवा ज्या तया युक्ताम् । "इच्छावगाहोनावगाहाभ्यस्तस्य विष्कम्भस्य चतुर्गुणस्य यन्मूलं सा मण्डलक्षेत्रस्य जीवा भवति" । 18 'धनु.' इषुः । "ज्याविष्कम्भयोर्वर्गविशेषमूलं विष्कम्भाच्छोध्यं शेषार्धमिषुः भवति" ।

[6] 19 'ज्ञैः' पण्डितैः । 20 'अंशुभरम्' किरणसमूहम् । 21 'ताम्' अन्धकारस्य विकारसत्ताम् । 22 'चिकीर्षुः' कर्तुमिच्छुः 'कृ'धातोः सनन्तत्वाद् कृतो उप्रत्ययः ।

[7] 23 'सुरानुभावात्' देवानां सुराया वा प्रभावात् । 24 'मदवार्त्तया' गर्वप्रवृत्त्या ।

[8] 25 'राजा' चन्द्रः । 26 'मघवा' इन्द्रः । 27 'गोत्रच्छेदी' गोत्रं पर्वतं छिनत्ति भिनत्तीति । 28 'ऋषिदारजारः' विश्वामित्रो मेनकाया जारतया कामुकत्वेन प्रवृत्त इति प्रसिद्धेः । 29 'प्रजापतिः' ब्रह्मा । 30 'चकमे' 'कमूङ् कान्तौ'–कान्तिरभिलाषस्तस्य परोक्षकालस्य रूपम् । 31 'अङ्गजाताम्' पुत्रीं लक्ष्मीम् । 32 'समतानयेन' साम्यनीत्या ।

स्वर्गस्य नाथा बलिनो महेन्द्रमुख्या जितास्तेऽपि पुराऽसुराद्यैः ।
अमुष्य राजा किल चक्रवर्ती सुरासुरैरप्यहतप्रभावः ॥ ९ ॥
गङ्गाप्रसङ्गाल्लभतां कथञ्चित् स्वर्गोऽस्य साम्यं न तथाऽपि सम्यक् ।
सिन्धुप्रबन्धव्यतिरेकतस्तत् स्पर्द्धाऽर्द्धरूपैव विवर्द्धनीया ॥ १० ॥
द्वात्रिंशदस्मिन् वरसन्निवेशा देशाः सहस्राणि सुराऽऽलयाद् ये ।
लक्षा विमाना अपि नाधिकत्वं योगाक्षराणामुत ! किं नराणाम् ॥ ११ ॥
न भूमिभागे भरतस्य रोगा भोगाश्च साऽऽभोगतया रसाढ्याः ।
स्वर्गे नभोगा वपुषोऽनुयोगात् सविक्रियास्तेऽनिमिषत्ववृत्त्या ॥ १२ ॥
षड्भूमिदेशा भरतप्रदेशे स्वर्गे पुनः द्वादशधा प्रयोगः ।
सत्पुण्यनैपुण्यवशाच्च जेयो द्वाभ्यामथैकोऽपि च देशलेशः ॥ १३ ॥
ध्रुवस्थलं किञ्चन देवलोके तत्रापि मेरोः सविधानुभावः ।
सप्तैव तस्मिन् ऋषयोऽथ तेऽपि सारुन्धतीकाः प्रगटव्यलीकाः ॥ १४ ॥
तीर्थेश्वराश्चक्रभृतो बलाद्या आर्यान्यकार्याय कृतावताराः ।
सहस्रशः सर्वबुधो मुनीन्द्राः स्वर्गोऽस्य साम्यं न जडेन काम्यम् ॥ १५ ॥
नैकेन जेयो भरतप्रदेशः स्वर्गेण युग्मे च मिथोऽनुबद्धे ।
मुख्ये तथान्ये विबुधाऽऽलयानां मध्ये तदेकत्वमभीतिभावात् ॥ १६ ॥
द्वयोर्द्वयोस्ताविषयोश्च सारमादाय धाता विदधेऽक्षपट्कम् ।
क्षेत्रस्य नूनं भरतस्य तस्मात् स्वःसङ्ख्यया षोडशता न युक्ता ॥ १७ ॥

---

[१६] १ 'मिथोऽनुबद्धे युग्मे' मुख्ये युग्मेऽनुबद्धेऽन्त्ये युग्मेऽप्यनुबद्धे मध्ये, एक एकः स्वर्गः ।

---

[9] 1 'असुराद्यैः' तारकाद्यसुरैः । 2 'अमुष्य' भारतवर्षस्य ।

[10] 3 'गङ्गाप्रसङ्गात्' भरतप्रदेशे यथा गङ्गा वरीवर्ति तथैव स्वर्गेऽपि गङ्गा वर्तते । 4 'स्पर्द्धाऽर्धरूपैव' अर्धरूपैव सा स्पर्द्धा न पूर्णेत्यर्थः ।

[11] 5 'वरसन्निवेशाः' श्रेष्ठसंस्थानानि । 6 'विमानाः' वायुयाना विगतमाना वा सत्स्वर्थेत्यर्थः । 7 'किं नराणाम्' किन्नराणां कुत्सितपुरुषाणां वा ।

[12] 8 'साभोगतया' ज्ञानयुक्तया विस्तारेण सहितया वा । 9 'नभोगाः' देवाः, भोगाः नैत्यर्थोऽपि । 10 'अनिमिषत्ववृत्त्या' न निमिषति लोचनेऽनिमिषस्तस्य भावः ।

[13] 11 'षड्भूमिदेशाः'—"भरतवर्षस्य योजनानां चतुर्दश सहस्राणि चत्वारि शतानि च षड्भागा विशेषोना ज्या वर्तते, तेन तस्य षट् भागाः वर्तन्ते" । 12 'सत्पुण्यनैपुण्यवशात्' सौख्यातिरेकात् तत्पुण्यकौशलमधिगन्तुं शक्याः । यथोक्तम्—"देवानां इच्छावाप्तविषयसुखलवाऽऽस्वादापहृतचेतसामनवाप्तगुरूदितश्रवणानां केषाञ्चिच्च कथञ्चिद्विहितश्रवणसम्भवेऽप्यवश्यभोगकर्माधीनत्वादकर्मभूमिस्थाच्च विरलभावस्तेन भरतप्रदेशो न जेयः" । 13 'द्वाभ्याम्' द्वाभ्यां स्वर्गाभ्यामेको भागोऽपि न जेयः ।

[14] 14 'सारुन्धतीकाः' वसिष्ठपत्नी अरुन्धत्यासहिताः । 15 'प्रगटव्यलीकाः' व्यक्तदोषास्तेषां स्त्रीपरिग्रहत्वात् ।

[15] 16 'बलाद्याः' बलभद्रादयः । 17 'सर्वबुधः' सर्वं बोधन्तीति ।

[16] 18 'तदेकत्वमभीतिभावात्' भरतप्रदेशस्य वीरताऽऽदिगुणप्रकर्षेण तस्यैकत्वं भयाभावात् । स्वर्गेश्च तावद् भयान्वितत्वेन मिथोऽनुबद्धः ।

[17] 19 'ताविषयोः' स्वर्गयोः । 20 'षोडशता' अत्र दिगम्बराणां प्रत्याक्षेपो यत् तैरभिमता स्वर्गाणां षोडशता न युक्ता । सा चेयम्—"सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयजयन्तापराजितेषु सर्वार्थसिद्धौ च" इति तत्त्वार्थराजवार्तिकम् [अ॰ ४ सू॰ १९] ।

सौधर्म[1]रूपं श्रमणाऽऽश्रमेषु[2] श्राद्धास्तथैशानदशा[3] रसाऽऽढ्याः ।
स्याद् ब्रह्मभूयं[4] सुरतोपशान्ते[5] सदानत-प्राणतता[6] विनेये[7] ॥ १८ ॥
महेन्द्रलक्ष्मी[8]र्धरणीधवेषु[9] सनत्कुमाराः[10] पवनाधिकाराः ।
चक्रे सहस्रारविधिश्च[11] शुक्राधिकत्वमङ्गे[12] रसिकासुभाजाम्[13] ॥ १९ ॥
ऐश्वर्यलक्ष्मी-घन-धर्म-कीर्त्ति-प्रज्ञा-प्रभा-वैभव-दर्शनेषु ।
परिस्फुरत्यच्युतता[14] प्रजानामस्मिंस्ततः किं दिवि[15] वस्तु शिष्टम्[16] ॥ २० ॥
त्रिभिर्विशेषकम् ॥

खानिः[17] सुखानां विषयोन्मुखानां सुलोचनौदारिकदेहवृत्त्या[18] ।
न साधुलोकेऽथ सुखं न किञ्चिद् येनोपमेयो भरतप्रदेशः ॥ २१ ॥
एको गुरुः पाठयिता न नव्यं शास्त्रं कुतस्तद् दिवि बोधवृद्धिः ।
नाम्ना न तत्त्वाद् विबुधाः सुधाशा यल्लेखशालाजुष[19] एव नित्यम् ॥ २२ ॥
यस्मिन्ननेके गुरवो विवेके प्रत्याश्रमं सातिशया यथार्थम् ।
विधाय शास्त्राणि नवानि बालानध्यापयन्ति भरते[20]ऽतिदक्षाः ॥ २३ ॥
धनैर्न धर्मैर्न गुणैर्न बोधैः स्वर्गाधिकः स्याद् भरतात् ततोऽदः ।
शङ्के शशाङ्कार्कमुखैः[21] प्रकाश्यं वर्षान्महेन्द्रो भजतीव वर्षम् ॥ २४ ॥
तस्मिंस्तृतीयारकदेश्यकाले[22] मुख्योऽर्हतां श्रीवृषभो बभूव ।
धर्म्यस्थितीनां[23] जनजीविकानां[24] कर्त्ताऽपहर्त्ता युगलस्थितीनाम् ॥ २५ ॥
कल्पद्रुमाणां परिणामसारैरभीष्टकारैरसमहोपकारैः ।
सम्भूय भूयः सुखसम्पदर्थं प्रादुष्कृतो दुष्कृतकृन्तनाय ॥ २६ ॥

---

[18] 1 'सौधर्मरूपम्' सुष्ठु धर्मस्तस्य भावः सौधर्मस्तस्य रूपम् । प्रथमदेवलोकश्च । 2 'श्रमणाऽऽश्रमेषु' साधूनां वसतिषु । 3 'ईशानदशाः' इन्द्ररूपाः । द्वितीयदेवलोकश्च । 4 'ब्रह्मभूयम्' ब्रह्मणो भवनं ब्रह्मभूयं ब्रह्मैक्यं मोक्ष इत्यर्थः । पञ्चमदेवलोकश्च । 5 'सुरतोपशान्ते' सम्भोगोपरते सति । 6 'सदानत-प्राणतता' सुष्ठुशीला-आनतता समन्तान्नमनक्रिया, प्राणतता प्रकर्षेणाऽऽनमनक्रिया च । नवम-दशमस्वर्गश्च । 7 'विनेये' शिष्ये ।

[19] 8 'महेन्द्रलक्ष्मी.' महोत्सवादिन्द्रश्च महेन्द्रस्तस्य लक्ष्मी ऋद्धिः । चतुर्थस्वर्गः । 9 'धरणीधवेषु' राजसु । 10 'सनत्कुमाराः' सनन्तो भक्तिमन्तः कुमाराः । सनत्कुमारचक्रवर्ती वा च । तृतीयदेवलोकश्च । 11 'सहस्रारविधिः' सहस्रप्रकारेण महत्वविधिः । अष्टमस्वर्गश्च । 12 'शुक्राधिकत्वम्' वीर्याधिक्यम् । सप्तमस्वर्गः । 13 'रसिकासुभाजाम्' रसिकप्राणभृताम् ।

[20] 14 'अच्युतता' न च्यवत इत्यच्युतस्तस्य भावः । द्वादशदेवलोकश्च । 15 'दिवि' स्वर्गे । 16 'शिष्टम्' "एषु त्रिषु श्लोकेषु द्वादशदेवलोकानां केवलं नाममात्रमस्तीति निर्दिष्टं, न गुणवत्त्वम् । देवलोकानां नामानुरूपं गुणत्वं तु भरतप्रदेशे एव दृश्यते तस्मात् तेषु स्वर्गेषु न किञ्चिद्वैशिष्ट्यं भरतप्रदेशात्" ।

[21] 17 'खानिः' आकरः । "स्यादाकरः खनिः खानिर्गञ्जा" इति हैमः [ अभि० चि० कां० ४ श्लो० १०२ ] । 18 'औदारिकदेहवृत्त्या' औदारिकशरीरप्रकारेण । यथोक्तम्—"औदारिकम्—उदारं बृहदसारं यद् द्रव्यं तन्निर्वृत्तमौदारिकमसारस्थूलद्रव्यवर्गणासमारब्धमौदारिकशरीरयोग्यपुद्गलग्रहणकारणपुद्गलविपाकयौदारिकशरीरनामकर्मोदयनिष्पन्नम्" ।

[22] 19 'लेखशाला०' स्वर्गः कुमारकपाठस्थानञ्च ।

[23] 20 'भरते' क्रीडाविशेषे क्षेत्रे चाऽतिदक्षाः ।

[24] 21 'शशाङ्कार्कमुखैः' चन्द्र-सूर्यप्रमुखैः ।

[25] 22 'तृतीयाऽऽरक०' 'सुषमा' नामकमारकम् । "त्रिभिः कोटिकोटिभिः सागरोपमाणां सुषमा" । 23 'धर्म्यस्थितीनाम्' धर्मानुकूलरीतीनाम् । 24 'जनजीविकानाम्' मनुष्याणामाजीविका इति जनजीविकास्तेषाम् ।

कौमारके विंशतिलक्षपूर्वाण्यतीत्य जाते जनकौशलार्थे ।
राज्येऽभ्यषेचि त्रिदशाधिपेन श्रीकौशलायां पुरि पौरहर्षात् ॥ २७ ॥
त्रिषष्टिलक्षानतिगम्य राज्ये पूर्वाणि लोकान्तिकदेववाचा ।
स्वयं प्रबुद्धोऽपि विशिष्य दीक्षां जिघृक्षुरासीद् बहुदानवर्षी ॥ २८ ॥
राज्यं परित्यज्य नृणां हिताय प्रव्रज्य संवत्सरदानयुक्त्या ।
तपोऽपि सांवत्सरमेव तप्यन् श्रेयांसतः पारणमप्यकार्षीत् ॥ २९ ॥
सहस्रवर्षाणि पुनस्तपांसि छद्मस्थभावे विविधानि तप्त्वा ।
कैवल्यकेलिं कलयाञ्चकार न्यग्रोधमूले स युगादिदेवः ॥ ३० ॥
विशालसालत्रितयादिनीत्याऽस्याः स्थानभूमी रचिता सुरेन्द्रैः ।
अध्यास्य यामार्यविभुर्विरेजे पूर्वाद्रिमूर्ध्नीव सहस्रभानुः ॥ ३१ ॥
तीर्थं व्यवस्थाप्य सभासदां स प्रबोधदानाय दिदेश धर्मम् ।
संसारवार्धौ निपतज्जनानामालम्बदायी ह्यविलम्बनेन ॥ ३२ ॥
व्याख्यातुरीशस्य मुखामृतांशोर्ज्योत्स्नेव साक्षात् प्रकटीबभूव ।
प्रक्षालयन्ती जनमानसान्तस्तमः समग्रं दशनाऽऽलिदीप्तिः ॥ ३३ ॥
ध्यानं मनोऽन्तःस्थितमस्य शुक्लं प्रवर्द्धमानं बहिरुज्जगार ।
रागं पराकर्त्तुमिवोष्ठभागे निलीनमुच्चैर्दशनांशुदम्भात् ॥ ३४ ॥
पदाक्षरव्यक्ततयैव वाचां प्रचारणेऽस्य द्विजराजकान्तिः ।
बभौ विभोरुज्ज्वलवाससा गौः प्रादुर्भवन्तीव मुखारविन्दे ॥ ३५ ॥
यन्मृष्टताऽभूद् वचसां जिनस्य द्वेधाऽपि तापापनया त्रिलोक्याः ।
शङ्के ततोऽसौ वसुधाऽवतीर्णा सुधाऽभिधावद् दशनांशुरूपा ॥ ३६ ॥
मांसे समांशोऽन्दसृजि प्रसक्ता दुग्धं परं मुग्धमपास्य कान्तिः ।
भदन्तदन्ताऽऽवलिरश्मिरूपात् तदा मदादेव विनिर्जगाम ॥ ३७ ॥

---

[27] 1 'त्रिदशाधिपेन' इन्द्रेण। 2 'पौरहर्षात्' नागरजनानामानन्दात्।

[28] "लोकान्तिदेववाचा' लोकान्तिकाः देवास्तेषां वाण्या लोकान्तिकदेवानां तथैवाऽऽचारत्वात्। यथोक्तम्—"लोकान्तिकदेवाः किल भक्तिप्रवणीकृतचेतसः सर्वदा जिनेन्द्रजन्मादिप्रलोकनपराः शुभाध्यवसायप्रायाः वरीवर्त्तन्ते"।

[29] 4 'संवत्सरदानयुक्त्या' वार्षिकदानसहितया। 5 'श्रेयांसतः' श्रेयांसनामकबाहुबलिपौत्रात् क्षीरान्नमादाय पारणमकृत इति श्रुतिः।

[30] 6 'कलयाञ्चकार' समधिगतवान्। 7 'न्यग्रोधमूले' वटवृक्षस्याधोभागे।

[31] 8 'विशालसाल०' दीर्घप्राकाराः "समवसरणे देवाः रत्न-सुवर्ण-रूप्यमयं प्राकारत्रयं रचयन्ति"। 9 'अध्यास्य' उपविश्य। 10 'याम्' स्थानभूमिं समवसरणस्थितनिर्मलं स्फटिकमयं सिंहासनं तद्रूपाम्।

[33] 11 'व्याख्यातुः' देशनादातुः। 12 'मुखामृतांशोः' मुखचन्द्रस्य। 13 'दशनाऽऽलिदीप्तिः' दन्तसमूहानां कान्तिः।

[34] 14 'निलीनम्' प्रच्छन्नम्। 15 'दशनांशुदम्भात्' दन्तकिरणकपटात्।

[35] 16 'पदाक्षरव्यक्ततयैव' पदानि-अक्षराणि च पदाक्षराणि तयोः व्यक्तता प्राकट्यं तेन। 17 'द्विजराजकान्तिः' चन्द्रदीप्तिः। 18 'गौः' वाणी।

[36] 19 'यन्मृष्टता' यच्छुद्धता। 20 'तापापनया' संतापं कष्टं दूरीकरणेन। 21 'असौ' वाणीशुद्धता। 22 'सुधाऽभिधावत्' अमृतनामवत्।

[37] 23 'अन्दसृजि' मेघसृजि।

अङ्गानुषङ्गादिव जातरङ्गा गङ्गाऽप्यभङ्गा विलसत्तरङ्गा ।
आप्लावयन्ती निरियाय भव्याँस्तदा रदांशूपधिना जिनस्य ॥ ३८ ॥
सरस्वतीयं रदनच्छदांशुजटा घटाया रुचिरर्कपुत्री ।
मन्दाकिनीह द्विजराजकान्तिर्व्याजाद् विरेजेऽत्र ततस्त्रिवेणी ॥ ३९ ॥
यदुज्ज्वलत्वं दशनांशुजाले मुखारविन्दे रुरुचे विशाले ।
प्रालेयरश्मेरपि विस्मयाय श्रियं जिगीषोर्दिनमात्रमेकम् ॥ ४० ॥
ववर्ष हर्षाद् दशनांशुनीरैः सोत्साहमर्हन् जलवाह एषः ।
रसेन तस्माज्जनमानसानि प्रपूर्य सन्तापमपाचकार ॥ ४१ ॥
यः स्पर्द्धनोऽभून्महसा शशाङ्कः साङ्कस्तु पूर्णो दिनमात्रमेत्य ।
मुखाम्बुजं तज्जयमाशशंस जैनं सदैव द्विजराजिदीप्त्या ॥ ४२ ॥
द्विजाधिपः किं द्विजमात्रकान्त्या विनिर्जितः खं त्रपयोत्पपात ।
तदत्र जैनस्थितिरेव हेतुरहो ! महोत्साहदशाऽऽश्रयेण ॥ ४३ ॥
दोषाकरोऽभ्रत्जमीनराशिमुद्योतते यद् द्विजनायकः खे ।
तत्कारणं श्रीजिनवक्त्रपद्मसेवा द्विजानां प्रसृतांशुकानाम् ॥ ४४ ॥
वाग्दिव्यसिन्धोः सहसा रसान्तर्निमज्ज्य मुखातचरी द्विजाऽऽली ।
जलाञ्जलीनातनुते जपान्ते धारा तदीयांशुमिषात् ससार ॥ ४५ ॥
उत्फुल्लमल्लीवनसौरभाणि श्वासो जिनानां जयतीत्यभाणि ।
पुरातनैस्तद्द्विजकान्तिदम्भात् कर्पूरपूरः पुरतो लुलोठ ॥ ४६ ॥
ब्राह्मी* जिनाऽऽस्याम्बुरुहप्रदेशाद् विनिर्गमे संभ्रमतो निपेतुः ।
मुक्तालताया इव मौक्तिकानि व्याकीर्यमाणद्विजरश्मिदम्भात् ॥ ४७ ॥
यदास्यदास्यं भजते कलाभृत् तीर्थेशितुस्तद्गुणयस्तदीयाः ।
द्विजांशुदम्भादिव शश्वदेव स्फुरन्ति नूनं परितो मुखाब्जम् ॥ ४८ ॥

[ 38 ] 1 'आप्लावयन्ती' प्लावयन्ती । 2 'निरियाय' निर्जगाम । 3 'भव्यान्' मोक्षगमनयोग्यपुरुषान् । 4 'रदांशूपधिना' दन्तकिरणोपाधिना ।

[ 39 ] 5 'अर्कपुत्री' सूर्यपुत्री । 6 'मन्दाकिनी' गङ्गा । 7 'त्रिवेणी' गङ्गा ।

[ 40 ] 8 'प्रालेयरश्मेः' हिमरश्मेः चन्द्रस्येत्यर्थः ।

[ 41 ] 8 'जलवाहः' मेघः । 9 'रसेन' धर्मदेशनास्वादिना । 10 'प्रपूर्य' संपूर्य । 11 'सन्तापम्' कष्टम् । 12 'अपाचकार' दूरीकृतः ।

[ 42 ] 13 'आशशंस' कथयामास ।

[ 43 ] 14 'द्विजाधिपः' चन्द्रमा । 15 'विनिर्जितः' पराजितः । 16 'खं त्रपयोत्पपात' लज्जया आकाशे उत्पपात ।

[ 44 ] 17 'दोषाकरः' चन्द्रमा । 18 'अभ्रत्' भ्रमन् । 19 'प्रसृतांशुकानाम्' विकसितकिरणानाम् ।

[ 45 ] 20 'वाग्दिव्यसिन्धोः' वाणीरूपदिव्यनद्याः । 21 'निमज्ज्य' बुडित्वा । 22 'जलाञ्जलीनातनुते' जलेन संभृतान् अञ्जलीन् प्रकरोति । 23 'तदीयांशुमिषात्' प्रभोः वाणीकिरणव्याजात् ।

[ 46 ] 24 'उत्फुल्लमल्लीवनसौरभाणि' उत्फुल्लं विकसितं मल्ली विचकिलपुष्पविशेषस्तस्य वनमुद्यानं तस्य सौरभाणि सौगन्ध्यानि । "अब्ज [ मल्लिका ] गन्धः श्वासः तीर्थकराणामतिशयविशेषः" । 25 'कर्पूरपूरः' घनसारसमूहः ।

[ 47 ] 26 'ब्राह्मी' वाणी । 27 'जिनाऽऽस्याम्बुरुहप्रदेशात्' जिनेश्वरस्य मुखकमलप्रदेशात् । 28 'व्याकीर्यमाणद्विजरश्मिदम्भात्' विक्षिप्तदन्तकिरणानां व्याजात् ।

[ 48 ] 29 'यदास्यदास्यम्' यस्य प्रभोः मुखसेवकत्वम् । 30 'कलाभृत्' चन्द्रः ।

* भारती ।

वितीर्यमाणे[1] किल बोधिदाने[2] जिनेन तूर्याण्य[3]भिनेदुरुच्चैः ।
तत्राभवत् किं सुमनोऽभिवृष्टिः[4] प्रसृत्वरैर्दन्तरुचां प्रचारैः ॥ ४९ ॥
जिनस्य दिव्यध्वनिनो[5]ऽर्जितेन[6] ज्ञानार्णवः[7] पूर्णतया जगर्ज ।
पीयूष[8]माविर्भवति[9] स्म तस्माद् द्विजन्मराजीरुचिकैतवेन[10] ॥ ५० ॥
अस्पष्टवर्णत्वमुशन्ति[11] चान्ये जिनेन्द्रवाचस्तदिदं विनेतुम्[12] ।
वर्णा रदांशूज्ज्वलवर्णवेषमाधाय वक्त्राम्बुरुहान्निरीयुः ॥ ५१ ॥
शब्दे गुणत्वं[13] ह्यपरे दिशन्ति तदप्रमाणं द्विजकान्तिदम्भात् ।
यन्निःसरन्नेव[14] जिनस्य शब्दः प्रोज्जृम्भते[15]ऽत्युज्ज्वलवर्ण एव ॥ ५२ ॥
सुरासुराद्यान् प्रतिबोधयन्[16] स क्ष्मापीठपावित्र्यविधित्सयैव[17] ।
मिथ्यामतध्वान्त[18]मपास्य[19] सर्वं भास्वानिवोर्वीं विजहार लोके ॥ ५३ ॥
विहृत्य चैकं किल पूर्वलक्षं धर्मं स्थिरीकृत्य सभासमक्षम् ।
कैलासशैलेऽनशनेन मोक्षं स प्राप्य भेजे तदनन्तसौख्यम् ॥ ५४ ॥
श्रीचक्रवर्ती भरताभिधानस्तदङ्गजन्मा[20] महसा प्रधानः ।
बभूविवान् दिग्विजयी नयीश[21]स्तदाख्यया वर्षमिदं सहर्षम् ॥ ५५ ॥
क्रमेण तुर्याऽऽरक[22]संप्रवृत्तौ जज्ञे चतुर्विंशतिरर्हतां सा[23] ।
यस्याः स्मृतेर्ध्यानविधानतो वा जागर्त्ति लोकस्य महोदयश्रीः ॥ ५६ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
श्रीभरतवर्णनो नाम द्वितीयः सर्गः ॥

---

[49] 1 'वितीर्यमाणे' ददति । 2 'बोधिदाने' सम्यग्दर्शनप्रदाने । 3 'तूर्याणि' वादित्राणि । "दुन्दुभिनाद उच्चैर्भुवनव्यापी स्यादिति तीर्थकराणामतिशयविशेषः" । 4 'सुमनोऽभिवृष्टिः' पुष्पाणां वर्षा । "बहुवर्णपुष्पवृष्टिरपि तीर्थकराणामतिशयविशेषः" ।

[50] 5 'दिव्यध्वनिनः' पञ्चत्रिंशद्वाचां गुणैर्युक्तस्य शब्दस्य । 6 'अर्जितेन' उत्पादितेन । 7 'ज्ञानार्णवः' ज्ञानसमुद्रः । "अनेन प्रभोः ज्ञानातिशयो व्यज्यते" । 8 'पीयूषम्' अमृतम् । 9 'आविर्भवति' उद्भवति । 10 'द्विजन्मराजीरुचिकैतवेन' दन्तसमूहकिरणव्याजेन ।

[51] 11 'उशन्ति' इच्छन्ति 'वशक् कान्तौ' इति धातोः वर्तमानकालस्य "वशेरयङि" ४-१-८३ इति सिद्धहेमसूत्रेण एतद्रूपम् । 12 'विनेतुम्' हेतुम् ।

[52] 13 'शब्दे गुणत्वम्' 'शब्दगुणकमाकाशम्' इति नैयायिका मन्वते । 14 'यन्निःसरन्' यस्मात् मुखान्निःसरन् बहिर्गच्छन् । 15 'प्रोज्जृम्भते' प्रकाशते ।

[53] 16 'प्रतिबोधयन्' उपदिशन् । 17 'क्ष्मापीठपावित्र्यविधित्सया' पृथ्वीतलस्य पवित्रतां विधातुमिच्छया । 18 'मिथ्यामतध्वान्तम्' मिथ्यादृष्टीनां मतरूपमन्धकारम् । 19 'अपास्य' निराकृत्य ।

[55] 20 'तदङ्गजन्मा' तस्य ऋषभदेवस्य पुत्रः । 21 'नयीशः' न्यायकर्तॄणां स्वामी ।

[56] 22 'तुर्याऽऽरक-संप्रवृत्तौ' चतुर्थाऽऽरकाऽऽरम्भे । 23 'सा' महोदयश्रीः ।

## तृतीयः सर्गः ।

श्रीवर्द्धमानभगवानुदियाय साक्षाद् विश्वोपकारकरणे करणे नियोगी ।
प्राच्यार्हतां समुदितैर्मुदितैर्महोभिर्यो जातरूप इव निर्जितजातरूपः ॥ १ ॥
उद्भिद्रभक्तिभिरुपेन्द्रयुतैर्महेन्द्रैः सर्वैः सुपर्वकृतपर्वणि पर्वतेशे ।
क्षीराम्बुधेर्मधुरवारिभिरभ्यषेचि मेरौ जिनः प्रसवजातमहोत्सवाहे ॥ २ ॥
लोकेश-केशव-महेश-सुरेशमुख्यैः शिष्यैरिवाप्रविनयैरभिनूयमानः ।
साचीकृताननशचीजनपीयमानलावण्यस्तेन विधिना भगवान् स रेजे ॥ ३ ॥
वादित्रचित्ररववैभवपूर्णलोकं लोकम्पृणं तदघृणं सघृणं जनानाम् ।
दिष्ट्या दिनं सकलजन्तुहितं बभूव भूवल्लभस्य बहुदुर्लभपुत्रसूत्या ॥ ४ ॥
सिद्धार्थपार्थिवकुलाम्बरभानुमाली ज्ञातान्वयायजलधौ कलधौतवर्णः ।
चन्द्रायते स महसामतिशायिवृत्त्या धुन्वन् द्विधापि रिपुचक्रमनुक्रमेण ॥ ५ ॥
क्रीडारसेन विलसन् विलसत्स्वरूपं वैतालभावमनुनीय सुरेण देवः ।
संत्रासितोऽपि न मनाग् भयमाससाद तेनाभवद् विभवसम्भववीरनामा ॥ ६ ॥
बाल्यं व्यतीत्य वयसा जयशालिरूपं बिभ्रन्मनोभवनवस्मयहारि हारि ।
द्वेधापि दारपरिकर्मपराङ्मुखोऽपि चक्रे करग्रहमहं स्वजनानुवृत्त्या ॥ ७ ॥
मत्वा विपेन तुलितान् विषयानसारानारादपारभवदुःखपरम्परायाः ।
दीक्षां जिघृक्षुरपि मङ्क्षु सुरैर्न्यबोधि लोकान्तिकैर्जयजयारवमीरयद्भिः ॥ ८ ॥
सांवत्सरं वितरणं तरणं भवाब्धेर्दत्त्वाऽऽददे विरमणं रमणं शिवान्तः ।
त्यक्त्वाऽऽश्रवान् स भगवान् विजहार भूम्यां सम्यक् तृणे मणिगणे समतां दधानः ॥ ९ ॥

---

[ १ ] १ 'करणे' अधिकाराऽऽस्पदे ।

---

[ 1 ] 1 'उदियाय' आविर्बभूव । "प्रभोः वीरस्य जन्म विक्रमार्कात् पूर्वं चतुःशतसप्ततितमे [ ४७० ] वर्षेऽभूदिति विद्वज्जनसम्मतम् । 2 'नियोगी' कर्मसचिवः । "नियोगी कर्मसचिव आयुक्तो व्यापृतश्च सः" इति हैमः [ अभि॰ चि॰ कां॰ ३ श्लो॰ ३८३ ] । 3 'प्राच्यार्हताम्' पूर्वतीर्थङ्कृतां ऋषभादिपार्श्वपर्यन्तानाम् । 4 'समुदितैः' समुपचैः । 5 'जातरूपः' जातं रूपमस्य जातरूपमद्भुतस्वरूपं सुमेरुदेशजं सुवर्णं वीरस्य सुवर्णवर्णत्वात् । 6 'निर्जितजातरूपः' पराजितः कामदेवो येन सः ।

[ 2 ] 7 'उद्भिद्रभक्तिभिः' जागरूकसेवाभिः' । 8 'सुपर्वकृतपर्वणि' देवकृतपर्वणि । 9 'पर्वतेशे' श्रेष्ठपर्वते मेरावित्यर्थः । 10 'प्रसवजातमहोत्सवाहे' जन्मकृतमहोत्सवदिवसे ।

[ 3 ] 11 'लोकेश केशव महेश-सुरेशमुख्यैः' लोकेशः राजा, केशवः कृष्णः, महेशः महादेवः, सुरेशः इन्द्रः—तेषां मुख्यैः प्रधानैः । 12 'साचीकृताननः' तिर्यक्कृतं मुखं येन । 'तिर्यगर्थे साचि' इति हैमः [ अभि॰ चि॰ कां॰ ६ श्लो॰ १७० ] यथा—"तन्वि लोचनयुगं रमयन्ती" ।

[ 4 ] 13 'लोकम्पृणम्' लोकान् प्रीणाति, आनन्दयतीति तम् । 14 'सघृणम्' करुणायुक्तम् । 15 'दिष्ट्या' सम्मदेन । 'दिष्ट्या सम्मदे' इति हैमः [ अभि॰ चि॰ कां॰ ६ श्लो॰ १६४ ]

[ 5 ] 16 'सिद्धार्थपार्थिव॰' सिद्धार्थनामा नृपः वीरस्य पिता । 17 'ज्ञातान्वयायजलधौ' ज्ञातनामकवंशसमुद्रे 'वंशोऽन्वयोऽन्ववायः' इति धनञ्जयः [ श्लो॰ १२५ ] । 18 'कलधौतवर्णः' सुवर्णवर्णः 'तपनीयं कलधौतम्' इति धनञ्जयः [ श्लो॰ १४ ] । 19 'चन्द्रायते' चन्द्रमिवाचरतीति ।

[ 6 ] 20 'वेतालभावम्' वैतालिकस्वरूपं उच्चैः तालवृक्षमिव स्वरूपं । 21 'अनुनीय' कृत्वा । 22 'संत्रासितः' भाययमानः ।

[ 7 ] 23 मनोभवनवस्मयहारि' कामदेवस्य नवीनो यः स्मयस्तं हरत इति । 24 'दारपरिकर्म॰' पत्नीपरिग्रहः । 25 'करग्रहमहम्' विवाहोत्सवम् ।

[ 8 ] 26 'ईरयद्भिः' कुर्वद्भिः ।

[ 9 ] 27 'वितरणम्' दानम् । 28 'विरमणम्' हिंसादि-पञ्चपापेभ्यः विरमणं विरतिः । 29 'आश्रवान्' आस्रवन्ति कर्माणि यैः द्विचत्वारिंशत्प्रकारैः तान् ।

सोढुं परीषहगणानुपसर्गवर्गैरक्षोभ एव सहसा स यथार्थनामा ।
तीव्रैस्तपोभिरवधूतवधूविलासः कक्षीचकार किल केवलबोधलीलाम् ॥ १० ॥
देवध्वनिर्ध्वनितदिग्वलयः ससार व्योम्नस्तदा सुमनसो द्विविधाऽवतेरुः ।
निर्दम्भदुन्दुभिरभिन्नरवो जगर्ज सन्तर्जयन्निव विमोहमहोर्जितानि ॥ ११ ॥
रत्नैः सुवर्णनिचहै रजतैर्निसृष्टा सालत्रयी भगवतः परितो बभासे ।
अस्याश्छलेन वलयाकृतिशैलराजाः प्राप्तास्त्रयोऽपि जिनऋद्धिदिदृक्षयेव ॥ १२ ॥
सिंहासनं समधिरुह्य जिनस्तदासांचक्रे मणीगणलसत्किरणैर्विचित्रम् ।
भास्वानिवोदयनगोन्नतशृङ्गसङ्गी सङ्गीतवाद्यगणमाद्यदमन्दशब्दैः ॥ १३ ॥
छत्रत्रयी द्युतिमयी प्रचयीकृतानां सान्द्रेन्द्रनीलमणिमौक्तिककाञ्चनानाम् ।
रेजे जगत्त्रयनिविष्टपदार्थसार्थप्रोद्भासनाय वपुषस्त्रितयीव भानोः ॥ १४ ॥
उच्चामरावलिविकीर्णसितप्रकीर्णकान्दोलनैरनिलमूर्च्छनतस्त्रिलोक्याः ।
बाह्यस्तथान्तरगतः समपैति तापः किं किं न शर्म महतामुदये जगत्याम् ॥ १५ ॥
आखण्डलेन विधृतं जिनराजपृष्ठे भामण्डलं किल रराज करैरखण्डम् ।
मार्तण्डमण्डलमिवाऽर्हतसेवयेव नित्योदयं न तमसा अमसादनीयम् ॥ १६ ॥
निश्शोकतां समधिगच्छति सर्वलोकस्तीर्थेशसन्निधिवलादचलातलेऽस्मिन् ।
इत्येवमाह नवपल्लवनैर्जिनेन्द्रोराराढुपेत्य किमु चैत्यतरुर्यशोकः ॥ १७ ॥
केचिज्जिनेशमभितुष्टुवुरात्ततुष्ट्या प्राचीकटन् नटनकर्मधरां च केचित् ।
सर्वाङ्गसाङ्गविधिना जिनपूजनानि केचिद् व्यधुर्जनवरा नवरागभाजः ॥ १८ ॥
पुष्पाणि तत्र ववृषुर्बहुसौरभाणि संसिच्य गन्धसलिलैः परितो धरित्रीम् ।
आजानुभागमपि मेघकुमारदेवाः सेवाविधेरसमयं समयं प्रतीक्ष्य ॥ १९ ॥

---

[10] 1 'अक्षोभः' न क्षुब्धो विचलितो वा । 2 'यथार्थनामा' अर्थमनतिक्रम्य 'महावीर' इति यथार्थं नाम यस्य सः । 3 'अवधूतवधूविलासः' तिरस्कृतपत्नीविलासः ।

[11] 4 'निर्दम्भदुन्दुभिः' दम्भः कपटस्तेन रहितः निर्दम्भश्चासौ दुन्दुभिश्चेति । "भगवतः देवताकृतैकोनविंशतिरतिशयानां मध्ये द्वादशोऽतिशयः" । 5 'सन्तर्जयन्' तिरस्कुर्वन् ।

[12] 6 'सालत्रयी' प्राकारत्रिकम् । "समवसरणे रत्न-सुवर्ण-रूप्यमयं प्राकारत्रयं देवता रचयन्तीति सप्तमोऽतिशयः" । 7 'वलयाऽऽकृतिशैलराजा.' वलयाकारकाः श्रेष्ठपर्वताः ।

[13] 8 'सिंहासनम्' मृगेन्द्रासनम्, "स्फटिकरत्नालङ्कृतमिति तृतीयोऽतिशयः" ।

[14] 9 'छत्रत्रयी' "खे छत्रत्रयं देवता धारयन्तीति चतुर्थोऽतिशयः" । 10 'प्रचयीकृतानाम्' एकत्रीकृतानाम् । 11 'जगत्त्रयनिविष्टपदार्थसार्थप्रोद्भासनाय । त्रिषु जगत्सु निविष्टः स्थितो यो पदार्थानां वस्तूनां सार्थो समूहस्तं प्रोद्भासनाय प्रकाशनाय ।

[15] 12 'उच्चामरावलिविकीर्णसितप्रकीर्णकाऽऽन्दोलनैः' "ऊर्ध्वं खे चमरा इति द्वितीयोऽतिशयः" । उच्चामराणामावलिभिः विकीर्णाः, प्रसृताः सितप्रकीर्णकाः श्वेतरोमगुच्छास्तेषामान्दोलनैः संचालनैरिति । "चामरं वालव्यजनं रोमगुच्छः प्रकीर्णकम्" इति हैमः [अभि० चिं० कां० ३ श्लो० ३८१] 13 'समपैति' नश्यति ।

[16] 14 'आखण्डलेन' इन्द्रेण । 15 'भामण्डलम्' "भानां प्रभाणां मण्डलमिति कर्मक्षयजस्तृतीयोऽतिशयः" ।

[17] 16 'अचलातले' पृथ्वीतले । 17 'चैत्यतरुर्यशोकः' "चैत्याभिधानो द्रुमोऽशोकवृक्षो देवकृतो नवमोऽतिशयः" ।

[18] 18 'प्राचीकटन्' प्राकाशयन् । 19 'सर्वाङ्गसाङ्गविधिना' नवाङ्गपूजाऽष्टप्रकारकविधियुक्तेन । साङ्गमाचारादयङ्गसूत्रं तस्मिन् कथितविधिना ।

[19] 20 'पुष्पाणि' "पञ्चवर्णानां जानूत्सेधप्रमाणपुष्पाणां वृष्टिरिति षोडशोऽतिशयः" । 21 'गन्धसलिलैः' "गन्धोदकैरिति पञ्चदशोऽतिशयः" । 22 'आजानुभागम्' जानूत्सेधप्रमाणम् । 23 'प्रतीक्ष्य' दृष्ट्वा ।

यद्वया इवास्य परितो भुवनाधिभर्त्तुस्तस्थुः प्रसन्नमनसः सुदृशः सदस्याः ।
पीता वचोऽमृतरसात्तरसाऽऽत्तमोहास्ते द्वादशाऽऽशविदिशस्त्रिदशाधिपाद्याः ॥ २० ॥
यत्कोटिकोटिगणितोऽप्यधियोजनान्तमास्ते स मानव-पशु-द्युसदां समूहः ।
चित्रं न तत् किमु विभोः सकलोऽपि लोकोऽलोकश्च माति न विबोधमयाऽऽत्मदर्शे ॥ २१ ॥
आयोजनं जिनविभोर्ध्वनिरध्वनीनान् उद्बोधयन् शिवगमे परमागमोत्तया ।
स्पष्टीकरोति भवसम्भवपर्द्धिवार्द्धिक्षोभेण लाभमिह रत्नवरत्रयस्य ॥ २२ ॥
वाणी विभोरमर-मर्त्य-पशुस्वभाषासंवादमेत्य सुगमाधिगमं वितेने ।
मन्दाकिनीव सरसा त्रिपथप्रयाता नानानयैर्ननु सहस्रमुखीति रूढा ॥ २३ ॥
"ईतिर्न "भीतिरपनीतिरसत्प्रतीतिस्तन्मण्डले स न रुजा प्रसरीसरीति ।
यत्र प्रभुः कनकपद्मनिविष्टपादः कैवल्यभाग् विहरते वरतेजसाऽऽढ्यः ॥ २४ ॥
समवसरणलक्ष्मीर्लक्षणैरित्युदीता जवनपवनयोगादुल्लसत्केतुहस्तैः ।
नटति झटिति शुभ्रैर्दिव्यपुष्पैः प्रवृष्टैस्तदनु विहसतीव स्वामिसंसर्गतुष्टा ॥ २५ ॥
अथ प्रथमतः प्रभुस्त्रिदशराज-भूमीभुजां
लसत्सदसि सङ्गते सुभगमङ्गले स्फूर्जति ।
पदत्रितयमादिशद् विशदसर्वभावे विशत्
प्रभूय गणभृद्गणस्तदनु तस्य मीमांसया ॥ २६ ॥
श्रीइन्द्रभूतिरपरोऽग्निपदाद् विभूतिः श्रीवायुभूतिरिति गोतमवंशजाताः ।
व्यक्तः सुधर्मगणभृद् गणिमण्डितोऽथ श्रीमौर्यपुत्र इति तद् द्वितयं गणेन्द्रौ ॥ २७ ॥

---

[ 21 ] 1 'यत्कोटिकोटिगणितः' येषां 'मानव-पशु-द्युसदाम्' नृ-तिर्यग्-देवानां कोटिकोटिगणसङ्ख्यातः । 2 'अधियोजनान्तम्' "योजनप्रमाणमिति कर्मक्षयजः प्रथमोऽतिशयः" । 3 'विबोधमयाऽऽत्मदर्शे' केवलज्ञानयुक्ताऽऽत्मदर्पणे ।

[ 22 ] 4 'अध्वनीनान्' पान्थान् "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिकदेशिकौ" इति हैमः [ अभि० चि० कां० ३ श्लो० १५७ ] । 5 'उद्बोधयन्' उपदेशयन् । 6 'शिवगमे' मोक्षगमने । 7 'रत्नवरत्रयस्य' ज्ञान दर्शन चारित्रात्मकश्रेष्ठरत्नत्रियस्य ।

[ 23 ] 8 'वाणी' भाषा अर्द्धमागधी । 9 'अमर-मर्त्य पशुस्वभाषासंवादम्' देव-नर-तिरश्चां भाषया संवदतीति "वाणी नृ-तिर्यक्-सुरलोकभाषासंवादिनी योजनगामिनी च' इति कर्मक्षयजो द्वितीयोऽतिशय" [ अभि० चि० कां० १ श्लो० ५९ ] । 10 'त्रिपथप्रयाता' त्रिषु पथिषु गता । 11 'नानानयैः' विविधनयैः "नया अनेकविधाश्च परि तेषां पक्षनं लक्षणतो निर्दिष्टं तत्त्वार्थाधिगमादिसूत्रेषु । यथा "नैगम-संग्रह व्यवहार-र्जुसूत्र-शब्दा नयाः"–"आद्यशब्दौ द्वित्रिभेदौ" इति तत्त्वार्थसूत्रम् [ अ० १ सू० ३४-३५ ] ।

[ 24 ] 12 'ईतिर्न' "धान्याद्युपद्रवकारी प्रभूतो मूषकादि-प्राणिगणो न स्यादिति कर्मक्षयजः षष्ठोऽतिशयः" । 13 'भीतिः' "स्वराष्ट्रात् परराष्ट्राच्च भयं [ न स्याद् ] इत्येकादशोऽतिशयः" । 14 'अपनीतिः' "परस्परविरोधः [ न स्याद् ] इति पञ्चमोऽतिशयः" । 15 'असत्प्रतीतिः' असद्वस्तूनां प्रतीतिः । "मारिरौत्पातिकं सर्वगतं मरणम्, अतिवृष्टिः निरन्तरवर्षणम्, अवृष्टिः सर्वथा वृष्ट्यभावः, तथा दुर्भिक्षं भिक्षाणामभावः-इत्याद्यसद्वस्तुदर्शनं [ न स्याद् ] इति सप्तम-अष्टम-नवम-दशमातिशयाः" । 16 'रुजा' "रोगो ज्वरादिः [ न स्याद् ] इति चतुर्थोऽतिशयः" । 17 'प्रसरीसरीति' अतिशयेन प्रसारं प्राप्नोति । 18 'कनकपद्मनिविष्टपादः' "सुवर्णकमले न्यासीकृतौ पादौ येन स इति देवकृतः षष्ठोऽतिशयः" ।

[ 25 ] 19 'जवनपवनयोगाद्' वेगयुक्तपवनात् । 20 'उल्लसत्केतुहस्तैः' उल्लसन्तश्च ते केतवश्च ध्वजा एव हस्तास्तैः ।

[ 26 ] 21 'त्रिदशराज-भूमीभुजाम्' इन्द्र-राजाम् । 22 'पदत्रितयम्' 'उत्पाद-व्यय-ध्रौव्ययुक्तं सत्' इति तत्त्वार्थसूत्रम् [ अ० ५ सू० २९ ] इति पदत्रयीम् । 23 'गणभृद्गणः' एकादशगणधरसमूहः ।

---

* P मत्ते ।

तस्मादकम्पित इतोऽचलशब्दपूर्वो भ्राता गणप्रभुरभूद् गुणरत्नभूमिः ।
मेतार्य आर्यजनकार्यकृतां मुनीनां शास्ता प्रभासगणभृच्चरणप्रवीणः ॥ २८ ॥

एवं विधाय गणिनः श्रुतिसम्पदाढ्यान् दार्ढ्येन तीर्थमपि धर्मधियां समर्थम् ।
भव्याम्बुजानिव विबोधयितुं स लोके नव्यांशुमान् प्रविततान गवां विलासान् ॥ २९ ॥

मोहाभ्यमित्रविधिना गणनायकेभान् सन्नान् लसत्त्रिपदिकान् पुरतो विधाय ।
संस्कृत्य वाडवगणांश्चरणोपदेशे देशे चचाल विजिगीषुरिवाऽऽप्तराजः ॥ ३० ॥

संवर्धयन् समितितत्परसाधुलोके भावाद् गुणाधिकतया परमार्थवृत्तिम् ।
न्यस्यन्नपूर्वकरणे स नियोगिराजान् श्रीइन्द्रभूतिकलितश्चलितो बभासे ॥ ३१ ॥

श्रीधर्मचक्रमनुवृत्य कृतप्रयाणः सद्यः प्रसाधितसुमागधलोकपूज्यः ।
शुद्धव्रतप्रवरदामनियोजिताऽऽज्ञः प्राज्यप्रभासमधिगम्य चिरं स रेजे ॥ ३२ ॥

प्राभाकरीं रुचिमधः कृतवान् विलासैः काये गवां विधिवशाऽऽत्मनिदर्शनेन ।
ब्राह्मीमपि ध्रुवनियोगमहाबलेन तां वैष्णवीमथ जिनो गतदोषमुक्त्या ॥ ३३ ॥

निष्कासय दास्यकरसर्वपलाददोषं कादम्बरीरसकथां वितथां वितन्वन् ।
व्यावर्तयंश्च जनतां परदारभोगाचक्रीव सर्वविषयान् रुरुचे स जित्वा ॥ ३४ ॥

[३०] १ 'त्रिपदिकान्' त्रिपदी गात्रबन्धः, पक्षे 'उप्पन्नेइ वे'त्यादिका । २ 'वाडवगणान्' अश्वान् पक्षे विप्रान् । ३ 'चरणम्' चारित्रं पक्षे रणोपदेशे चः समुच्चये ।

[३१] ४ 'समिति०' समितय ईर्यायाः पक्षे सङ्ग्रामः । यद्वाऽऽस्थानं समितिस्तत्र तत्पराः । ५ 'गुणाधिकतया' गुणा धैर्यादयः पक्षे गुणस्थानकाधिकतया । ६ 'परमार्थवृत्तिम्' परमार्थं आध्यात्मिकभावः पक्षेऽर्थसम्बन्धिनीं वृत्तिमाजीविकाम् । ७ 'अपूर्वकरणे' करणानि राजदेयभागस्थानानि पक्षेऽपूर्वकरण आत्मवीर्यविशेषः । 'नियोगिराजान्' ८ नियोगिनो मन्त्रिणः पक्षेजिनाऽऽदेशकारिणः ।

[३२] ९ 'मागधलोकपूज्यः' मागधा मगधदेशवासिनः पक्षे मागधनीयंयासिदेयास्तेषु पूज्यः । १० 'शुद्धव्रतप्रवरदाम-नियोजिताऽऽज्ञः' शुद्धमहाव्रतान्येव वरदाममालिका तत्र निर्दिष्टाऽऽज्ञः पक्षे वरदामतीर्थम् । ११ 'प्राज्यप्रभासम्' प्राज्यां प्रकृष्टभासं दीप्तिं पक्षे तीर्थम् ।

[३३] १२ 'प्राभाकरीम्' प्रभाकरः सूर्यः पक्षे प्रभाकरो मीमांसकविशेषः । १३ 'रुचिम्' रुचिः कान्तिरिच्छा च ताम् । १४ 'काये' देहे षट्कायलक्षणे । १५ 'गवाम्' कान्तीनां पक्षे वचसाम् । १६ 'विधिवशाऽऽत्मनिदर्शनेन' विधिदर्शनमयाऽऽत्मिकधनेन । १७ 'ब्राह्मीम्' ब्राह्मीमपि रुचिमधस्कृतवान् । १८ 'ध्रुवनि० योग०' ध्रुवाधिकारेण नियोगकथने । १९ ''नियोग०' नियोगः निरासः । २० 'वैष्णवीम्' वैष्णवीमपि रुचिं निर्दोषाऽऽहारेण रात्री भोजननिषेधेन सूर्यपक्षे सूर्य-ब्रह्म-विष्णूनां रुचिपराजयात् ॥

[३४] २१ 'पलाददोषम्' मांसभोजनम् । २२ 'कादम्बरी' कादम्बरी सुरा । २३ 'सर्वविषयान्' सर्वे विषयाः शब्दादयः पक्षे देशाः ।

[28] 1 'चरणप्रवीणः' चरणं चारित्रं सावद्ययोगला-गस्तस्मिन् प्रवीणः कुशलः ।

[29] 2 'गणिनः' गम्यन्ते पूज्यतयेति गणिनस्तानसुधानान् "अनुचानः प्रवचने साङ्गेऽधीति गणिच स." इति हैमः [ अभि० चि० कां० १ श्लो० ७८ ] । 3 श्रुतिसंपदाढ्यान्' श्रुतिः द्वादशाङ्गी सैव संपत् तयाऽऽढ्यान् सहितान् । 4 'तीर्थम्' तीर्यते संसारसमुद्रोऽनेनेति तीर्थं प्रवचनाधारः साधु-साध्वी-श्रावक-श्राविकासङ्घरूप-चतुर्विधसङ्घरूपम् । प्रथमगणधरं वा । 5 'भव्याम्बुजान्' भव्या मोक्षगमनयोग्यास्त एवाम्बुजान्यब्जानि । 6 'विबोधयितुम्' उपदेष्टुं विकासयितुं वा । 7 'नव्यांशुमान्' नवीनसूर्यः । 8 'गवाम्' वाचां किरणानां वा ।

[30] 9 'मोहाभ्यमित्रविधिना' मोहः कामक्रोधादिरमित्रविधिनाऽऽभिमुख्येन निग्रहसंमतौ तस्य विधिस्तेन । 10 'गणनायकेभान्' गणनायकेष्विभान् हस्तिनः श्रेष्ठगणधरानित्यर्थः । 11 'त्रिपदिकान्' त्रिपदी गात्रबन्धः गात्रयोर्द्वयोरग्रजङ्घयोः पश्चिमजङ्घायां गजस्य बन्धस्तान् । 12 'आप्तराजः' आप्तो हितोपदेष्टा साक्षात् इव आप्तेषु राजेति ।

[32] 13 'श्रीधर्मचक्रम्' "श्रीधर्मचक्राङ्कं चक्रमिति देवकृतः प्रथमोऽतिशयः" । 14 'अनुवृत्य' अनुगम्य ।

[34] 15 'पलाददोषम्' राक्षसमांसभक्षणादिदोषम् ।

[37] 16 'चितुपरानिधिः' "भवनाद्विरपनुपदेशनिदानानां सन्निधिः सामीप्यं सा जघन्योऽपि कोटिमितेति देवकृतोऽष्टादशोऽतिशयः" । 17 'पद्मदलः' पद्मादिनाशेषपत्रे चैवं-"मङ्गलाय पद्मस्य सङ्खो मकर-कच्छपौ । मुकुन्द-कुन्द-नीलाश्च खर्वश्च निधयो नव" । इति हैमः [अभि० चि० कां० २ श्लो० १०७] ।

औदारिकप्रकृतिना कृतिनायकेनाऽऽजह्रेऽनुपाधिकबलैः सह साधनं यत् ।
लोके कृपावलमिदं लभतां यदेप तस्मादनन्तगुणवित्तगुणं प्रतीत्य ॥ ३५ ॥
पुंनागतः प्रवन्नृते वरदानवृत्तिर्गन्धर्वसङ्गतिरतिप्रवलप्रमोदात् ।
तन्मण्डले विहरति क्षितिनाथरूपे सर्वस्य वश्यकरणं ननु वीतरागे ॥ ३६ ॥
नित्योऽभवद् विबुधसन्निधिरेव सेवा देवाधिपैरपि समाद्रियते स्म भद्रा ।
पद्मादयोऽथ निधयो वसुपद्मवर्गच्छद्माश्रयात् क्षितितले प्रकटीबभूवुः ॥ ३७ ॥
जन्या इवास्य पुरतो मरुतोऽपि धन्या धन्यास्तदानृतुबला ननृतुर्बलात् ते ।
सद्भावनापरवशाः खलु भावनानां नाथा दधुर्मधुरगानविधिं गुणानाम् ॥ ३८ ॥
आस्थाय धीरपुरुषश्चरणोन्मुखः सन् स्थानानि नाम बहुधाऽङ्गनियोजितानि ।
जीवानुचिन्तनमतिर्भुवि चापरागः को वा जिगाय न रयात् परमोहवर्गम् ॥ ३९ ॥
कश्चिच्चैजिह्मगमनाः कृतहस्तमुख्यो दण्डं दधौ समरसङ्गत एव कश्चित् ।
आक्रान्तमौलिकलया करवालकर्पी कश्चित् परस्परमभूत् सहसाऽस्त्रबुद्धिः ॥ ४० ॥
उज्जागरः प्रबलसंयतिकर्मशूरः पार्श्वस्थतां न चकमे बहुधा रणार्थी ।
नैव प्रतिग्रहरुचिर्बहुसाधुवाही दण्डादिसज्जनकरः परवारणेपी ॥ ४१ ॥
उच्चारणेऽप्युपनता बहुशोधनाऽऽढ्या विद्याधरा अनवसन्नचरित्रभाजः ।
धीरक्रियाप्रियतया गगनाध्वनीना आज्ञां जिनस्य विपुलां व्यधुरूर्द्धलोके ॥ ४२ ॥
क्षेत्राश्रयेण धनुरादिविमर्शनानि जीवावधारणधियः प्रवितेनिरेऽमी ।
तत्रेपुयोजनगतिं हृदि निर्णयन्तो लक्षादिमाङ्कविनिविष्टदृशोऽधिसङ्ख्यम् ॥ ४३ ॥
मोहोदयेन पतिताः पुनरप्रमत्ताः सम्यग् गुणादरभृतोऽधिकमार्गणानाम् ।
संयोजनेन विजयश्रियमाश्रयन्तः प्रासादि केवलितयाऽनवसानसौख्यम् ॥ ४४ ॥

[ ३५ ] १ 'आजह्रे' तह्लोकानुग्रहाय । २ 'अनुपाधिकबलैः' अनुपाधिभिर्निर्दोषकबलैः पक्षे स्वाभाविकसेनाभिः ३ 'साधनम्' चारित्रं तेन सह यथा स्यात् तथा । 'सहसा, धनम्' इति पदविभागे धनं सहसाऽऽजह्रे तदपि लोकानुग्रहाय न्यायवतो राज्ञो न लोभतः ।

[ ३६ ] ४ 'पुंनागतः' पुन्नागाः श्रेष्ठनरा गजाश्च । ५ 'गन्धर्व०' अश्वाः गायकाश्च । ६ 'क्षितिनाथरूपे' प्रशस्तः क्षितिनाथः क्षितिनाथरूपस्तस्मिन् । ७ 'वीतरागे' वीतमङ्कुशवारणं निपादिनां पादकर्म तद्द्वयं यत्र रागो यस्य [—"यातमङ्कुशवारणम् । निपादिनां पादकर्म यतं वीतं तु तद्द्वयम्" इति हैमः [ अभि० चिं० कां० ४ श्लो० २९१ ] यद्वा 'नु' इति वितर्के न वीतरागे वीतं फल्गुहयद्विपमिति हैमः ।

[ ३७ ] ८ 'वसुपद्म०' वसु स्वर्णं तस्य पद्मानि ।

[ ३८ ] ९ 'धन्याः' वानमन्तरा मरुतो देवाः, पक्षे वनवायवः । १० 'भावनानाम्' भवनपतिदेवानाम् । ११ 'गुणानाम्' वासनागीतगुणानाम् ।

[ ३९ ] १२ 'स्थानानि' आलीढादीनि । १३ 'जीवा०' जीवा मौर्वी । १४ 'अपरागः' विगतरागः, पक्षे धनुषि रागवान् ।

[ ४० ] १५ 'अजिह्मगमनाः' अजिह्मगं ऋजु मनो यस्य, पक्षे शरे मनो यस्य ।

[ ४४ ] १६ 'प्रासादि' प्राप्तम् । १७ 'केवलितया' [ के, बलितया—इति पदविभागे ]—बलितया न प्राप्ताः स्वच्छन्दाः केन सुखं प्राप्ताः । १८ 'अनवसानसौख्यम्' अनवसानमनन्तं सुखम् ।

[ 38 ] 1 'अनृतुबला.' ऋतभावबलाः । "अनुकूलो वायुः ऋतभावेऽपि महतीति देवकृतश्चतुर्दशोऽतिशयः" ।

[ 39 ] 2 [illegible] यः सपुधये रणे । 3 'जीवानुचिन्तनमति.' [illegible] ति. रक्षणबुद्धिः ।

[ 40 ] [illegible] यः स ।

[ 41 ] [illegible] 'प्रबलसंयतिकर' [illegible] प्रबल [illegible] । 7 'चं' [illegible] इयेष । 8 'प्रतिग्रहरुचिः' प्रतिग्रह सैन्यपृष्ठे रुचिर्यस्य । 9 'बहुसाधुवाही' बहून् साधून् वोढुं शीलं यस्य सः ।

[ 42 ] 10 'अनवसन्नचरित्रभाजः' नावसीदत्यनवसन्नं चरित्रं भजन्त इति । 11 'गगनाऽध्वनीनाः' आकाशचारिण. ।

[ 43 ] 12 'अमी' विद्याधराः । 13 'अधिसङ्ख्यम्' युद्धम् ।

[ 44 ] 14 'अधिकमार्गणानाम्' अधिकबाणानाम् । 15 'सं- [illegible] व्यापृतेन ।

केचित् पुनः प्रतिमयाऽऽसमयानुसारा व्युत्सृष्टकायमुपसर्जनभावनेन ।
स्थानं विधाय समपादमिवाऽऽदरेण तस्थुर्निरर्गलबलप्रजिघांसयैव ॥ ४५ ॥
तेजोऽदसीयमपहन्तुमिवासमर्थान् आलोचनोपधिपरिग्रहदण्डजार्थान् ।
निश्चित्य दुष्टपरमोहमहीश्वरोऽपि प्राप्तः क्रमाच्छिथिलतां स्वत एव बिभ्यत् ॥ ४६ ॥
दक्षाः पराक्रमधियाऽऽवरणस्य भङ्क्तुं शूरा विचेरुरभितो विषये क्षमायाः ।
मुक्तैषिणः सरसमूहमिहाऽऽदिशन्तः सन्तः स्थिता धृतरुचः खलु मण्डलाग्रे ॥ ४७ ॥
वाणी विभोर्भगवती वरशक्तिरूपा सन्मानसंदृढतरा प्रविवेश साक्षात् ।
तस्या रुचिप्रबलमण्डलदर्शनेन भीतः पलाय्य विगतः क्वचनापि मोहः ॥ ४८ ॥
एवं क्षमाधनवरैः प्रभुशासनेन प्रोद्भासिते समितिकर्मणि सांयुगीनैः ।
विश्वाभ्युदीर्णचरमोहबलक्षयोऽभूदेकातपत्रजिनराजमहोदयाय ॥ ४९ ॥
विद्याश्चतुर्दश जिनेश्वरशासनान्तः प्रादुर्बभूवुरुपमानमितास्तु रत्नैः ।
प्रत्येकमासधिकृता मुनयः सहस्रं तस्माच्चतुर्दशसहस्रगणस्तदीयः ॥ ५० ॥
नन्दीरवादभिनवाद् भुवि गर्जयन्तः सर्वानुयोजनविधौ निपुणा गुणाढ्याः ।
गुप्तीश्वराः कुसमयार्थविनाशनेन भान्ति स्म साधुगणिनो जिनशासनेन ॥ ५१ ॥
केचिज्जनाः प्रकृतिनिश्चलताऽभ्युपायं व्यातेनिरे नरवरस्थितिबन्धतर्कम् ।
यस्मात् परः शतगुणो रसबन्ध एव प्रादेशिकं समुदयं जनयत्यवश्यम् ॥ ५२ ॥

---

[ ४५ ] १ 'प्रतिमया०' कायोत्सर्गेण, पक्षे मयो नाम उष्ट्रविशेषस्तं प्रतीति प्रतिमयम् । २ 'आसमयानुसारा' आसमयं यथाऽवसरमनुसारश्छलादिना येषां ते । ३ 'व्युत्सृष्टकायम्' त्यक्तशरीरं यथा स्यात् तथा । ४ 'उपसर्जनभावनेन' स्वदेहेऽप्यनादरबुद्ध्या गौणत्वभावनया । ५ 'समपादम्' समपादं स्थानं कायोत्सर्गे, बाणविसर्गे वा । ६ 'निरर्गलबल०' निरर्गलं स्वतन्त्रं प्रबलं वा बलं शारीरम् ।

[ ४६ ] ७ 'अदसीयम्' कायोत्सर्गकृतं छलेन रणकर्मणा वा । ८ 'आलोचनोपधिपरिग्रहदण्डजार्थान्' आलोचना प्रायश्चित्तस्थानं पक्षे आलोचनं मन्त्रः, उपधिपरिग्रहो वस्त्र-पात्रादि स्वकं वा, दण्डा मनोदण्डादयः सैन्यं वा तेनोत्पन्नार्थान् ।

[ ४७ ] ९ 'पराक्रम०' पराक्रमो बलं, पर उत्कृष्टोऽक्रमो युगपद्भावः । १० 'आवरणस्य' आवरणं ज्ञानावरणादिर्वैरिणो वप्रस्तस्य । ११ 'विषये' देशे गोचरे वा । १२ 'क्षमायाः' क्षान्तेः, भूम्या वा । १३ 'मुक्तैषिणः' मुक्ताः सिद्धजीवाः, मुक्तं शस्त्रविशेषः पाणियन्त्राभ्याम् । १४ 'सरसमूहम्' सरसं रसयुक्तमूहं वितर्कं पक्षे शरसमूहः । १५ 'आदिशन्तः' कथयन्तो मुञ्चन्तो वा । १६ 'धृतरुचः' धृतदीप्तयः । १७ 'मण्डलाग्रे' खड्गे मण्डलमुखे मण्डलमत्र सूत्रमण्डलं वा ।

[ ४८ ] १८ 'रुचिप्रबलमण्डलदर्शनेन' रुचिरिच्छारूपं प्रबलमण्डलं प्रकृष्टवरवारि तस्य दर्शनेन दीप्तेः प्रकर्षपुञ्जदर्शनेन वा ।

[ ४९ ] १९ 'क्षमाधनवरैः' क्षमाधना मुनयो भूपा वा ।

[ ५१ ] २० 'नन्दीरवः' वाद्यसमूहशब्दः नन्दीसूत्रपाठो वा । २१ 'सर्वानुयोजन०' सर्वानुयोजनं सर्वमनुयोजनं पृच्छा, अनुयोगो वा । २२ 'गुप्तीश्वराः' गुप्तयो मनोगुप्त्याद्याः कारागृहं वा ।

[ ५२ ] २३ 'प्रकृति°' प्रकृतयो ज्ञानावरणाद्याः, प्रजा लोको वा । २४ '°निश्चलता°' निश्चलता स्वास्थ्यं निर्जरणं वा । २५ 'नरवरस्थितिबन्धतर्कम्' राज्यस्थितिविचारं, मनुजगत्यायुःस्थितिबन्धं वा । २६ 'रसबन्धः' प्रजास्नेहः कर्मरसबन्धो वा । २७ 'प्रादेशिकः' देशसम्बन्धी प्रदेशबन्धो वा ।

---

[ 46 ] 1 'अदसीयम्' असेदमदसीयम् । 2 'दुष्टपरमोहमहीश्वरः' दुष्टो यः परश्चासौ मोहश्च शत्रुस्वरूपः कामदेवः स एव महीश्वरो राजा ।

[ 48 ] 3 'सन्मानसंदृढतरा' सन्मानेन सम्यगतिशयेन दृढेति । 4 'पलाय्य' नंष्ट्वा । 5 'मोहः' कामदेवः ।

[ 49 ] 6 'समितिकर्मणि' ईर्यादिकार्ये रणे वा । 7 'सांयुगीनैः' तत्परैः । 8 'विश्वाभ्युदीर्णचरमोहबलक्षयः' विश्वेऽभ्युदीर्णः कृतः चरतो मोहस्य कामदेवस्य बलं तस्य क्षयः नाशो येन सः । 9 'एकातपत्र°' एकमद्वितीयमातपत्रं छत्रं यस्य सः ।

---

* P °राज्य° ।

आचारवर्तनिकयाऽधिजगाम साधोरन्यस्य वाऽनुचरितं सकलो नियोगी ।
निर्वेशन-प्रविशने चरणेऽनुरागादावेदयन् स पुरुषोत्तमराजवाक्यात् ॥ ५३ ॥
ज्ञात्वाऽऽत्मनस्तदितरस्य विबोधवृत्तीर्देशस्थसूत्रकृदभिज्ञपुराणवाचा ।
न्यायं प्रयुज्य तदनीतिपदाद् वियुज्य स्वार्थं परार्थमिव साधयति स्म धीरः ॥ ५४ ॥
श्रेणीहिताय मनसो वचसोऽपि वृत्तिं यत् सामवायिकजनो विजनेऽपि दध्यौ ।
तिष्ठन्स्खलन्नुपविशन् निविशन् शयानोऽप्यश्नन् नयानुपदिदेश तथा जिनेशः ॥ ५५ ॥
प्राधान्यमाप बहुधाऽन्यमहोपकारः स्फारानुरागपरभागदशाऽऽगमानाम् ।
मर्यादया विशदया ननु देशरूपं जज्ञे क्षमाधनगणे समरोचितेऽपि ॥ ५६ ॥
पूर्वस्थितिः प्रकटिताऽत्र विशिष्य लोके तस्याः परं परिणतिः खलु वस्तुलभ्या ।
श्रीप्राभृते प्रतिपदं परमोऽधिकारोऽन्या विश्रुतश्रुतकथासु तथा प्रथाऽऽसीत् ॥ ५७ ॥
नो नैगमादिषु परस्परबाधयोगो नो पश्यतोहरदशापि जनस्य काचित् ।
नो मन्दबुद्धिरपि सङ्गरतः कथञ्चित् श्रीशासने भगवतः स्फुटतामुपेते ॥ ५८ ॥
मन्युर्न चेतसि पदं मनुजस्य चक्रे यस्मिन् भवेदसुमतां विनिपातवृत्तिः ।
ब्रह्मक्रियासु निरतेऽपि पलादरूपं प्रादुर्भवेद् गुरुजनेऽप्यविकल्पना गीः ॥ ५९ ॥
नासिद्धताऽपि च मिथो न विरुद्धताऽऽसील्लभ्यं क्वचिन्न विहितव्यभिचारकर्म ।
बाधो न यत्र समयेऽप्रतिपक्षभावः कस्तीर्थभास्करमते रमते न विद्वान् ॥ ६० ॥

---

[५३] १ 'आचारवर्तनिकया' आचारा ज्ञानाचाराद्याः, आसमन्ताच्चारणां गूढपुरुषाणां प्रवृत्त्या । २ साधोः मुनेः न्यायवद्लोकस्य वा । ३ 'अन्यस्य' असाधोश्चौरादेः । ४ 'नियोगी' मुनिः मन्त्री वा । ५ 'निर्वेशन-प्रविशने' निर्गम-प्रवेशौ तयोः समाहारस्तस्मिन् । ६ 'चरणे' चारित्रे रणे वा । ७ 'पुरुषोत्तम°' पुरुषोत्तमोऽर्हन् ।

[५४] ८ 'आत्मनः' जीवस्य । ९ 'तदितरस्य' अजीवस्य । १० 'विबोधवृत्तीः' ज्ञानवार्ताः । ११ 'देशस्थसूत्रकृदभिज्ञ°' पार्श्वस्थिता ये सूत्रकृतोऽङ्गस्याभिज्ञा ज्ञातारः, पक्षे देशस्थसूत्रकृतो देशमुख्यजनाः । १२ 'स्वार्थम्' स्वस्य धनस्यार्थं कार्यमात्मकार्यं वा ।

[५५] १३ 'श्रेणी°' श्रेणिः क्षपकश्रेण्यादिः पौरश्रेणी वा । १४ 'सामवायिकजनः' समवायाङ्गवेत्ता मन्त्री वा ।

[५६] १५ 'बहुधान्यमहोपकारः' बहुधा, अन्यस्य महोपकारः, बहुधान्यनिष्पत्तिः । १६ '°परभाग°' 'परभागो गुणोत्कर्षः' इति हैमः [अभि० चि० कां० ६ श्लो० ११] । १७ '°आगमानाम्' आगमा वृक्षा रसालाद्याः, सिद्धान्ता वा । १८ 'देशरूपम्' न्यायः । १९ 'क्षमाधनगणे' क्षमाधना मुनयो भूपा वा । २० 'समरोचिते' समेन रोचिते, समरे उचिता वा ।

[५७] २१ 'पूर्वस्थितिः' पूर्वेषामां स्थितिः पूर्वाणामुत्पादादीनां स्थितिर्वा । २२ 'वस्तुलभ्या' वस्तु परमार्थस्तत्त्वं तेन लभ्या, वस्तु अधिकारविशेषो वा । २३ 'श्रीप्राभृतम्' लक्ष्मीढौकनम्, प्राभृतोऽत्र पूर्वाधिकारः ।

[५८] २४ 'नैगमादिषु' नैगमादयो नयाः, वणिजो समूहेषु वा । २५ 'पश्यतोहरदशा' पश्यतोहरस्तस्करः, पश्यतो विचारयतो वा हरदशा ईश्वरधर्माङ्गीकारः । २६ 'सङ्गरतः' सङ्ग्रामात् प्रतिज्ञाया वा ।

[५९] २७ 'मन्युः' कोपो यज्ञश्च । २८ 'विनिपातवृत्तिः' प्राणिघातवृत्तिः । २९ 'ब्रह्मक्रियासु' ब्रह्मचर्यकर्मसु । ३० 'निरते' तत्परे ब्राह्मणेऽपि मांसाशनम् । ३१ 'पलादरूपम्' राक्षसस्वरूपम् । ३२ 'गुरुजने' गुरुलोके । ३३ 'अविकल्पना गीः' अविद्यमानजीवस्तस्य कल्पना मारणं तस्या वाक् ।

---

[60] 1 'नासिद्धता' असिद्धताऽसिद्धिर्न परं सिद्धिरेव । 2 'विरुद्धता' विरोधः । 3 'तीर्थभास्करमते' तीर्थं तीर्थङ्कर. 'भामा सत्यभामा' इति न्यायात्, तीर्थङ्कर एव भास्करः सूर्यस्तस्य मते सिद्धान्ते ।

एवं दैवतदैवरूपबलतः पुण्यानुपुण्यान्नृणां
साम्राज्यं परमोपकारि चरणाऽऽरम्भेन लेभे विभुः ।
वीरः केसरिणाऽभिलाञ्छिततनूर्नूनं नृसिंहोपमा-
वर्ण्यः स्वर्णसवर्णरोचिरचिराद् देयात् स नः प्रार्थितम् ॥ ६१ ॥

कृत्वा तत्त्वनिदेशपेशलतरं देशं जिनेशः स्वयं
मिथ्यात्वोदयदुस्तमान्धतमसं सान्द्रं विनीय व्ययम् ।
श्रीसूक्ष्मक्रियमद्वयं व्युपरताशेषक्रियं चाव्ययं
ध्यायन्नापदपापपूःपरिसरे श्रीसिद्धशर्मोदयम् ॥ ६२ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
कथानायकवंशमूलस्य श्रीवीरस्य भगवतो दिग्विजयवर्णनो
नाम तृतीयः सर्गः ॥ ३ ॥



[ 61 ] 1 'चरणाऽऽरम्भेन' चरणं चारित्रं तस्याऽऽरम्भस्तेन । 2 'केसरिणा' सिंहेन लाञ्छनेन । 3 'स्वर्णसवर्णरोचिः' सुवर्णसमाना रोचिः कान्तिः श्रीवीरस्य काञ्चनवर्णत्वात् ।

[ 62 ] 4 'तत्त्वनिदेशपेशलतरम्' तत्त्वानि नव, तेषां निदेशेनोपदेशेनातिशयेन शोभनमिति । 5 'देशम्' भारतवर्षम् । 6 'विनीय' कृत्वा । 7 'व्युपरताशेषक्रियम्' शमिना समभाऽऽरम्भादिक्रिया यस्मिन् तं देशम् । 8 'आपद्' प्राप । 9 'अपापपूःपरिसरे' अपापानगरीविस्तारे ।

## चतुर्थः सर्गः ।

अथ जिनपतिपट्टे श्रीसुधर्मा गणीन्द्रो दिनपतिरिव रेजे राजराजाधिगम्यः ।
गणधरगणनायां पञ्चमोऽप्याप्य एव विनयनयतपोभिर्योऽतिशेते स्म सर्वैः ॥ १ ॥
तदनु दनुजपूज्यः प्राज्यतेजा हि जम्बूर्गणपतिरुदियायोन्निद्रजाम्बूनदश्रीः ।
प्रभव इति गुरुस्तत्पट्टपद्मांशुमाली गणधरमणिरस्मादेव शय्यंभवाऽऽख्यः ॥ २ ॥
तदनु गणहिमांशुः श्रीयशोभद्रसूरिर्विजितविबुधसूरिस्तस्य पट्टेऽद्वयीयम् ।
प्रगुणगुणविभूतिश्चारुसंभूतिशब्दाद् विजय इति मुनीन्दुर्भद्रबाहुर्द्वितीयः ॥ ३ ॥
श्रुतसुरतरुमूलं स्थूलभद्रोऽनुकूलं समजनि यशसाऽऽशासुन्दरीणां दुकूलम् ।
तदनु च गिरिनामाऽऽर्यो महादिः सुहस्ती द्वयमपि गणराजौ पट्टभाजौ तदीयौ ॥ ४ ॥
परमपि युगलं स्यात् सुस्थितः सुप्रबुद्धः श्रमणगणभृदिन्द्राद् दिन्नसूरिस्ततोऽभूत् ।
गणगुरुरुरुकीर्तिर्दिन्ननामाऽथ सिंहाद् गिरिगणविभुरस्माद् वज्रसूरिः सुरेज्यः ॥ ५ ॥
प्रसृमरमुनिसेनः सूरिराड् वज्रसेनः शमिपतिरथ चन्द्रश्चारुसामन्तभद्रः ।
नव इव सुरसूरिर्वृद्धदेवाऽऽख्यसूरिर्गणपतिरतिशायिप्रोदितद्योतनाऽऽह्वः ॥ ६ ॥
प्रणतनृपतिदेवः सूरिराणमानदेवः क्षितिधर इव तुङ्गः स्वैर्गुणैर्मानतुङ्गः ।
सुरगिरिरिव धीरः श्रीधरो वीरसूरिः प्रभुरपि जयदेवश्चारुताकामदेवः ॥ ७ ॥

---

[1] 1 'जिनपतिपट्टे' श्रीवर्द्धमानस्वामिपट्टे ।

(१) 'श्रीसुधर्मा' श्रीसुधर्मस्वामी । 2 'दिनपतिः' सूर्यः । 3 'पञ्चमोऽप्याप्य एव' एकादशानामपि गणधरपदस्थापनाऽवसरे श्रीवीरेण श्रीसुधर्मस्वामिनं पुरस्कृत्य गणोऽनुज्ञातः दुष्प्रसहं यावत् श्रीसुधर्मस्वाम्यपत्यानामेव प्रवर्तनात् ।

[2] 4 'दनुजपूज्यः' असुरैः पूज्यः वन्द्यः 'असुरा दितिदनुजाः' इति हैमः [ अभि० चिं० का० २ श्लो० १५२ ] (२) 'जम्बूः' श्रीसुधर्मस्वामिपट्टे द्वितीयः श्रीजम्बूस्वामी । 5 'उन्निद्रजाम्बूनदश्री.' उन्निद्रा विकसिता जम्बूनदस्य सुवर्णस्य श्रीः शोभा यस्य स. । (३) 'प्रभवः' श्रीजम्बूस्वामिपट्टे तृतीयः श्रीप्रभवस्वामी । (४) 'शय्यंभवाऽऽख्यः' श्रीप्रभवस्वामिपट्टे चतुर्थः श्रीशय्यंभवस्वामिनामा ।

[3] (५) 'श्रीयशोभद्रसूरिः' श्रीशय्यंभवस्वामिपट्टे पञ्चमः श्रीयशोभद्रसूरिः । 7 'विजितविबुधसूरि.' विजितः विबुधाना सुराणां सूरिराचार्यो बृहस्पतिरित्यर्थ. । (६) 'सम्भूतिशब्दाद् विजयः'–'भद्रबाहुः' इति द्वौ श्रीयशोभद्रसूरिपट्टे षष्ठौ श्रीसंभूतिविजय-श्रीभद्रबाहुस्वामिनावभूताम् ।

[4] 6 'श्रुतसुरतरुमूलम्' श्रुतानि चतुर्दशपूर्वाण्येव सुरतरवो देववृक्षास्तेषां मूलम् । (७) 'स्थूलभद्रः' श्रीसम्भूतिविजय-श्रीभद्रबाहुस्वामिनोः पट्टे सप्तमः श्रीस्थूलभद्रस्वामी । (८) 'गिरिनामाऽऽर्यो महाऽऽदि' सुहस्ती' श्रीस्थूलभद्रस्वामिपट्टेऽष्टमौ श्रीआर्यमहागिरि-श्रीआर्यसुहस्तीसूरिरिति द्वौ बभूवतुः ।

[5] (९) 'सुस्थितः सुप्रबुद्धः' 'श्रीआर्यमहागिरि-श्रीआर्यसुहस्तिसूरिपट्टे नवमौ श्रीसुस्थित-सुप्रतिबद्धसूरी । (१०) 'इन्द्राद् दिन्नसूरिः' 'सुस्थित-सुप्रतिबद्धपट्टे दशमः श्रीइन्द्रदिन्नसूरिर्बभूव । (११) 'दिन्ननामा' इन्द्रदिन्नसूरिपट्टे एकादश. श्रीदिन्नसूरिः बभूव । (१२) 'सिंहाद् गिरिगणविभुः' श्रीदिन्नसूरिपट्टे द्वादशः सिंहगिरिर्बभूव । 'गिरिगणविभु.' सिंहाद् गिरिरिति सिंहगिरिरेव गणेषु विभु प्रभुरिव । (१३) 'वज्रसूरिः' श्रीसिंहगिरिपट्टे त्रयोदशः श्रीवज्रस्वामी बभूव ।

[6] (१४) 'वज्रसेनः' श्रीवज्रसूरिपट्टे चतुर्दश' श्रीवज्रसेनसूरिः । (१५) 'चन्द्रः' वज्रसेनसूरिपट्टे पञ्चदशः श्रीचन्द्रसूरिर्बभूव । (१६) '°सामन्तभद्रः' 'श्रीचन्द्रसूरिपट्टे षोडशः श्रीसामन्तभद्रसूरिर्बभूव । (१७) 'वृद्धदेवाऽऽख्यसूरिः' 'श्रीसामन्तभद्रसूरिपट्टे सप्तदश. श्रीवृद्धदेवसूरिनामा बभूव । (१८) 'प्रोदितद्योतनाऽऽह्व.' 'श्रीवृद्धदेवसूरिपट्टेऽष्टादशः प्रद्योतनसूरिनामा सञ्जातः ।

[7] (१९) 'मानदेवः' श्रीप्रद्योतनसूरिपट्टे एकोनविंशतितम श्रीमानदेवसूरिः । (२०) 'मानतुङ्गः' श्रीमानदेवसूरिपट्टे विंशतितमः श्रीमानतुङ्गसूरिजातः । (२१) 'वीरसूरिः' श्रीमानतुङ्गसूरिपट्टे एकविंशतितमः श्रीवीरसूरिर्बभूव । (२२) 'जयदेवः' श्रीवीरसूरिपट्टे द्वाविंशतितमः श्रीजयदेवसूरिर्बभूव ।

सुरपतिरिव देवानन्दनामा द्विधापि कमनदमनकान्तिर्विक्रमोऽपि क्रमेण ।
समजनि नरसिंहः सूरिरुत्सारितारिर्गुणगणमणिराशेः श्रीसमुद्रः समुद्रः ॥ ८ ॥

पुनरपि गुरुरासीन्मानदेवो द्वितीय-
स्तदनु विबुधशब्दाच्छ्रीप्रभोऽप्यद्वितीयः ।
भुवि विजितजयार्थः श्रीजयानन्दसूरिः
प्रवचनरविरूपोऽस्माद् रवेः श्रीप्रभाऽऽह्वः ॥ ९ ॥

यशसि शशिसमानः श्रीयशोदेवसूरिः स्मर इव कमनीयः प्रोचितद्युम्नसूरिः ।
शमकमलविवस्वान् मानदेवस्तृतीयस्तदनु विमलचन्द्रश्चन्द्रमाश्चन्द्रगच्छे ॥ १० ॥
रुचिभरजितभूरिः सूरिरुद्योतनोऽस्मादवनतनरदेवः सर्वदेवो गणेन्द्रः ।
धृतचरणविशुद्धिर्देवसूरिः सुबुद्धिः पुनरपि गणभर्त्ता सर्वदेवोऽद्वितीयः ॥ ११ ॥
कुनयजययशोभित् श्रीयशोभद्रनामा तदनु च मुनिचन्द्रश्चन्द्रनिस्तन्द्रकीर्त्तिः ।
गणभृदजितदेवः सेवनासक्तदेवस्तदनु विजयसिंहः सिंहवत् साहसेन ॥ १२ ॥
सुजननयनसोमः सोमनाम्नः प्रभोऽभूद् गुरुरपि मणिरत्नस्तद्द्वयं चैकपट्टे ।
बहुतपसि वितन्द्रः श्रीजगच्चन्द्रसूरिरजनि मुनिनरेन्द्रोऽस्मात् स देवेन्द्रसूरिः ॥ १३ ॥
तदनु मुनिसमूहं धर्मघोषः पुपोष पुनरभवदमुष्मात् सोमशब्दात् प्रभोऽन्यः ।
तदनु तिलकसूरिः सोमपूर्वो बभूव गणगुरुरथ देवात् सुन्दराऽऽह्वानसूरिः ॥ १४ ॥

---

[8] (२३) 'देवानन्दनामा' श्रीजयदेवसूरिपट्टे त्रयोविंशतितमः श्रीदेवानन्दसूरिः । (२४) 'विक्रमः' श्रीदेवानन्दसूरिपट्टे चतुर्विंशतितमः श्रीविक्रमसूरिर्जातः । (२५) 'नरसिंहः' श्रीविक्रमसूरिपट्टे पञ्चविंशतितमः श्रीनरसिंहसूरिर्जज्ञे । (२६) 'श्रीसमुद्रः' श्रीनरसिंहसूरिपट्टे षड्विंशतितमः श्रीसमुद्रसूरिः संभूतः ।

[9] (२७) 'मानदेवः' श्रीसमुद्रसूरिपट्टे सप्तविंशतितमः श्रीमानदेवसूरिर्जातः । (२८) 'विबुधशब्दाच्छ्रीप्रभः' श्रीमानदेवसूरिपट्टेऽष्टाविंशतितमः श्रीविबुधप्रभसूरिरभवत् । (२९) 'श्रीजयानन्दसूरि.' श्रीविबुधप्रभसूरिपट्टे एकोनत्रिंशत्तमः श्रीजयानन्दसूरिर्जज्ञे । (३०) 'रवेः श्रीप्रभाऽऽह्व.' श्रीजयानन्दसूरिपट्टे त्रिंशत्तमः श्रीरविप्रभसूरिः सञ्जातः ।

[10] (३१) 'श्रीयशोदेवसूरि.' श्रीवीरप्रभसूरिपट्टे एकत्रिंशत्तमो नागरब्राह्मण. श्रीयशोदेवसूरिरुदियाय । (३२) 'प्रोचितद्युम्नसूरिः' श्रीयशोदेवसूरिपट्टे द्वात्रिंशत्तमः श्रीप्रद्युम्नसूरिर्बभूव । 1 'शमकमलविवस्वान्' शमः शान्तिस्तद्रूपं कमलं तं विकासयितुं विवस्वान् सूर्य इव । (३३) 'मानदेवः' श्रीप्रद्युम्नसूरिपट्टे श्रीमानदेवसूरिरजनि । (३४) 'विमलचन्द्रः' श्रीमानदेवसूरिपट्टे चतुस्त्रिंशत्तमः श्रीविमलचन्द्रसूरिर्बभूव ।

[11] (३५) 'उद्योतनः' श्रीविमलचन्द्रसूरिपट्टे पञ्चत्रिंशत्तमः श्रीउद्योतनसूरिः समजायत । (३६) 'सर्वदेवः' श्रीउद्योतनसूरिपट्टे षट्त्रिंशत्तमः श्रीसर्वदेवसूरिर्बभूव । (३७) 'देवसूरिः' श्रीसर्वदेवसूरिपट्टे सप्तत्रिंशत्तमः श्रीदेवसूरिर्जज्ञे । (३८) 'सर्वदेवः' श्रीदेवसूरिपट्टे अष्टत्रिंशत्तमः पुनः श्रीसर्वदेवसूरिरभूत् ।

[12] (३९) 'श्रीयशोभद्रनामा' श्रीसर्वदेवसूरिपट्टे एकोनचत्वारिंशत्तमः श्रीयशोभद्रसूरिरभवत् । (४०) 'मुनिचन्द्रः' श्रीयशोभद्रसूरिपट्टे चत्वारिंशत्तमः श्रीमुनिचन्द्रसूरिर्जज्ञे । (४१) 'अजितदेवः' श्रीमुनिचन्द्रसूरिपट्टे एकचत्वारिंशत्तमः श्रीअजितदेवसूरिरजनि । (४२) 'विजयसिंहः' श्रीअजितदेवसूरिपट्टे द्विचत्वारिंशत्तमः श्रीविजयसिंहसूरिर्बभूव ।

[13] 2 'सुजननयनसोमः' सज्जनानां नयनानि चक्षूंषि शीतलीकर्तुं सोमश्चन्द्र इव । (४३) 'सोमनाम्नः प्रभः, मणिरत्नः' श्रीविजयसिंहसूरिपट्टे त्रिचत्वारिंशत्तमौ श्रीसोमप्रभ-श्रीमणिरत्नसूरी सञ्जातौ, तयोः सोमप्रभसूरिः शतार्थितया भुवि ख्यातनामा बभूव । (४४) 'श्रीजगच्चन्द्रसूरि.' श्रीसोमप्रभ-श्रीमणिरत्नसूरिपट्टे श्रीजगच्चन्द्रसूरिरजायत । (४५) 'देवेन्द्रसूरिः' श्रीजगच्चन्द्रसूरिपट्टे पञ्चचत्वारिंशत्तमः श्रीदेवेन्द्रसूरिः समजनि ।

[14] (४६) 'धर्मघोषः' श्रीदेवेन्द्रसूरिपट्टे षट्चत्वारिंशत्तमो धर्मघोषसूरिर्बभूव । (४७) 'सोमशब्दात् प्रभः' श्रीधर्मघोषसूरिपट्टे सप्तचत्वारिंशत्तमः श्रीसोमप्रभसूरिः । (४८) 'तिलकसूरिः सोमपूर्वः' श्रीसोमप्रभसूरिपट्टे अष्टचत्वारिंशत्तमः श्रीसोमतिलकसूरिर्जज्ञे । (४९) 'देवात् सुन्दराह्वानसूरि.' श्रीसोमतिलकसूरिपट्टे एकोनपञ्चाशत्तमः श्रीदेवसुन्दरसूरिर्जातः ।

मुनिकुवलयसोमः सोमतः सुन्दराह्वः प्रभुरथ मुनिशब्दात् सुन्दरः सूरिचक्री ।
श्रमणगगनरत्नं रत्नतः शेखराऽऽख्यस्तदनु च वरलक्ष्मीसागरः सूरिरासीत् ॥ १५ ॥
तदनु सुमतिसाधुर्माधुरीपूर्णवाक्यस्समजनि विमलः श्रीहेमपूर्वस्ततोऽपि ।
तदनु विमलनामाऽऽनन्दशब्दाद् यथार्थां तपगणगुणसंज्ञां यश्चकार क्रियाभिः ॥ १६ ॥
तदनु विजयदानः सूरिरुच्चावदानः प्रभुरभवदतः श्रीहीरनामा गणस्य ।
अकबरनरराजां यः समाजं ररञ्ज प्रकृतसुकृतवाग्भिः पुण्यनैपुण्यभाग्भिः ॥ १७ ॥
हरिरपि दिवि सूरेर्यस्य सत्कीर्तिवार्तां सदसि विबुधसूरेर्वाचि सम्यग् निशम्य ।
रमयति वसुधायां स्वं मनोऽमुं दिदृक्षुर्नमयति न सुधायामप्सरस्संनिधायाम् ॥ १८ ॥
वदति निगदसिद्धन्यायतोऽप्यस्य धर्मोन्नयनविजयवार्तां गीष्पतिर्वर्षकोट्या ।
नवनवरसरीत्या संसदि स्वर्गराजः प्रभवति न तथापि व्यापिनीं तां समाप्तुम् ॥ १९ ॥
कलिललितमनुष्मिन्नभ्युदीतेऽपनीतं
श्रमणमणिषु साक्षाद् वीररूपे गणीन्द्रे ।
अविकृतकृतलक्ष्म्या जङ्गमः सङ्गमोऽभूत्
प्रतिपदमपि सूरेर्भाग्ययोगैः स्फुरद्भिः ॥ २० ॥
अचरमजिनवारे या न वाऽऽरेक्यते ज्ञैर्जनवृजिननिहन्त्री धर्मलीला सुशीला ।
परमगुरुविहारेऽभ्युद्धृतार्हद्विहारे समजनि जनितश्रीः साऽप्यशेषाऽविशेषात् ॥ २१ ॥
कविभिरभिनयार्थैर्यत् प्रवृत्तिः प्रबद्धा सहृदयजनभाव्ये हीरसौभाग्यकाव्ये ।
अथ कथमहमस्या विस्तरायोद्यताऽऽस्यः पशुशिशुरिव हस्यः स्यां बुधस्योपहास्यः ॥ २२ ॥

[ 15 ] 1 'मुनिकुवलयसोमः' मुनयः साधवस्त एव कुवलयानि कुमुदानि तेभ्यश्चन्द्र इव । (५०) 'सोमतः सुन्दराह्वः' श्रीदेवेन्द्रसूरिपट्टे पञ्चाशत्तमः श्रीसोमसुन्दरसूरिरजनि । (५१) 'मुनिशब्दात् सुन्दरः' श्रीसोमसुन्दरसूरिपट्टे एकपञ्चाशत्तमः श्रीमुनिसुन्दरः सूरिर्बभूव । (५२) 'रत्नतः शेखराऽऽख्यः' श्रीमुनिसुन्दरसूरिपट्टे द्विपञ्चाशत्तमः श्रीरत्नशेखरसूरिः संभूतः । (५३) 'वरलक्ष्मीसागरः' श्रीरत्नशेखरसूरिपट्टे त्रिपञ्चाशत्तमः श्रीलक्ष्मीसागरसूरिरजायत ।

[ 16 ] (५४) 'सुमतिसाधुः' श्रीलक्ष्मीसागरसूरिपट्टे चतुःपञ्चाशत्तमः श्रीसुमतिसाधुसूरिः संजज्ञे । (५५) 'विमलः श्रीहेमपूर्व.' श्रीसुमतिसाधुसूरिपट्टे पञ्चपञ्चाशत्तमः श्रीहेमविमलसूरिर्बभूव । (५६) 'विमलनामाऽऽनन्दशब्द०' श्रीहेमविमलसूरिपट्टे आनन्दविमलसूरिर्बभूव ।

[ 17 ] (५७) 'विजयदानः सूरिः' श्रीआनन्दविमलसूरिपट्टे सप्तपञ्चाशत्तमः श्रीविजयदानसूरिर्बभूव । (५८) 'श्रीहीरनामा' श्रीविजयदानसूरिपट्टेऽष्टपञ्चाशत्तमः श्रीहीरविजयसूरिः संजज्ञे । 2 'उच्चावदान.' उच्चैः प्रशस्तकर्म यस्य सः । 'प्रकृतसुकृतवाग्भि.' प्रकृतानि च तानि सुकृतानि पुण्यानि च प्रकृतसुकृतानि, वाचः वचांसि येषां तैः ।

[ 19 ] 3 'निगदसिद्धन्यायतः' सत्यकथनन्यायात् 'निगदः रोकड' इति भाषायाम् । 4 'धर्मोन्नयनविजयवार्ताम्' धर्मस्योन्नयनमुन्नतिस्तस्य विजयवार्ता विजयकथा ताम् । 5 'गीष्पतिः' बृहस्पतिः 'गीर्बृहत्योः पतिः' इति हैमः [ अभि० चिं० कां० २ श्लो० ३३ ] 6 'नवनवरसरीत्या' नवीनो वीरशृङ्गारादिरसः रीतिः गौड्यादिरूपा ।

[ 20 ] 7 'कलिललितम्' कलिरन्त्ययुगं तस्य ललितं लीलां क्रीडामित्यर्थः । 'कलिर्बिभीतके शूरे विवादेऽन्त्ययुगे युधि' इति हैमः [ अने० सं० कां० २ श्लो० ४८५ ] ।

[ 21 ] 8 'आरेक्यते' शङ्क्यते । 'रेकृङ्' शङ्कायामिति धातोः क्यपि वर्तमाने रूपम् । 9 'ज्ञैः' पण्डितैः । 10 'जनवृजिननिहन्त्री' जनानां वृजिनानि पापानि दुःखानि वा निहन्त्री नाशकर्त्री । 11 'अभ्युद्धृतार्हद्विहारे' अभ्युद्धृताः जीर्णोद्धाराः कृता अर्हतां विहाराश्चैत्यानि येन स तस्मिन् ।

[ 22 ] 12 'कविभिः' देवविमल-हेमविजयादिकविभि.-हीरसौभाग्य विजयप्रशस्त्यादिमहाकाव्यानां कर्तृभिः कविभिः । 13 'अस्या.' प्रवृत्त्याः

तदनु विजयसेनः सूरिराडस्य पट्टे दिनकरकरणिः स्वर्नाथपूज्यो बभासे ।
अकबरनरचक्री यस्य चक्रे प्रशंसां सदसि विजयमस्य प्रेक्ष्य [1]विप्रौघवादे ॥ २३ ॥
सुरपतिमिव साक्षाद्भव्यदिव्यर्द्धिभाजमकबरनरराजं बोधयन् [2]साऽवरोधम् ।
गणिगणमणिहीरः पूर्वदेशे विहारात् स विजयमुपलेभे मोहमुच्छिद्य सद्यः ॥ २४ ॥
गुरुरिव गुरुशिष्यः स्यादितीवोत्तरस्या[3]मकबरनरशक्राभ्यर्चितो [4]लाभपुर्याम् ।
[5]उपनतविजयश्रीर्मोहसर्वस्वभङ्गात् स गुरुविजयसेनो गीयतेऽद्यापि भूम्याम् ॥ २५ ॥
इति जिनवरपट्टश्रेणि[6]मालाप्रसूनैर्मुनिपतिभिरकारि *[7]स्फारविद्याद्यनूनैः ।
स्वसमयमनुजीव्यां प्रौढमोहप्रघातात् कति कतिचन वारान् दिग्जयो जैनराज्ये ॥२६॥
बहुगुणबलशक्तिप्राप्त्युपायोदिताऽऽशाविजय इह कवीन्द्रैर्विस्तरात् कैर्निगद्यः ।
[8]यतिपतिमतिलभ्यः सम्प्रत्युष्यैं समासात् कथमपि कथयामस्तं तथापि प्रशस्तम् ॥ २७ ॥

तदनु तदनुभावादेव देवस्वरूपी
विजयिविजयदेवः श्रीगणेन्दुर्बभूव ।
किमुत ! विजयदेवच्छद्मनाऽस्यावतीर्णो
भरतभुवि जिनानां भक्तये व्यक्तयुक्त्या ॥ २८ ॥

प्रवचनमुपदिश्योद्दिश्य [9]भव्याङ्गभाजः प्रति[10]विषयविहारैर्धर्मकर्मप्रवृत्तिम् ।
कुनयमपनयन् यस्[11]तेनिवांस्तेन मुक्तेः पथि पथिकजनानां [12]सार्थनाथायते स्म ॥ २९ ॥
भजति जिनमतस्य प्राज्यसाम्राज्यमस्मिन् रजति सुकृतिलोकश्चैत्यनित्यार्चनासु ।
अमलकमलजाग्रद्भूरिसौरभ्यलुभ्यद्भ्रमररवमिषाद् दिग् गायतीवास्य कीर्त्तिम् ॥ ३० ॥
अभिनवभवदर्हच्चैत्यमूर्द्धध्वजौघैः [13]परमगुरुगरीयःकीर्त्तिबाला ननर्त्त ।
[14]अभिनयमिव तस्याः प्रेक्ष्य [15]रम्भाऽप्यदम्भाद् [16]विकिरति कुसुमानि [17]स्फारतारामिषेण ॥३१॥

[23] (५९) 'विजयसेनः सूरिराट्' श्रीहीरविजयसूरिपट्टे एकोनषष्टितमः श्रीविजयसेनसूरिः संजज्ञे ।

1 'विप्रौघवादे' पञ्चशतविप्रैः सह वादं कुर्वाणे ।

[24] 2 'सावरोधम्' अन्तःपुरसहितम् 'शुद्धान्तः स्यादन्तःपुरमवरोधोऽवरोधनम्' इति हैमः [ अभि० चिं० का० ३ श्लो० ३९१ ]

[25] 3 'अकबरनरशक्राभ्यर्चितः' अकबरो नृपतिः नरेषु शक इन्द्र इवेति अकबरनरशक्रस्तेनाभ्यर्चितः पूज्यः । 4 'लाभपुर्याम्' देहलीति नगर्याम् । 5 'उपनतविजयश्रीः' उपनता प्राप्ता विजयश्रीर्लक्ष्मीर्यस्य सः ।

[26] 6 'श्रेणिमालाप्रसूनैः' श्रेणिः पङ्क्तिरेव माला तस्याः प्रसूनैः पुष्पैः । 7 'स्फारविद्याद्यनूनैः' स्फारा विपुला या विद्या साऽऽदौ यस्य स स्फारविद्याद्यस्तेनानूनैः ।

[27] 8 'यतिपतिमतिलभ्यः' यतीनां पतयस्तेषां मतिभिर्लभ्यः प्राप्यः ।

[28] (६०) 'विजयदेवः' श्रीविजयसेनसूरिपट्टे षष्टितमः श्रीविजयदेवसूरिः संबभूव ।

[29] 9 'भव्याङ्गभाजः' भव्यप्राणिनः । 10 ''विषय°' विषयो देशः । 11 'तेनिवान्' विस्तारं कृतवान् । 'तनूयी विस्तारे' इति धातोः क्वसुप्रत्ययाद् रूपम् । 12 'सार्थनाथायते' सार्थनाथः वृन्दस्वामीवाऽऽचरतीति सार्थनाथायते । 'सार्थो वृन्दे वणिग्गणे' इति हैमः [ अने० सं० का० २ श्लो० २२५ ]

[31] 13 'परमगुरुगरीयःकीर्तिबाला' परमश्चासौ गुरुश्चेति परमगुरुस्तस्य गरीयसी कीर्तिः सैव बाला । 14 'अभिनयम्' व्यञ्जकम् 'व्यञ्जकोऽभिनयः समौ' इति हैमः [ अभि० चिं० का० श्लो० १९६ ] 15 'रम्भा' सुरपत्नी 'रम्भा त्रिदशभामिन्यां कदल्यां च' इति हैमः [ अने० सं० का० २ श्लो० ३१५ ] 16 'विकिरति' क्षिप्यति 'कॄ विक्षेपे' इति धातोः रूपम् । 17 'स्फारतारामिषेण' स्फाराः विकसिताः यास्तारास्तारकास्तासां मिषेण व्याजेनेत्यर्थः ।

* P स्फारि° । † P श्रीप्य ।

विभवफलमभीप्सुर्भव्यलोकः प्रभूणां सदसि सदुपदेशं प्राप्य देवप्रतिष्ठाः ।
व्यरचयदचिरात् तत्प्रीणनेऽद्यापि देवा न धरणिमवतीर्य स्वं नरान् दर्शयन्ति ॥ ३२ ॥
प्रवचनकुशलानां रम्यवात्सल्यकर्मण्यविरलरसवत्याः प्रोद्भवत्सौरभेण ।
भुवि फणभृदधीशोऽप्युन्नमन्मौलिरास्त भुवनजनहिताय स्यान्न किं पुण्यकार्यम् ॥ ३३ ॥
प्रतिपदमदसीयश्रेयसः प्राज्यरागादनुपमशमभाजामाश्रमानन्वतिष्ठन् ।
तपगणगुणनिष्ठाः श्रावकाः सप्रतिष्ठा मुनिजनपठनेऽभूत् तेषु घोषोऽपि नान्धाः ॥ ३४ ॥
सविनयमिदमीयाऽऽदेशमासाद्य समयसंमयनयविदोऽत्र प्रौढगीतार्थपार्थाः ।
दिशि दिशि विचरन्तश्चारुचारित्रयोधं विदधुरधुतलज्जा जैनधर्मेऽतिसज्ञाः[11] ॥ ३५ ॥
कुमतरतविनाशाद् बोधिहेतुप्रकाशाज्जिनभवनविधानाद् योगिनां संनिधानात् ।
अतनुत संनिसर्गं श्रावकः पुण्यसर्गं विजितदुरितवर्गं[14] मोहवृत्तेर्विसर्गम् ॥ ३६ ॥
मरुधरणि-सुराष्ट्रा-गूर्जराद्यादिदेशेष्वभयमथ विहृत्य स्तुत्यसत्कृत्यलाभात् ।
विषयगणललाटे मेदपाटे जगाम मुनिपतिरतिशायी तेजसा तीव्रधाम्नः ॥ ३७ ॥
नरपतिरपि तत्र श्रीजगत्सिंहनामा गुरुचरणपयोजे योजयन्भावनामम् ।
वचसि रसिकवृत्त्या जीवरक्षां प्रपेदेऽनिमिषवधनिषेधस्तेन जज्ञे सरस्योः ॥ ३८ ॥
परिपतितजिनौकांस्युद्धरन् शुद्धबुद्धिः स्वमपि नरकपातादुद्दधार क्षितीशः ।
गुरुरपि सुनिवेशे सर्वदेशे चकाराविरतिविरतिमद्भिस्तीर्थयात्राः सदैव ॥ ३९ ॥
पुनरपि समियाय श्राद्धवर्गं पुंपूपुः सपदमहमदावं वादमत्यादरेण ।
युगपरिमितमासान् जातपुण्यप्रकाशान् स्थिरतरचरणस्थस्तस्थिवानुत्सवेन ॥ ४० ॥
गुरुतरगणभारं भूरिचिन्तावतारं निजबलमसहायं ध्यानधारान्तरायम् ।
उचितगुणनिकायं चिन्तयन्नञ्जसा यं सपदि विजयसिंहं यौवराज्ये न्यधत्त ॥ ४१ ॥

[32] 1 'तत्प्रीणने' विजयदेवसूरिं प्रीणयितुम् । 2 'धरणिम्' पृथ्वीम्, धरणिशब्दः ह्रस्वो दीर्घोऽपि । 'अवन्यवनिर्धरणी धरणिर्धरित्री धरा' इति साधुसुन्दरः [ शब्दरत्नाकरे कां० ४ श्लो० ३ ]

[33] 3 'रम्यवात्सल्यकर्मणि' मनोहरसाधर्मिकवात्सल्यकार्ये । 4 'अविरलरसवत्याः' निरन्तरपाकस्थानस्य । 'सुदशाला रसवती पाकस्थानं महानसम्' इति हैम. [ अभि० चिं० कां० ४ श्लो० ६४ ] 5 'फणभृदधीश' सर्पराजः वासुकिर्वा । 6 'आस्त' उपविष्टः । 'आसिङ् उपवेशने' इति धातोः ह्यस्तन्या रूपम् ।

[34] 7 'प्राज्यरागाद्' गाढस्नेहात् । 8 'घोषोऽपि नान्धाः' नन्दिघोषः बन्दिघोषः ।

[35] 9 'समय-नयविदः' समयः सिद्धान्तः नयः नीतिस्तयोर्विदः वेत्तारः । 10 'अधुतलज्जाः' अधुता-अखण्डिता लज्जा येषां ते । 11 'अतिसज्ञाः' अतिसंनद्धाः ।

[36] 12 "रत" रतं मोहनम् । 13 'संनिसर्गम्' सदानम् । 14 'विजितदुरितवर्गम्' विजितं दुरितानां पापानां वर्गं समूहं येन तम् ।

[38] 15 'अनिमिषवधनिषेधः' अनिमिषा मत्स्यास्तेषां वधनिषेधः हिंसाप्रतिषेधः । 16 'सरस्योः' उदयसागर-पीछोलाऽऽख्यतडागयोः ।

[39] 17 'परिपतितजिनौकांसि' खण्डितजिनमन्दिराणि । 18 'स्वमपि' आत्मानमपि ।

[40] 19 'पुपूपुः' परीतुमिच्छुः 'पूङ् पालनपूरणयोः' इति धातोः सन्नन्तादुप्रत्ययः । 20 'युग०' युगाश्चत्वारः, चातुर्मासिकम् । 21 'स्थिरतरचरणस्थः' स्थिरतरमतिशयेन दृढं चरणं चारित्रं तस्मिन् तिष्ठतीति ।

[41] (22) 'विजयसिंहम्' 'श्रीविजयदेवसूरिपट्टे एकषष्टितमः श्रीविजयसिंहसूरिरभवत् ।

अथ स विजयसिंहः सूरिरुत्सारितारिर्धृतधृतितरवारिर्मोहदावाग्निवारिः ।
गुरुहृदयमराङ्क्षीद् दुष्टकर्माण्यभाङ्क्षीत् तपगणमनुशासद् वारण-स्मारणाद्यैः ॥४२॥
विमलगिरिशिरस्थश्रीयुगादीशयात्राकरणनियतचेता देवसूरिश्चचाल ।
अनुगतबहुसङ्घस्यन्दना-श्वोष्ट्र-नागोच्छलदविरलधूली रुद्धदिक्चक्रवालः ॥ ४३ ॥
अनुपदबहुरूप्य-स्वर्णमुद्राङ्कपूजाकरणवितरणाद्यैर्ग्राम्यसङ्घेन पूज्यः ।
मुदितजनसुराष्ट्रासर्वतीर्थाण्यनंसीदुचितनगरजातज्येष्ठसंस्थानरीत्या ॥ ४४ ॥
अभिनवनगरस्थं श्रीगुरुं वारिदर्त्तौ चतुरचतुरिकाऽऽख्या श्राविका दक्षिणस्याः ।
सकलनगरसङ्घानुज्ञयाऽभेत्य भक्त्या विनयमभिनयन्ती सोत्सवं तं ववन्दे ॥ ४५ ॥
प्रतिकृतिशतमत्र श्रीजिनानां नवीनं समहमहमिकाभृद् भूरिवित्तव्ययेन ।
सकलजनसमक्षं संप्रतिष्ठाप्य सूरेरशन-वसनदानैः प्रीणयामास सङ्घम् ॥ ४६ ॥
अवसरमधिगम्य स्वं प्रणम्याशयं सा सदसि गणगुरूणामागमं दक्षिणस्याम् ।
प्रबलसुकृतलब्ध्यै नाम विज्ञापयन्ती गुरुपरिचरणेऽस्याद् वत्सराणां चतुष्कम् ॥४७॥
प्रतिदिनमिदमीयां देशविज्ञप्तिवाचं मनसि गणधरेन्द्रो निश्चयेनानुनीय ।
गमितजलदकालस्तामलिप्ते व्यहार्षीत् सहसि हसितलक्ष्म्या श्राद्धया श्रद्धयाऽस्मात् ॥४८॥
अथ चलति मुनीन्द्रेऽनुव्रजद्राजसङ्घप्रचलचलसमूहादुच्छलद्धूलिपुञ्जैः ।
जलधिजलविशोषाऽऽशङ्कया दक्षिणाशा स्वविषयपरिवृद्ध्याऽलं हसन्तीव रेजे ॥४९॥
स्फुरति मुनिमहेन्द्रे सौरतेजोऽधिकत्वे हृतवसुरिव भास्वान् प्रेरयन्नञ्जसाऽश्वान् ।
जलधिशरणमापद् व्यापदं छेत्तुकामस्तत इव धनराशिं लब्धवानब्धिपार्श्वे ॥ ५० ॥
पथि नगरजनस्याभ्यर्थनातोऽवरङ्गात् परपुरि परमेज्यः प्रावृषं संनिनाय ।
तदनु तपसि चर्यामाचरंश्चारुविद्यापुरमतुलमहेन प्राविशद् भाविशर्मा ॥ ५१ ॥

---

[ 42 ] 1 'उत्सारितारिः' उत्सारिताः दूरीकृता अरयो येन सः । 2 'धृतधृतितरवारिः' धृतो धृतेर्धैर्यस्य तरवारिः खड्गो येन सः । 3 'मोहदावाग्निवारिः' मोहरूपो यो दावाग्निः दावानलस्तं शीतलीकर्तुं वारि जलमिव । 4 'अराङ्क्षीद्' ररञ्ज 'रञ्जीं रागे' इति धातोरद्यतन्यां रूपम् । 5 'अभाङ्क्षीत्' बभञ्ज 'भञ्जोंप् आमर्दने' इति धातोरद्यतन्यां रूपम् । 6 'वारणा-स्मारणाद्यैः' वारणा-स्मारणादिशिक्षाप्रकाराः ।

[ 43 ] 7 '°नियतचेताः' निश्चितमनाः । 8 'स्यन्दन°' स्यन्दना रथाः । 9 'नाग°' नागा हस्तिनः । 10 '°चक्रवालः' चक्रवालः मण्डलम् । 'चक्रवालं तु मण्डले' इति हैमः [ अने० सं० कां० ४ श्लो० ३०१ ]

[ 44 ] 11 '°वितरणाद्यैः' दानादिभिः ।

[ 45 ] 12 'अभिनवनगरस्थम्' नवानगरस्थितम् । 13 'वारिदर्तौ' वर्षाकाले ।

[ 46 ] 14 'प्रतिकृतिशतम्' मूर्तीनां शतसङ्ख्याप्रमाणम् । 15 'समहमहमिकाभृद्' सम्यक् प्रकारेणाहमहमिकां परस्परं शक्तोऽहं शक्त इति स्पर्धास्वरूपां बिभर्तीति । 16 'अशन वसनदानैः' अशनं भोजनं वसनं वस्त्रं च तयोर्दानैः ।

[ 47 ] 17 'प्रबलसुकृतलब्ध्यै' प्रबलानि दृढानि च तानि सुकृतानि पुण्यानि तेषां लब्ध्यै प्राप्त्यै ।

[ 48 ] 18 'अनुनीय' विज्ञप्य । 19 '°जलदकालः' वर्षाकालः । 20 'व्यहार्षीत्' विजहार विपूर्वकं 'हृंग् हरणे' इति धातोः अद्यतन्यां रूपम् । 21 'सहसि' मार्गशीर्षे । 'मार्गशीर्षः सहः सहाः' इति हैमः [ अभि० चिं० कां० २ श्लो० ६६ ] ।

[ 50 ] 22 'सौरतेजः°' सूरसम्बन्धं सौरः शनैश्चरस्तस्य तेजः प्रकाशः ।

[ 51 ] 23 'अवरङ्गात्' औरङ्गाबादनगरात् ।

अकृत कृतविमेयाँस्तत्र मासान् निवासं गुरुरुदतरभक्तिश्राद्धविज्ञप्तियोगात् ।
मुनिहरिमनुनीय श्रद्धया देवचन्द्रो व्यरचयत वरिष्ठां देवबिम्बप्रतिष्ठाम् ॥ ५२ ॥
तदनु मनुजसङ्घेनान्वितस्तीर्थयात्राफलबलमभिलिप्सुर्मार्गशीर्षे चचाल ।
जिनवरकलिकुण्डाह्वानपार्श्वं प्रणम्यायतकरकरहेडास्थायिपार्श्वं निनंसुः ॥ ५३ ॥
पथि विचरति यास्मिन् दक्षिणस्याः पयोधिर्मथनरव इवाभूत्कल्लोलकल्लोलदम्भात् ।
मुनिरपि घटजन्मा क्षारतां मां निनाय मुनिपतिरथ कर्त्ता किं ममेति प्रबुध्य ॥ ५४ ॥
परमगुरुरिहायं सर्वसौख्याप्त्युपायं विमृशति च कथञ्चित् कस्यचिन्नापकर्त्ता ।
मगधजनमुखेभ्यः सम्यगेतन्निशम्य जलधिरधिविनोदं नृत्यतीवोत्तरङ्गैः ॥ ५५ ॥
तटनिकटमुपेतेऽस्मिन् पयोराशिरासीन्मुदित इव तरङ्गोन्मुक्तमुक्ताः प्रवर्षन् ।
अभिलुलितपयोभिर्धौतपादः प्रसादमविरललहरीभिर्मन्यमानो मुनीन्दोः ॥ ५६ ॥
मुनिपतिसहचारिश्राद्धसङ्घे तुरङ्गा अभिजिगमिषुसिन्धावुल्लसन्तस्तरङ्गाः ।
ध्वजपटलममुष्मिन्नुल्ललास द्विपानां पृथुतरमितरथ्याऽपीतपोतोत्तमानाम् ॥ ५७ ॥
अभिरमति वधूनां वृन्दमस्मिन् सुरूपं जलनिधिमधिगम्य स्पर्द्धयेवामरीणाम् ।
दिशति कनकमुद्रा मार्गणेभ्यो महेभ्यः प्रसरति मणिमुक्ताश्रेणिराकीर्यमाणा ॥ ५८ ॥
पटुपटहनिनादस्तत्र सङ्घे जगर्ज जलगजकुलमेयोर्ज्जस्वलं चापरत्र ।
इदमपि चतुराऽऽप्या श्राविकारत्नमस्मिन् जयति तदितरास्मिंश्चाग्लक्ष्मीः स्वरूपात् ॥ ५९ ॥
कृतजनपदतीर्थस्तीर्थरक्षासु दक्षः कतिपयदिवसान् स श्राद्धलोकेन साकम् ।
व्यगमयदुदधेस्तत् सैकतं प्राप्य रम्यमसुरभिनवपार्श्वद्वैतपूजाऽनुरोधात् ॥ ६० ॥
व्यकृतद्य मुनीनां सिन्धुरः सिन्धुरोधोमुखमिव परिपूय स्तूयमानो महेभ्यैः ।
सपदिनयपाणाऽभ्यर्थितः सैव विद्यापुरवरमधितष्ठौ श्रीचतुर्मासकाय ॥ ६१ ॥
कतिपयदिवसान्ते धारूपद्दीननाम्ना गुरुवरमधिजग्मे स्वामिनानेन सत्रा ।
पटुनगरविभूषायोगतः सोऽभ्युदयनकृषिरासीत् स्वर्ण-रूप्यांशुकौघैः ॥ ६२ ॥
अतिशयितमहिम्नामुत्तमयानां विमानैर्गणगुरुरिह नीत्वा प्राभृतं कार्त्तिकान्ताम् ।
पुनरपि च विजह्रे राष्ट्रमुख्ये त्रिलिङ्गे प्रथममभिनिनंसुस्तीर्थपं तीर्थपङ्क्तौ ॥ ६३ ॥

जिनपतिनवबिम्बस्थापनां भाग्यपुर्यां यवनपतिनिबोधात् सोत्सवं स प्रणीय ।
जनपदमपि सम्यग् भावयन् जैनमार्गे पुनरपि पुरि विद्यापूर्विकायामियाय ॥ ६४ ॥
भृशमकृशमहेनाभ्यर्थितस्तत्र भव्यैः स्वयमधिकृतवान् स प्रावृषौ सान्तरं द्वे ।
सुकृतभरविशेषा जज्ञिरे ये तदानीं क इह ननु समर्थस्तानशेषान् प्रवक्तुम् ॥ ६५ ॥
सुरभिवधनिषेधं व्यादिशत् पातिसाहिः सकलजनपदेऽपि श्रद्धया शुद्धबुद्धिः ।
परमगुरुकरेणाकारयद् देवचन्द्रः प्रबलतरमहेनान्यां जिनेन्द्रप्रतिष्ठाम् ॥ ६६ ॥
विबुधपदनिवेशस्तत्प्रतिष्ठामहेऽभूदमलचरणभाजां दक्षिणस्यां गणेन्दोः ।
बहुविदमरचन्द्रे वाचकश्रीर्दिदीपे गुरुचरणनिषेवा देववल्लीवदेव ॥ ६७ ॥
अगमयदसमानां पुण्यवृत्त्या समानां वरनगरनिवेशोऽब्दाष्टकं दक्षिणस्याम् ।
सुकृतविभवलाभं लम्भयन्नात्मनि स्वे प्रसृमरवरकीर्तिर्देवसूरिः स विश्वे ॥ ६८ ॥
परमगुरुविहाराद् दक्षिणा दक्षिणासीज्जिनपतिवरधर्मे मोहसम्मोहनेन ।
इति कृतविजयोऽयं दक्षिणस्याः समायादहमदपदवादश्रीपुरं गूर्जरस्यम् ॥ ६९ ॥

निजवपुषि विचिन्त्य स्थाविरीं कान्तिमीशः
परिणतिमपि दिव्यां स्वां द्विधा साऽवधानः ।
प्रवचनपटुपट्टे स्थापयामास सूरिं
सविजयविजयादिश्रीप्रभं मोदनाम्ना ॥ ७० ॥

विबुधमपि च धीरं वीरपट्टश्रिया तं कृतपरिणययोगं वीक्ष्य शुद्धोपयोगम् ।
मुदमुदवहदुच्चैः श्राद्धसङ्घः समग्रो रविमिव दिवसश्रीसंयुतं कोकलोकः ॥ ७१ ॥
परमगुरुरिदानीं तैः सहाऽऽचार्यधुर्यैर्व्यहरत कृतकृत्यः क्ष्मातले निर्विकल्पः ।
हिमरुचिरिव दीपैर्ध्वस्तसर्वान्धकारे जगति मतिमदर्च्यः शीतले शीतलेश्यः ॥७२॥
कतिपयशरदन्ते श्रीसुराष्ट्रां भदन्ते भजति सुरसमाजोऽभ्याजगामेशसत्कः ।
अनशनमनुगृह्यैतद्गिरा स्वर्गिराजः समितिममितिजापादाऽऽप गच्छप्रजापः ॥७३॥

---

[64] 1 'भाग्यपुर्याम्' तिलङ्गदेशे गलकुण्डप्रत्यासन्नभाग्यनगरे । 2 'यवनपतिनिबोधात्' यवनपतिः पातिसाहिश्रीकुतबसाहिनः निबोधात् प्रतिबोधात् ।

[66] 3 'सुरभिवधनिषेधम्' गोहननप्रतिषेधम् । 4 'पातिसाहिः' पातिसाहिईदलसाहिनामा ।

[67] 5 'विबुधपदनिवेशः' श्रीधीरविजयानां एकाधिके सप्तदशशतवर्षे श्रेष्ठिदेवचन्द्रकृतप्रतिष्ठायां पंन्यासपदं दत्तवान् ।

[70] 6 'स्थाविरीम्' स्थिरशीलाम् । (६२) "विजयादिश्रीप्रभम्' श्रीविजयसिंहसूरिपट्टे द्वापष्टितमः श्रीविजयप्रभसूरिः प्रस्तुतकाव्यस्य नायकोऽजनि ।

[71] 7 'विबुधमपि' पंन्यासमपि । 8 'धीरम्' श्रीधीरविजयम् । 9 'कृतपरिणययोगम्' कृतः परिणयो विवाहस्तस्य योगम् । ४ 'कोकलोकः' कोकश्चक्रवाकः स एव लोकः ।

[72] 10 'आचार्यधुर्यैः' आचार्याः सूरयस्तेषु धुर्याः श्रेष्ठास्तैः । 11 'हिमरुचिः' चन्द्रमाः । 12 'शीतलेश्यः' श्वेतलेश्यावान् ।

[73] 13 'ईशसत्कः' श्रीविजयदेवसूरिसंनिधौ । 14 'गच्छप्रजापः' गच्छनायकः ।

व्यधित विजयमुच्चैः प्राग् दिशो हीरसूरिस्तदनु विजयसेनश्चाप्युदीच्या विशिष्य ।
गणपतिरयमेवं दक्षिणामण्डलस्य कुनयविषयमोहं द्राग् निराकृत्य लोके ॥ ७४ ॥

श्रीजैनेश्वरशासनं क्षितितले प्रोद्भाव्य भव्यात्मना-
मुद्धाराय भवाम्बुधेः प्रबुबुधे यो योगवृत्त्या स्वयम् ।
गच्छेन्दुर्विजयादिदेव भगवान् देवः प्रकृत्या सतां
देयान्मोदमहोदयं सविजयं विश्वावभासाश्रयम् ॥ ७५ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
कथानायकगुरोर्दिग्विजयवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥



[74] 1 'उदीच्याः' उत्तरदिशः । [illegible] 'गणपति-' गच्छपति- ।
[75] 3 'प्रोद्भाव्य' प्रकाश्य । 4 'गच्छेन्दु' गच्छे इन्दुश्चन्द्र [illegible] । 5 'मोदमहोदयम्' आनन्दस्वरूपं महोदयं मोक्षम् । 'महोदयः सर्वदुःखक्षयः' इति हैमः [अभि० चिं० कां० १ श्लो० ७४]। 6 'विश्वावभासाश्रयम्' जगत्प्रकाशलक्ष्मीम् ।

## पञ्चमः सर्गः ।

ऐँ ह्रीँ नमः ।

अथ गणधरस्तत्पट्टश्रीप्रभुर्विजयप्रभः
समभवदलंभूष्णुर्भूमीस्पृशां भ्रमविच्छिदे ।
अभिनवसहस्रांशुप्रांशुप्रभाभरजित्वरः
कमनविजयी शीलोन्मीलद्रुचा समुदित्वरः ॥ १ ॥

प्रतिदिनमयं तेजोवृद्ध्याऽन्तरारिपराजयं
कुशलरचितैर्मन्त्रैस्तन्त्रैश्चिकीर्षुरिवात्मना ।
गणभरधुरं विन्यस्यैवोपधेयजने धियाऽ-
शमयदमदः कश्चित् कालं नयाऽऽहितलोचनः ॥ २ ॥

सबलमुपधाशुद्धं वृद्धं नियोज्य बलं क्रमात्
समयमुचितं दिग्यात्रायामुपस्थितमामृशन् ।
अथ शमभृतां चक्री चक्रेऽभिषेणनमुत्तरां
कुमततमसाऽऽकीर्णां यातुं विमोहजिगीषया ॥ ३ ॥

प्रभुविहरणे द्वीपाऽऽह्वानात् पुरः स्तुतिमङ्गलं
जय जय विभोरासीदाशीर्वचः श्रुतिसंहितम् ।
चतुरतुरगः सर्वाङ्गीणस्फुटाऽऽभरणान्वितोऽ-
भ्यप(प)जदगजद् गजेन्द्रर्जध्वनिर्नगराध्वनि ॥ ४ ॥

सुभगविहगः सव्येऽसव्ये यथार्हतया स्ता-
न्यकृत सुकृतश्रेणीलाभं प्रतिस्थलमादिशन् ।
जलरुहदृशो मुक्तावर्द्धापनानि वितेनिरे
सतिलकतया विप्रः क्षिप्रं पपाठ ऋचां वचः ॥ ५ ॥

---

[1] 1 'अलंभूष्णुः' शक्तो भवतीत्येवं शीलोऽलं भूष्णुः 'भूजेः ष्णुक्' ५-२-३० । इति सिद्धहेमीयसूत्रात् ष्णुक् प्रत्ययः । 2 'भूमीस्पृशाम्' मनुष्याणाम् । 3 'अभिनवसहस्रांशुप्रांशुप्रभाभरजित्वरः' अभिनवः नव्यश्चासौ सहस्रांशुः सूर्यश्चेत्यभिनवसहस्रांशुस्तस्य प्रांशुरुन्नता या प्रभा द्युतिस्तस्या भरः समूहस्तं जित्वरः जयनशीलः । 4 'कमनविजयी' कामदेवविजेता । 5 'समुदित्वरः' सम्यगुदयशीलः ।

[2] 6 'कुशलरचितैः' विज्ञकर्तृभिः । 7 'मन्त्रैः' मन्त्रः रहस्याऽऽलोचनं तैः । 8 'तन्त्रैः' तन्त्रमौषधं तैः । 9 'विन्यस्य' संस्थाप्य । 10 'उपधेयजने' उपधीयते समीपे ढौक्यते भयधर्मार्थकामोपन्यासैनामात्यानामाशयान्वेषणरूपपरीक्षार्थमुपधा; उपधातुं योग्य उपधेयः, उपधेयश्चासौ जनश्चेत्युपधेयजने । यत्कौटिल्यः– 'उपधाभिः शौचाशौचपरिज्ञानममात्यानाम्' । 11 'नयाऽऽहितलोचनः' नयैः नीतिभिराहिते विन्यस्ते लोचने यस्य सः ।

[3] 12 'उपधाशुद्धम्' उपधाभिः शुद्धं पवित्रम् । "भिया धर्मार्थकामैश्च परीक्षा या सोपधा" इति हैमः [ अभि० चिं० कां० ३ श्लो० ४०४ ] । 13 'शमभृताम्' शान्तिभृतां साधूनाम् । 14 'अभिषेणनम्' निष्क्रमणम् । 15 'कुमततमसाऽऽकीर्णाम्' मिथ्यात्वरूपान्धकारेण व्याप्ताम् ।

[4] 16 'द्वीपाऽऽह्वानात्' 'दीव'नाम्नो नगरात् । 17 'श्रुतिसंहितम्' छन्दःसहितम् । 18 'अभ्यपजद्' अभिपूर्वात् 'षञ्ज सङ्गे' इति धातोः ह्यस्तन्यां 'स्थासेनि०' २-३-४० इति सिद्धहेमीयसूत्रेण षे कृते रूपम् ।

[5] 19 'सुभगविहगः' सुभगः विजयाशंसी विहगः पक्षी । 20 'सव्ये' वामाङ्गे । 21 'असव्ये' दक्षिणे । 22 'जलरुहदृशः' कमलाक्ष्यः स्त्रियः । 23 'मुक्तावर्धापनानि' मुक्तानां वर्धापनानि 'वर्धापनं वधामणी'ति भाषायाम् ।

जलनिधिजले वेलावृद्धिर्बभूव विभोः पुरः
सकलकलया कार्ये सिद्धेर्महोदयशंसिनी ।
उभयतटयोर्माद्यद्वाद्यावलीपरिवादना-
न्निनदमतुलाऽऽनन्दाद् वृन्दं दिशामिव निर्ममे ॥ ६ ॥
प्रवहणमथारूढे तस्मिन् जगज्जनतारके
स इह सुतरां योगो रेजे द्वयोः समकर्मणोः ।
लवणजलधेर्व्युत्क्रान्त्याऽभूत् प्रभोः किमितो दिना-
ल्लवणिमवचःस्थित्या लोके व्यतिक्रमसूचना ॥ ७ ॥
लवणजलधिः पादौ प्रक्षालयन्निव वीचिभि-
रनुजिगमिषू रागान्मुक्ताफलैस्समवाकिरत् ।
अभिनवभवत्फेनश्रेण्या सृजन् बृहतीमिवो-
ल्ललितकलिकाहस्तैर्भूयो भ्रमन्निव जग्मिवान् ॥ ८ ॥
प्रतिपदमथ ग्राम्यैः सङ्घैः कृतार्चनवन्दनः
समयवचनाऽऽरोपैर्निघ्नन् विमोहमहाबलम् ।
विमलशिखरिण्यासीनं श्रीयुगादिजिनेश्वरं
श्रमणमघवाऽनंसीद् भक्त्या नवस्तवनोक्तिभिः ॥ ९ ॥
लवणिमगुणे सर्वाग्रण्यां गुरोर्बहुगौरवं
समरसविधे प्रागल्भ्यं चौचितीरणलाघवे ।
बहुतररुचिः प्रत्याकारे सुसज्जनकर्मणि
प्रभयति कथं मोहं जेतुं न स प्रभुराहवे ॥ १० ॥

[९] १ 'समयवचनारोपैः' समयः सिद्धान्तस्तद्वचनरूपैरारोपैः ।
[१०] २ 'समरसविधेः' समस्य समभावस्य रसविधेः पक्षे सङ्ग्रामपार्श्वे । ३ 'प्रागल्भ्यम्' पाण्डित्यं धृष्टत्वं वा । ४ 'चौचितीरणलाघवे' च पुनः ईरणं प्रेरणं धर्मे तल्लाघवे औचिती । ५ 'प्रत्याकारे' खड्गकोशे आकारे प्रतीति प्रत्याकारे तत्रार्हदाकारे ऋषिवेषे वा । ६ 'सुसज्जनकर्मणि' सज्जनानां कर्म दानादि तत्र पक्षे सज्जनं सेनाया उपरक्षणम् ।

[6] 1 'महोदयशंसिनी' महोदयो महाविजयस्य संसूचिका । 2 'माद्यद्वाद्याऽऽवलीपरिवादनात्' माद्यन्ती चासौ वाद्यावली वादित्राणां समूहस्तस्य परिवादनात् ।
[7] 3 'प्रवहणम्' नावम् । 4 'व्युत्क्रान्त्या' 'विशेषेणोर्ध्वं क्रान्तिस्तया । 5 'व्यतिक्रमसूचना' व्यतिक्रमं उल्लङ्घनं तस्य सूचना ।
[8] 6 'वीचिभिः' तरङ्गैः । 7 'अनुजिगमिषुः' अनुगन्तुमनुगन्तुं वेच्छुः । 8 'अवाकिरत्' व्यक्षिपत् । 9 'बृहतीम्' वस्त्रम् 'बृहती क्षुद्रवार्ताक्यां छन्दोवसनभेदयोः' इति हैमः [ अने० सं० कां० ३ श्लो० ३२५ ] । 10 'ललितकलिकाहस्तैः' ललिताः कान्ताः कलिका वीचय एव हस्तास्तैः ।
[9] 11 'समयवचनाऽऽरोपैः' समयानुकूलवचनस्वरूपाणामारोपाः आ समन्ताद्रोप्यन्ते लक्ष्ये इति, आरोपा बाणास्तैः । 12 "बलम्' शक्तिः सैन्यं वा । 13 'विमलशिखरिणि' शत्रुञ्जयनामकपर्वतशिखरे । 14 'आसीनम्' विराजितम् । 15 'श्रमणमघवा' श्रमणाः साधवस्तेषु मघवेन्द्रः ।
[10] 16 'लवणिमगुणे' कान्तगुणे । 17 'मोहम्' कामदेवम् । 18 'आहवे' युद्धे ।

समितिरसिकाश्चेलुः पूर्वं गुरोश्चरणाऽऽशया
रुचिमपि सदाकारे शस्त्रे मुदा दधतस्ततः ।
ललितगतयो दानादुच्चैः करास्सदनेकपाः
प्लुतिपरिचिता गन्धर्वाश्च स्फुरत्कविकामिताः ॥ ११ ॥
प्रणिधिविधिना शुद्धं मार्गं व्यगाहत साऽऽगमं
प्रमुदितसुनासीरश्चक्रे स्थितिं नयसाधनीम् ।
समयवृषभव्यूहे न्यस्यन् भरं विषमाऽऽयुध-
ग्रहजमसकृद् दत्त्वा नृणां परं बहुशोधनम् ॥ १२ ॥
स नयमनयद् वर्षा हर्षाद् घनौघपुरेऽनघ-
स्थितिरनुगतं भक्त्येवाब्धिं दृशा परिभावयन् ।
प्रतिकृतिशतं चातुर्मास्याः परम्परयाऽऽर्हतां
समहमहनि प्राप्ते सौम्येऽभ्यपेचयतायकम् ॥ १३ ॥
उदितमहसा नुन्नः सूरिः क्रमात् सहसाऽचलद्
विमलशिखरिण्यादीशस्य प्रणम्य पदाम्बुजम् ।
अहिमदपदाद् वादस्थानं समेत्य महोत्सवै-
र्गणपतिरिहाऽऽरूढः सिंहासने शुशुभे शुभे ॥ १४ ॥
अधिकृतगुणश्चापस्थानं यथोचितमादृतः
कृतदृढपरीवाराधिश्रित्रिशंकं परिकल्पयन् ।
उपकृतिधनश्राद्धं देशं वशीकृतवान् वशी
पटुतरमतिः सर्वं पश्यंस्तथाऽऽप्तधियां पथा ॥ १५ ॥

[ ११ ] १ 'समितिरसिकाः' समितिरीर्यादिस्तत्र रसिकाः पक्षे सङ्ग्रामतत्पराः । २ 'सदाकारे शस्त्रे' सदाकारे शास्त्रविशेषे इत्यर्थः । ३ 'प्लुति॰' घोटकगतिविशेषः स्वरविशेषश्च । ४ 'गन्धर्वाः' अश्वाः गायनाश्च । ५ 'स्फुरत्कविकामिताः' कविकां मुखपञ्चणं इताः प्राप्ताः 'कविका कवियं मुखयन्त्रणम्' इति हैमः [ अभि॰ चिं॰ कां॰ ४ श्लो॰ ३११ ] पक्षे स्फुरत् भासमानं कवेः कामितं कवित्वं येषां ते ।

[ १२ ] ६ 'प्रणिधि॰' प्रणिधिः ध्यानं गूढपूरुषश्च । 'हेरिको गूढपूरुषः प्रणिधिः' इति हैमः [ अभि॰ चिं॰ कां॰ ३ श्लो॰ १९७ ] । ७ 'सागमम्' सदृक्षं ससिद्धान्तं च । ८ 'व्यगाहत' प्राविशत् । ९ 'प्रमुदितसुनासीरः' आनन्दितशक्रः, नासीरं सैन्याग्रयानम् । १० 'समयवृषभव्यूहे' समये सिद्धान्ते वृषभाः प्रवर्तकाः पक्षे मयैरुद्रविशेषैः सहिते वृषभवर्गे । ११ 'विषमाऽऽयुधग्रहजम्' विषमाऽऽयुधः कामस्तद्विषयग्रहभावं पक्षे विषमान्यायुधानि तत्संग्रहजातम् । १२ 'बहुशोधनम्' आलोचनां, [ बहुशो धनम् इति पदविभागे ] बहुवारं धनं वा ।

[ १५ ] १३ '॰गुणः' गुणा मूलोत्तररूपाः प्रत्यञ्चा च । १४ 'चापस्थाने यथोचितम्' यथोचितं स्थानं चापः पक्षे चापस्थानम् । १५ '॰परीवारात्' परिकराद् गच्छाद् कोशाद्वा 'प्रत्याकारः परीवारः कोशः खड्गपिधानकम्' इति हैमः [ अभि॰ चिं॰ कां॰ ३ श्लो॰ ४४०] १६ 'त्रिशंकम्' धूर्तं तस्करं वा । १७ 'उपकृतिधनश्राद्धम्' उपकृतिरुपकार एव धनं येषां तादृशाः श्राद्धा यत्र । १८ 'आप्तधियाम्' आप्ता जिनाः प्रत्ययितना वा तेषां धियः बुद्धयस्तासाम् ।

[11] 1 'चरणाशयाः' चरणं चारित्रं तस्याशया विचारा येषां ते । 2 'सदनेकपाः' सन्तश्च तेऽनेकपा हस्तिनः सद्रूपा वा ।

[13] 3 'घनौघपुरे' आधुनिकघोघानगरे । 4 'प्रतिकृतिशतम्' मूर्तीनां शतकम् । 5 'समहम्' महोत्सवपूर्वकम् । 6 'अयकम्' अयमित्ययकम् ।

[14] 7 'उदितमहसा' उदितं च तन्महश्चेत्यपेक्ष्योदितमहसेन । 8 'नुन्नः' ईरितः ।

मुनिनृपतिना स्कन्धावारस्थितिः शरदोर्ध्वं
व्यरचि निचिताऽऽचाराणां च क्षितौ स्थितिरक्षता ।
दिशि दिशि समादिश्य प्रौढक्षमाधननायकान्
समुपनयता मोहारातेर्बले शिथिलक्रियाम् ॥ १६ ॥
स्वयमपि गुरुर्वाक्पारुष्यं निरस्य शनैः शनैः
नयपरिचयात् कोशं मित्रं समेधयिताऽर्थतः ।
क्वचन समयं पश्यन् सन्धिं प्रशस्ततया परे-
ष्वनुगुणधिया क्रोधाद्येषु स्फुटं प्रवितेनिवान् ॥ १७ ॥
कमपि विषये मुख्यं कुर्वन्नयं ह्युपचारतां
क्वचन वचनाद् गृह्णन् गौणप्रवृत्तिकृताऽऽदरः ।
क्वचिदपि महोपायैश्चार्थं सुसूत्रतया श्रयन्
प्रवचनमहासाम्राज्यस्य श्रिया विललास सः ॥ १८ ॥
समुदयबलोपेते जाग्रद्गुणे गणिनि प्रभु-
र्न्यधित विधितस्तूर्णं धीरश्रियां पदमादरात् ।
निगमनविधेः सद्यः कुर्वन् दमं प्रतिरोधके
शिवमनुपदं तस्माल्लोके प्रियं समभूद् भुवि ॥ १९ ॥
सुकरकरणप्रत्याहारक्रियाकुशलः प्रभुः
सकलविषयान् बुद्धेर्योगाज्जिगीषुरिवाऽऽत्मना ।
सहृदयजने जाग्रत्तेजस्तपोधनमुख्य-
स्त्वनयहरणात् तस्मिन् देशे समञ्जसमादधे ॥ २० ॥
जिनपतिमथो नन्तुं शङ्खेश्वरस्थितमुन्नमत्
फणमणिगणाधीशाऽऽराध्यं ससङ्घतयाऽनघः ।
अनुचलदनोगम्री सम्यग् मरुद्ध्वसङ्कुले-
ऽध्वनि घनिवरैः पूज्यः पूज्यश्चचाल तपोगणे ॥ २१ ॥

---

[ १६ ] १ 'स्कन्धावारस्थितिः' कटकनिवेशः पक्षे स्कन्धावारे राजधान्यां स्थितिरवस्थानम् । २ "°आचाराणाम्' ज्ञानादीनां चाराणां गूढपुरुषाणाम् । ३ 'स्थितिरक्षता' स्थितिर्व्यवस्था-अक्षता पूर्णा व्यरचि ।

---

[ 16 ] 1 'शरदः' वर्षस्य । 2 'मोहाराते.' मोहः धर्मदेव एवारातिः शत्रुस्तस्य ।

[ 18 ] 3 'उपचारताम्' गौणम् । 4 'प्रवचनमहासाम्राज्यस्य' प्रवचनमागमस्तत्स्वरूपं महासाम्राज्यं तस्य ।

[ 19 ] 5 'समुदयबलोपेते' समुदयो युद्धं तस्य बलं सैन्यं तेनोपेतं युक्तं तस्मिन् । 6 'न्यधित' स्थापितः; निपूर्वकं 'डुधाञ्‌ धारणे च' इति धातोरद्यतन्यां "इश्च०" ४-३-३१ इतीत्वे, कित्वे "धुड्‌ह्रस्व०" ४-३-७०, इति सिच् लुपि 'न्यधित' इति रूपं सिद्धम् । 7 'निगमनविधेः' मार्गविधेः । 8 'दमम्' दण्डम् । 9 'प्रतिरोधके' चौरे ।

[ 20 ] 10 "°करणप्रत्याहार°" करणानीन्द्रियाणि तेषां प्रत्याहारः विषयेभ्यः समाहृतिः 'प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः' इति हैमः [ अभि० चिं० का० १ श्लो० ८३ ] । 11 'सहृदयजने' प्रियजने । 12 'अनयहरणात्' अनीतिहरणात् । 13 'समञ्जसम्' सम्यक्प्रकारेण ऋजुम् ।

[ 21 ] 14 'अनघ.' पवित्रः । 15 'गम्री' कम्बलिवाह्यकम् । 16 'मरुद्ध्वसङ्कुले' देवरथैर्व्याप्ते ।

---

* P फणरणि' ।

विधिरधिकृतः क्षोणीपीठे जिनैर्जनितः पुरा
　गणगणधरोपाध्यायादिव्यवस्थितिसर्जनात् ।
प्रणतभगवत्पूज्येनान्तर्मलच्छलहारिणा
　समभिनयता मेघस्येहोदयं पुटभेदने ॥ २२ ॥

भगवति गणाधीशेऽभ्यर्णे समीयुषि पत्तनं
　व्यरुचततरां नीवृल्लक्ष्म्या हिरण्मयचित्रवत् ।
विपणिसरणेर्नानावर्णांशुकाऽऽभरणश्रिया
　समुदयदशां सौरीं साक्षादिवाभिनिवेदयत् ॥ २३ ॥

सकलभवनश्रेण्यामुत्तम्भितैरभितः पुरं
　ध्वजपटलकैर्व्यलन्मोदादिवोद्भुजमाबभौ ।
विहसितमितस्तद्वीक्षायां दिशामिव मण्डलं
　प्रतिपदमिहोदात्तश्रेष्ठिप्रकीर्णधनच्छलात् ॥ २४ ॥

भुवि गजघटाऽचालीद् वालीकृतार्कसहोदरा
　विचकिलभरं कुर्वन्तीव क्षरन्मदवारिभिः ।
दिवि घनघटास्पर्द्धाबन्धात् सुपुष्करशालिनी
　स्तनितजनिताऽऽनन्दा लोके गुरोरभिगामुके ॥ २५ ॥

निनदति पुरे विस्मेरश्रीस्मरध्वजसङ्करे
　जगति सकले शब्दाद्वैते प्रसर्पति दर्पतः ।
विधिरपि परं छात्रान् वेदान् प्रपाठयति स्म किं
　दृढतमतया वाढोद्घोषैरजस्रमुदीरितैः ॥ २६ ॥

अनुपदमनुत्सेके छेके महेच्छजने घने
　वितरति महे स्वर्णादीनि क्रमाद् गुरुसङ्गमे ।
इह सुमनसामैन्द्रीं लक्ष्मीं विभावयतामभू-
　दतिरतिपदं नृत्यन् गायन् पटुस्स वटुव्रजः ॥ २७ ॥

---

[ २२ ] १ 'मेघस्योदयम्' वर्षाकालम् ।　　[ २३ ] २ 'सौरीम्' सूरिसम्बन्धिनीं सूर्यसम्बन्धिनीं वा ।

---

[ 22 ] 1 'प्रणतभगवत्पूज्येन' प्रणतो भगवान् सङ्खेश्वरपार्श्वो येन, ईदृशो यः पूज्यस्तेन । 2 'मेघस्य' ग्रन्थकारस्य मेघविजयस्य । 3 'उदयम्' वाचकादिपदवीप्रदानस्वरूपम् । 4 'पुटभेदने' नगरे ।

[ 23 ] 5 'समीयुषि' प्राप्ते । 6 'पत्तनम्' अणहिल्लपुरपत्तनं नाम नगरम् । 7 'व्यरुचततराम्' अतिशयेनादिदीपत् । 8 'नीवृल्लक्ष्म्या' नीवृद् राष्ट्रं तस्य लक्ष्म्याः शोभायाः । 9 'हिरण्मयचित्रवत्' हिरण्यं सुवर्णं तस्य विकारो हिरण्मयस्तस्य चित्रमिव । 10 'विपणिसरणेः' विपणीनामापणानां सरणिः पङ्क्तिस्तस्य । 11 'अंशुकाऽऽभरणश्रिया' अंशुकानि वस्त्राण्याभरणान्यलङ्काराणि च तेषां श्रीः शोभा तया ।

[ 24 ] 12 'उद्भुजम्' ऊर्ध्वं भुजो यस्य तम् ।

[ 25 ] 13 'विचकिलभरम्' विचकिलो मल्लिका तस्या भरम् । 14 'सुपुष्करशालिनी' सुष्ठु पुष्कराः शुण्डाग्राणि॰ शालिनी । 15 'स्तनित॰' स्तनितं मेघस्य गर्जितम् ।

[ 26 ] 16 '॰स्मरध्वजसङ्करे' स्मरध्वजो वादित्रं तेन सङ्कीर्णे तस्मिन् । 17 'विधिः' ब्रह्मा ।

[ 27 ] 18 'छेके' विदग्धे । 19 'महेच्छजने' उदारजने । 20 'वितरति' ददाति । 21 'सुमनसाम्' देवतानाम् । 22 'वटुव्रजः' माणवकसमूहः ।

प्रियतममभूद् रक्षायोगाद् यदेव हि गोपुरं
विशति यतिनामीशे तस्मिन्ननिष्टमिदं तदा ।
गज-हय-रथे साङ्कर्येणापथे पथकारिणि
स्फुरति पुरतः को वा स्वार्थे प्रियो यदि वाऽप्रियः ॥ २८ ॥

बहूनि महति स्वैरं लोके पुरो निगमेशिनां
मधुरमरितैर्गायं गायं नटघ्नटनायकः ।
रसजननतः खेदच्छेदं चकार सकारणः
सरसवचनाऽऽरम्भः स्तम्भच्छिदे विदुषां न किम् ? ॥ २९ ॥

बहुसुमनसामामोदेनामवच्छरदागमः
कुनयजडताप्रादुर्भावाद्विभागमसम्भवः ।
तमसि सुदृशां किञ्चिच्छेपः कृतः सुकृतोदयैः
सुरभिरभितः श्रीमत्सूरेर्यशोभिरयं जनः ॥ ३० ॥

रुचिरनसरसि ग्रीष्मो भीष्मस्तदा विशदाशयै-
र्घनवितरणे हर्षाद् वर्षाऽऽगमः समनीयत ।
यदपि भातपथ्येयं देयं विमृश्य शुभं नृणां
किमनुगुणतां भेजुः सूरेः समागमने पुरे ॥ ३१ ॥

नवमृगदृशां क्याम्लानां तथा क्षणवीक्षणे
भेषजभावान्मनागपि तद्दृशाम् ।
अनिमिषतयाऽऽरम्भात् रम्भा अमूरिति निश्चय-
मनुगमगि मानुषेऽपि ध्यविभ्रमभावनात् ॥ ३२ ॥

प्रतिगृहगृहं तत्र न्यासीकृते मणितोरणेऽ-
भ्युदितदिनकृद् बिम्बालम्बानुबिम्बनसन्ततिः ।
द्विगुणसुषमामाविभ्रत्रैः निरस्ततमास्तमा
समयगमने सान्द्रं चान्द्रं रुचां पटलं तथा ॥ ३३ ॥

गुरुरपि विशालैर्यस्यां जगज्जनतां व्यधा-
दभिनवसुधालिप्ते कुड्ये परःशतबिम्बितैः ।
सममिव पुरीलोकं साक्षात् पवित्रयितुं स्वतः
प्रणतममदापूर्णं तूर्णं प्रमोदयिताऽऽशिषा ॥ ३४ ॥

---

[ 28 ] 1 'गोपुरम्' पुरद्वारम् । 2 'साङ्कर्येण' व्यासेन ।

[ 29 ] 3 'निगमेशिनाम्' विबुधमहात्मनाम् । 4 'खेदच्छेदम्' श्रमभ्रमनाशम् । 5 'स्तम्भच्छिदे' स्तम्भो जाड्यं तं छिनत्तीति स्तम्भच्छित् तस्मै ।

[ 30 ] 6 'बहुसुमनसाम्' अतिपुण्यानाम् । 7 'आमोदेन' सुगन्धेन ।

[ 31 ] 8 'अनुगुणताम्' औचित्यम्

[ 32 ] 9 'नवमृगदृशाम्' नव्यकमलाक्षीणाम् । 10 'मेषाभावात्' रोमशाभावात् । 11 'रम्भाः' देवस्त्रियः ।

[ 33 ] 12 "दिनकृद्" दिनकृत् सूर्यः । 13 'द्विगुणसुषमाम्' द्विगुणातिशायिनीं शोभाम् ।

[ 34 ] 14 'यस्याम्' पुर्याम् । 15 'अभिनवसुधालिप्ते' अभिनवा नव्या या सुधा तया लिप्ते 'सुधा चूनो' इति भाषायाम् । 16 'कुड्ये' भित्तौ । 17 'अमदाऽऽपूर्णम्' अमदोऽगर्वस्तेनाऽऽपूर्णम् ।

भवनवलभौ श्राद्धैः पुष्पस्रजोऽवललम्बिरे
परिमलमिलद्भृङ्गारावैरिव स्तुतिवादिनीः ।
गणधरगुरौ जाग्रद्ब्रह्माऽऽयुधे समुपेयुषि
धनुष इव किं जीवा एताः स्मरस्य विपातुकाः ॥ ३५ ॥
वरयुवतिभिर्द्वारे द्वारे सुमङ्गलकर्मणि
सपदि वितते स्थाले मुक्ताभृतेऽत्र हिरण्मये ।
प्रतिकृतिमिषात् तासां नागाङ्गना इव भूतला-
द्ललितवपुषः प्राप्ता रेजुर्गणीन्द्रनिनंसया ॥ ३६ ॥
गणिदिनमणिं दर्शं दर्शं प्रमोदमहोदयाद्
*विहसितमुखाः पद्मिन्यस्ता व्यधुर्मधुरक्रियाः ।
नटनमटनप्रादक्षिण्यं स्थिरक्षणवीक्षणं
प्रणमति मतिस्नेहाद् गेहादुपेत्य पुरो गुरोः ॥ ३७ ॥
रसपरवशाः काश्चिद् गानं विकस्वरसुस्वरैः
सरसिजदृशः प्राचामाचारजैर्धवलैर्व्यधुः ।
यदनुभवतस्ताम्राक्षीणां स्वरः †परपुष्टता-
न्वयपरिगतां गौणीं वृत्तिं विनिश्चिनुतेतराम् ॥ ३८ ॥
‡अरुणवसनैश्छन्ने मार्गे नखांशुभरैरिव
परमगुरवश्चेलुर्यत्नात् तदा दधतः क्रमौ ।
उचितमुदये सौरैः पादैर्भुवोऽपि सरागता
प्रभवति तमश्छित्त्यै दोषापहारविधौ पटुः ॥ ३९ ॥
परिकलितयाऽऽरामैः सौम्यैर्महेश्वरलक्ष्मणै-
र्ध्रुवपरिणतिप्रौढोच्छ्राये सुधर्मसमाश्रये ।
गणिपतिगुरुस्थित्यामेवं सुपर्वपुरस्सर-
ममरनगरीसख्यं मुख्यं तया नियतं दधे ॥ ४० ॥
फणिपतिसमासीनः शङ्खेश्वरः प्रभुरन्तिके-
ऽस्य जयति परं पार्श्वः श्रीमान् महेन्द्रमनःप्रियः ।
गुरुपरिचयादिन्द्रोपेन्द्राऽऽगमेऽत्र न विस्मयः
सयद्धतिपुरे लङ्कापुर्याः प्रभाभरभासुरे ॥ ४१ ॥

[ 35 ] 1 'भवनवलभौ' भवनानि गृहाणि तेषां वलभिः वंशपञ्जरादिरछदिष आधारस्तस्मिन् । 2 'भृङ्गाऽऽरावैः' भ्रमरगुञ्जारवैः । 3 'जीवा' गुणः । 4 'स्मरस्य' कामदेवस्य ।

[ 36 ] 5 'हिरण्मये' सुवर्णयुक्ते । 6 'नागाङ्गनाः' नागलोकस्त्रियः । 7 'ललितवपुषः' कान्तदेहाः । 8 °'निनंसया' नन्तुमिच्छया ।

[ 37 ] 9 'गणिदिनमणिम्' गणिषु दिनमणिः सूर्य इव तम् ।

[ 38 ] 10 'रसपरवशाः' रसाधीनाः । 11 'सरसिजदृशः' कमलाक्ष्यः । 12 'परपुष्टतान्वय°' कोकिलवंशः ।

[ 39 ] 13 'सौरैः' सूरिसम्बन्धिभिः ।

[ 40 ] 14 'आरामैः' उद्यानैः । 15 °'लक्ष्मणैः' लक्ष्मीवद्भिः । 16 °'उच्छ्राये' आरोहे । 17 'सुपर्वपुरस्सरम्' पर्युषणादिपर्वपूर्वकं देवतापूर्वकं वा ।

[ 41 ] 18 'सयद्धतिपुरे' सीरोहीनगरे ।

* A. विहसितदृशः । † B पुष्ट° । ‡ B °वसनैः ।

वसति धनदः सर्वः पौरः परं न कुबेरकः
परमरतिमान् वारुण्यां[1] न प्रचेतसि[2] चाग्रिमः ।
न चपलकलां काप्यादत्ते स पुण्यजनोऽप्यहो
प्रमुदितमनाः सद्यः सौरोदये[3] न जडाऽऽत्मभूः ॥ ४२ ॥
बहुकुशलतारामाः[4] कामाऽऽस्पदं[5] सुमनःप्रियाः[6]
निदधति रसं[7] पात्रव्यूहे[8] सिताम्बरसङ्गते ।
सुकविकलया कान्ताः शुद्धैर्मरुद्भि[9]रुपासिताः
प्रसृमरसुखामोदा ह्यस्यां[10] महाशयनन्दनाः[11] ॥ ४३ ॥
अभिनवधनावास्या स्फीता[12]श्चिरं मगधश्रिय-[13]
स्तपगणगुरोस्तस्यां स्थित्या सुधर्मसधर्मणः[14] ।
अभिनतमहाराजश्रीला प्रभासविशेषता
पुरि परिचिता भव्या येनोत्सवैर्वरदा मता ॥ ४४ ॥
समयचतुरैर्जीवाजीवादयोऽङ्गदयोदय-
प्रकरणधुरैर्विश्वेऽप्यर्था मतेर्विपयीकृताः ।
गणनृपगुरुप्रत्यासत्त्या[15] स्फुटं चतुरङ्गता-
ऽजनि फलवती तेषां तस्माद् विमोहपराजयः ॥ ४५ ॥
विजयचरितं सूरेर्दूरे कुलाचलचूलिका-
स्वपिचलरसाद् गायन्ति स्मोल्लसन्मधुवालिकाः[16] ।
स्फुटतरतया जातं पुण्यावदातशतैरिदं
परमरमया[17] रम्ये तस्मिंश्चिरंतनपत्तने ॥ ४६ ॥
बहुलसुकृतैश्चातुर्मास्याः क्रमात् समतिक्रमे
तपसि तपसां राजा जीवाह्वयस्य दृढाऽऽग्रहात् ।
उदयनगरे श्रीमत्पार्श्वाभिषेकविधित्सयाऽ-
भ्यचलदचलश्रेणीकीर्णाध्वनाधिकधामवान्[18] ॥ ४७ ॥
क्वचन विटपश्रेण्या[19] गोत्रस्थितिं[20] स्थगयन् निजा-
मपथगमनेनैवाऽऽलब्धः समेखलतां गिरिः ।
परमगुरुणा कूटै[21]र्भीमः परं ददृशे पथि
कुनृपतिरिव क्रूरक्रोडाऽऽग्रेण कुरङ्गभूः[22] ॥ ४८ ॥

---

[ 42 ] 1 'वारुण्याम्' मदिरायाम् । 2 'प्रचेतसि' वरुणे । 3 'सौरोदये' सूर्योदये ।

[ 43 ] 4 ''रामाः' स्त्रियः । 5 'कामाऽऽस्पदम्' मोहस्थानम् । 6 'सुमनःप्रियाः' देवप्रियाः रम्भादयः । 7 'रसम्' 'विभवानुभावैर्व्यभिचारिभिर्व्यक्तः सामाजिकानां वासनारूपेण स्थितो रत्यादिको भावः कविकृदये रस्यमानो रस शृङ्गारादिः । 8 'पात्रव्यूहे' पात्राणि नाट्येऽधिकृतास्तेषां व्यूहे समूहे । 9 'मरुद्भिः' देवैः । 10 'अस्याम्' नगर्याम् । 11 'महाशय-नन्दनाः' महेन्द्रपुत्राः ।

[ 44 ] 12 'स्फीता' विस्तृताः । 13 'मगधश्रियः' मगधदेशलक्ष्म्याः । 14 'सुधर्मसधर्मणः' सुधर्मस्वामिगणधरसमानस्य ।

[ 45 ] 15 ''प्रत्यासत्त्या' सेवया ।

[ 46 ] 16 ''मधुवालिकाः' किन्नरबालाः । 17 'परमरमया' परमलक्ष्म्या ।

[ 47 ] 18 ''अधिकधामवान्' अधिकप्रतापवान् ।

[ 48 ] 19 'विटपश्रेण्या' वृक्षराज्याः । 20 'गोत्रस्थितिम्' अभिजनस्थितिम् । 21 'कूटैः' शृङ्गैः । 22 'कुरङ्गभूः' मृगभूमिः ।

अविरलदलद्वल्लीवेल्लत्प्रशोणिमपल्लवैः
शबरयुवतीगीतैः स्फीतैः प्रणुन्न इवाचलः ।
नटनघटनां रागात् सूरेः पुरस्समजीघटद्
मृदुलपवनाद् गुञ्जद्वेणुध्वनिर्ध्वनितोत्सवः ॥ ४९ ॥

क्वचन निवसत्पल्लीभिल्लीजनेन सविस्मयं
करकिसलयैर्गुञ्जापुञ्जाऽऽदरेण विभूषितैः ।
विहितमसकृत् सूरिर्मुग्धप्रणामविधिं दृशा
प्रतिपदमनारम्भात् सम्भावयन् पथि निर्ययौ ॥ ५० ॥

ज्वलदनलजज्वालामालाजटालमनाकुलः
कुलगिरिकुलाचारेणोच्चैश्चलन्तमिवाचलम् ।
यतिमिव दृढध्यानं साक्षान्निरैक्षत सूरिराट्
क्वचन रचनाभीमे सिंहासनेन शिलातले ॥ ५१ ॥

अतिमृदुलतारामाः कामाश्रयः परभोगिनां
*किसलयकरैर्वातोद्धूतैर्गुरुं प्रणता लताः ।
तरणिकिरणक्लेशो माऽस्मां प्रभूदिति भूधरोऽ-
प्यगयदभितो दिक्चक्रं चोत्तरैः शिखरैः खरैः ॥ ५२ ॥

जलदपटलीवासोऽवाप्य क्वचिच्च सिताम्बरः
समजनि दवग्रासात् क्वापि स्फुटं स दिगम्बरः ।
भयमुपनयन् भिल्लोदीर्णैर्द्विधाऽपि च भल्लकैः
क्वचन सुरभिः सल्लीवल्लीवनैर्जननन्दनः ॥ ५३ ॥

शबरपत्तननाथः सूरेः पदाम्बुजमानमन्
मनसि रसिको वाचां पाने सपानवराधिपः ।
शपथमदधात् त्रस्यज्जन्तोर्वधस्य रहस्यवित्
परमगुरुणाऽऽदिष्टे शिष्टे महोदयदेशने ॥ ५४ ॥

[ 49 ] 1 'शबरयुवतीगीतैः' भिल्लीगायनैः । 2 "वेणुध्वनि" वेणुः वंशस्तस्य ध्वनिः शब्दः ।

[ 50 ] 3 "पल्ली" पल्ली ग्रामम् । 'पल्ली च ग्रामके कुड्याम्' इति हैमः [ अने० सं० कां० २ श्लो० ५०८ ] । 4 'गुञ्जा' गुञ्जा कृष्णला 'चणोठी' इति भाषायाम् । 'कृष्णला तु गुञ्जा' इति हैमः [ अभि० चिं० कां० ४ श्लो० २२१ ]

[ 51 ] 5 "जटालम्' सङ्कुलम् ।

[ 52 ] 6 'तरणि' तरणिः सूर्यः । 7 'भूधरः' पर्वत ।

[ 53 ] 8 'जलदपटलीवासः' जलदः मेघस्तस्य पटली समूहस्तद्रूपं वासः वस्त्रम् । 9 'दवग्रासात्' दावानलज्वलनात् । 10 'भिल्लोदीर्णैः' किरातोद्दिष्टैः । 11 'भल्लकैः' बाणैः । 'भल्लं भल्लुक-बाणयोः' इति हैमः [ अने० सं० कां० २ श्लो० ५१५ ] । 12 'सल्लीवल्लीवनैः' सल्लीवृक्षविशेषस्तस्य वल्लयः लतास्तासां वनम् ।

[ 54 ] 13 'शबरपत्तननाथः' भिल्लसैन्यपतिः । 14 'शपथम्' प्रतिज्ञम् ।

* P °किसलय° । † P पल्ली° ।

सरससरसां तीरे धीरे स्फुटे तटिनीतटे
पटनिलयने पूर्वं जीवाह्वयेन निवेशिते ।
प्रभुरधिवसन् शुद्धाचारैः पटुर्वटुभिः स्तुतः
शबरविषयं घर्माऽऽधानैः स पावनमादधे ॥ ५५ ॥

क्रमगमनिकायोगाद् योगातिशायिमहस्विनां
समुदययुतः प्रापद् व्यापद्भरस्य विनाशकः ।
विशदचरणोत्साही नाहीपुरं नृपुरन्दर-
प्रणमतशिरोरत्नज्योतिःपरीतपदः प्रभुः ॥ ५६ ॥

अधिगतगणाधीशाभ्यासाऽऽगमान् मुदमावहन्
उदयनगराधीशः प्रातर्जनैरथ तुष्टुवे ।
जय जय विभो ! त्वं सुन्दर्यां विलोकनमादरात्
कुरु गणगुरुप्राप्तौ पुर्यां महोत्सवसन्ततेः ॥ ५७ ॥

प्रतिजनगृहं जज्ञे पुष्पस्रजामवलम्बनं
प्रसृमरयशोराशेर्भासां गुरोरिव साम्प्रतम् ।
निशि दिशि दिशि स्वैरभ्रान्त्या द्विजाधिपतिप्रिया
पटलकमिव प्रातर्भ्रष्टप्रवृत्तमिवाचलम् ॥ ५८ ॥

उदयननगे सौरं तेजश्चकार सरागता-
मुदयनगरेऽप्येतच्चेतश्चमत्कृतिकारणम् ।
सपदि कमलाऽऽमोदः प्रादुर्बभूव ततो द्रुपे
भुवि सुमनसां राज्या राज्यातिशायिमुदो धृताः ॥ ५९ ॥

अशुभततरां लक्ष्मीस्तार्क्ष्यप्रजातिसमुत्थिता
व्यपहृततमा रत्नश्रेणी विभूषणभासुरा ।
प्रगुणिततरालङ्कारश्रीस्तथा हयवाहने
यदति विभवं सौराङ्गनासुपस्थितिशालिनम् ॥ ६० ॥

प्रसरति परं सौरे गौरे रुचां निचये चये
दधति सुतरां वैवर्ण्यं ते द्विजेशकलाभराः ।
प्रकृतिशिशिरा अप्यांस्याये मुदां न कलङ्किनो
न मधति रतिदोंपाधारे सुवृत्तमहोदये ॥ ६१ ॥

---

[ 55 ] 1 'सरससरसाम्' शुद्धसरोवराणां कोकूयितादिकुल्यानाम् । 2 'तटिनीतटे' मन्दाकिनीनदीतीरे । 3 'शबरविषयम्' भिल्लप्रदेशम् । 4 'पावनम्' पवित्रम् ।

[ 56 ] 5 'क्रमगमनिकायोगात्' क्रमैः पादैः गमनिका विहारकर्म योगात् । 6 'विशदचरणोत्साही' निर्मलचारित्रे उत्साही । 7 'परीतपदः' परीता परिवेष्टिता पादा यस्य सः ।

[ 60 ] 8 'तार्क्ष्यप्रजाति°' तार्क्ष्या अश्वास्तेभ्योऽप्यप्रजातिः श्रेष्ठः ।

[ 61 ] 9 'द्विजेशकलाभराः' द्विजेशश्चन्द्रस्तस्य कलाभराः । 10 'आप्याये' स्थिते ।

हरिकरिवरः[1] सिन्दूराक्तं[2] शिरः समघर्पयत्
कुलशिखरिणि प्राच्ये तस्मादिवारुणिमाश्रये ।
मदजलललद्भृङ्गश्रेण्या समं क्वचिदुद्ययौ
तिमिरनिवहः सावर्ण्येनोद्भवद्भयसम्भ्रमात् ॥ ६२ ॥

दिशि दिशि निशि स्फारास्तारा दधुर्मधुरप्रभा-
मुपसि[3] सबला सौरी कान्तिस्तदाहरणादिव ।
भृशमुदयते प्राचीभागे सदायमहाद्भुतं
दिशि जलपतेस्ताद्रूप्येणाऽऽगते गणभास्करे[4] ॥ ६३ ॥

द्विजपतिमहाराज्ये रात्रौ यभुः प्रभुताभृतो
जगति सततं नक्षत्राणां गणा गगनाङ्गणे ।
महसि हसिते सौरे दूरं ययुस्तमसा समं
प्रकृतिसमतालभ्येऽलभ्ये भवेद् भुवि साधनम् ॥ ६४ ॥

गगनसरिति[5] स्नानं चक्रे द्विजाधिपतिश्चिरं
भगणमिपतः[6] प्रादुर्भूतास्तदम्बुनि बुद्बुदाः ।
निबिडजडिमच्छिन्ने वेगाद् विभेजुपि वारुणी-
मुपसि विरते तस्मिन्नेते क्रमाच्छममाययुः ॥ ६५ ॥

वसतिमिलिता लोकाः सौरे समागमनोत्सवे-
ष्वहमहमिकापूर्वं[7] कर्तुं वसुव्ययमुद्यताः[8] ।
अनुनिजगृहं जग्मुः सर्वेऽधुना भगणा[9] इव
नवरुचिधनप्रत्यासत्तिं विभाव्य च गोपतेः[10] ॥ ६६ ॥

मुदितमनसः पुंनागास्ते[11] करान् यदितस्ततो
विदधत इहोदात्ता[13] दानाऽऽशयाः कलभोत्तमाः[12] ।
परिणतितराः केचित् पोता[14] अपि प्रयतैषिणो
विविधरुचयः सौरस्थानोन्मुखाः प्रतिभान्त्यमी ॥ ६७ ॥

अभिजिगमिषुः सर्वो राजप्रियादिगणोऽपरां
समुदयि महः सौरं वेगादुपस्थितमाश्रयन् ।
इदमनुययौ तस्यावश्यं कलाधर[15]मण्डलं
क्षणपरिचये का वा पूर्वाऽपरागतिसङ्गतिः ॥ ६८ ॥

---

[62] 1 'हरिकरिवरः' इन्द्रहस्ती । 2 'सिन्दूराऽऽक्तम्' सिन्दूरैराक्तं विलेपितम् ।

[63] 3 'उपसि' प्रातःकाले । 4 'गणभास्करे' गणेषु भास्कर इव तस्मिन् ।

[65] 5 'गगनसरिति' स्वर्गङ्गायाम् । 6 'भगणमिषतः' तारागणव्याजतः ।

[66] 7 'अहमहमिकापूर्वम्' परस्परमहं प्राक् इत्यस्यामहमहमिका पूर्वं यस्य तत् । 8 'वसुव्ययम्' द्रव्यव्ययम् । 9 'भगणाः' नक्षत्राणि । 10 'गोपतेः' रवेः ।

[67] 11 'पुंनागाः' पुरुषेषु नागा हस्तिनः । 12 'कलभोत्तमाः' कलभाश्रितादन्द्रिका गजपालास्तेपूत्तमाः । 13 'उदात्ताः' महाशयाः । 14 'पोताः' पोता दशवर्षका गजबालाः ।

[68] 15 'कलाधर' कलाधरश्चन्द्रः ।

तदनु काञ्चन-रत्नमयैर्युताः प्रवरपल्ययनैस्तुरगोत्तमाः ।
अनुचरैश्चतुरैरुपरक्षिता अगणना गणनायकमभ्ययुः ॥ ९ ॥
हरिक-शोण-हलाहक-पङ्गुलैर्धवल-लोहित-नीलक-पिङ्गलैः ।
प्रचलितैर्ललितैः पुरतो बभौ सचतुरं चतुरङ्गबलं हयैः ॥ १० ॥
अतिचलाचलबालधिकेशरैर्विततपक्षतयो गरुडा इव ।
कनकरश्मिधरा हरिपुङ्गवा नृपरवेः परवेगभृतो बभुः ॥ ११ ॥
जवनता विनतातनयाऽऽश्रयादुपनता ननु ताक्ष्यवराऽऽख्यया ।
पवनतोऽप्यतिशायितयाऽचले हरिबलेऽरिबले श्लथताकरे ॥ १२ ॥
हरिपरिक्रमणे जनतामनः सजति चारुपदेषु रजोमिषात् ।
तदिव धूनयितुं चलताऽभवद्धरिपदेऽरिपदे विपदेधके ॥ १३ ॥
विदधतः किमु मण्डलमाश्रिताँश्चरणरेणुमिषात् परिमण्डलम् ।
उपदिशन्ति मनोऽणुकणान् स्म ते हयवरा यवराजिरसोत्कटाः ॥ १४ ॥
करिपरिश्रमसम्भ्रमकारिणोऽन्तिकमुपेत्य निवृत्य सुदूरगाः ।
विदधिरे तुरगा उरगारिवत् सनिगमे निगमे गतिविभ्रमान् ॥ १५ ॥
तुरगचङ्क्रमवक्रतया क्वचित् क्वचन चक्रपरिक्रमविक्रमम् ।
विविधवेल्लितवल्गितकौशलादपि कलापिकलामतनोत् पथि ॥ १६ ॥
प्रतिपदं कनकोत्किरणैर्नृपः सुरपतिप्रतिमोऽभिचलन् गुरोः ।
सुभगपात्रजनं पथि नर्त्तयन् मुदमबाधमवाप सहास्तिकैः ॥ १७ ॥

[ १० ] १ 'हरिक-शोण-हलाहक-पङ्गुलैः' हरिकः पीतहरितच्छायः 'हरिकः पीतहरितच्छायः स एव हालाहः' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३०८ ], शोणः कोकनदच्छविः, हलाहकश्चित्रितो हयः, पङ्गुलैः सितकाचाभैः । २ 'धवल-लोहित-नीलक-पिङ्गलैः' धवलः श्वेतः, कर्कलोहितो क्रियाहः, नीलकः [illegible] पिङ्गलैः पीतवर्णैः । ३ 'सचतुरम्' हयचाल-नकुशलाद्यैः सह ।

[ १४ ] ४ 'हयवरा मण्डलं विदधतः किमु मनोऽणुकणान् परिमण्डलं परिमाणं वर्तुलत्वमुपदिशन्ति स्म' इत्युत्प्रेक्षते ।

[ १५ ] ५ 'सनिगमे' वणिक्सङ्कीर्णे । ६ 'निगमे' मार्गे ।

[ १६ ] ७ 'कलापिकलाम्' मयूरनृत्यविशेषम् ।

[ १७ ] ८ 'अबाधम्' प्रतिपक्षरहितम्-अतुल्यं यथा स्यात् तथा । ९ 'सहास्तिकैः' हस्तिसमूहैः, आस्तिकैः श्राद्धैः सह वा ।

[ 9 ] 1 'प्रवरपल्ययनैः' श्रेष्ठपर्याणैः 'पर्याणं तु पल्ययनम्' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३१८. ] ।

[ 11 ] 2 'अतिचलाचलबालधिकेशरैः' अतिचलचलोलादिः '[illegible]' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३०५ ] । 3 'विततपक्षतयः' वितता विस्तृता पक्षती पक्षमूले येषां ते । 4 'हरिपुङ्गवाः' अश्वश्रेष्ठाः ।

[ 12 ] 5 'विनतातनयाऽऽश्रयात्' विनतातनय गरुडाग्रजस्याश्रयात् । 'विनतासूनुररुणो गरुडाग्रज' इति हैम [ अभि० चिं० कां० २ श्लो० १६ ] 6 'ताक्ष्यवराऽऽख्यया' श्रेष्ठगरुडसंज्ञया । 7 'हरिबले' अश्वसैन्ये ।

[ 13 ] 8 'हरिपरिक्रमणे' अश्वभ्रमणे । 9 'सजति' 'षञ्ज सङ्गे' इति धातोः 'दंशसञ्जः शवि' ४-२-४९ । इति सिद्धहैमीयसूत्रेण वर्तमानकाले रूपम् । 10 'विपदेधके' कष्टवर्धके ।

[ 15 ] 11 'उरगारिवत्' गरुडवत् '[illegible]हिभिद् वज्रतुण्डः' इति हैम. [ अभि० चिं० कां० २ श्लो० १४४ ] ।

[ 16 ] 12 'विविधवेल्लितवल्गितकौशलात्' विविधानि वेल्लितानि लोठनानि वल्गितानि प्लुतानि च तेषां कौशलान्नैपुण्यात् । 'भ्रमावृत्त-परावृत्तलोठनानि तु वेल्लिते'–'धोरितं वल्गितं प्लुतोत्तेजितानि च' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३११ ] ।

[ 17 ] 13 'सुरपतिप्रतिमः' इन्द्रतुल्यः । 14 'सुभगपात्रजनम्' सुभगाः शोभनाः पात्रजना नाट्येऽभिनयपुरुषाः ।

समभिनम्य रयात् परया श्रिया क्षितिपतिर्जिनशासननायकम् ।
पुरवरेऽस्य निवेशमकारयत् सविनयं विनयन् नृदरिद्रताम् ॥ १८ ॥
समभिषेकविधिं निरमापयद् जिनवरे ननु विघ्नहराऽऽह्वये ।
सकलसङ्घसमक्षमयं कृपारसदृशा सदृशा जनरञ्जनः ॥ १९ ॥
मुनिवरानिव रागजयोर्जितान् बुधपदे विनिवेश्य कृतार्थयन् ।
सुकृतपीवरजीववरास्तिकं द्रुतमसन्तमसं भुवनेऽकरोत् ॥ २० ॥
स्मरवशीकरणाय जगद्भुवामवनिजातवनीपरिजीवनम् ।
मधुपगीतयशा मधुरायया प्रथमतोऽथ मतो रसिकाङ्गिनाम् ॥ २१ ॥
बहुदिनान्युदगम्बुजलोचना विहरतः कृशकान्तिरहर्मणिः ।
हृतवसुर्ननु दक्षिणया तदुत्सुकमनाः कमनादिव निर्ययौ ॥ २२ ॥
हिमवतः परिशीलनयोत्तरा विरहतापमिवापचिकीरभूत् ।
अहिमरश्मिरसौ नवपद्मिनीरतिकरोऽतिकरोदयदुस्सहः ॥ २३ ॥
गलदमन्दपरागपिशङ्गितोऽपि नवकामुकवन्मधुपव्रजः ।
विटपरागितयेव तमस्समः कमलिनीमलिनीकरणं बभौ ॥ २४ ॥
जल-नभः-स्थलचारिवपुष्मतामनुययुर्मिथुनानि परस्परम् ।
कलरवैर्यतिनामपि मानसे स्मरमयं रमयन्ति रसं भृशम् ॥ २५ ॥
विरहिणां सहकारमहीरुहा किमपहृत्य कुलान् मुकुलादिभिः ।
प्रियतमाङ्कजुषां सुदृशां पिकध्वनिभृता निभृता रतिराददे ॥ २६ ॥
हिमवतः पवनो मृदुराववौ मनसि सञ्जनयन् मदमङ्गिनाम् ।
कमलिनीवनसौरभसम्भृतः कमलकोमलकोशविघट्टनात् ॥ २७ ॥

---

[ १८ ] १ 'विनयन्' अपनयन् स्फेटयन् । २ 'नृदरिद्रताम्' नराणां दरिद्रभावम् ।
[ १९ ] ३ 'कृपासदृशा' कृपारसदृष्ट्या । ४ 'सदृशा' तुल्यया । ५ 'जनरञ्जनः' लोकसन्तोषदः ।
[ २२ ] ६ 'हृतवसुः दक्षिणया' दक्षिणया श्रिया हृतवसुः सन् ।

---

[ 20 ] 1 'बुधपदे' विबुधपदव्याम् । 2 'कृतार्थयन्' उपकारयन् । 3 'असन्तमसम्' अनन्धकारमर्यादं, अपापम् ।

[ 21 ] 4 'स्मरवशीकरणाय' स्मरः कामदेवस्तं वशीकर्तुम् । 5 '°वनीपरिजीवनम्' वनी भिक्षापनमेव परिजीवनं जीविकाम् । 6 'मधुप°' मधुपो भ्रमरः ।

[ 22 ] 7 'उदगम्बुजलोचना' उदग् उदयतीति उदक्कमलाक्षी । 8 'अहर्मणि.' सूर्यः । 9 'कमनाद्' पण्डितात् कामाद् वा ।

[ 23 ] 10 'अपचिकीः' दूरीकर्ता । 11 'अहिमरश्मिः' सूर्यः । 12 'अतिकरोदयदुस्सहः' अतिकराः बहुकिरणास्तेषामुदयेन दुस्सहोऽसह्यः ।

[ 24 ] 13 'परागपिशङ्गितः' परागः पौष्पं रजस्तेन पिशङ्गितः पीतरक्तः कृतः । 14 'नवकामुकवत्' नवः नवीनधासौ कामुकोऽनुरक्तश्चेति नवकामुकस्तेन समानः । 15 'मधुपव्रजः' भ्रमरसमूहः । 16 'विटपरागितया' विटपाः वृक्षास्तेषु रागितया । 'विटपः पुनः पल्लवेऽपि च वृक्षेषु' इति हैमः [ अने० सं० श्लो० ३ श्लो० ४७५ ]

[ 25 ] 17 'जल-नभः-स्थलचारिवपुष्मतां' जलचर-खेचर-स्थलचरप्राणिनाम् । 18 'मिथुनानि' द्वन्द्वानि 'स्त्रीपुंसौ द्वन्द्वं मिथुनम् च तत्' इति हैमः [ अभि० चिं० कां० ३ श्लो० २०२ ] । 19 'स्मरमयम्' कामयुक्तम् ।

[ 26 ] 20 'सहकारमहीरुहाः' आम्रवृक्षाः । 21 'कुलान्' सजातीयप्राणिनो वृन्दान् । 22 'मुकुलादिभिः' कुड्मलादिभिः । 23 'पिक°' पिकः कोकिलः । 24 'निभृता' विनीता ।

[ 27 ] 25 'सञ्जनयन्' उत्पादयन् । 26 'मदम्' आनन्दसंमोहयोः सञ्जनम् । 27 '°कोश°' कोशः कुड्मलः योनिश्च ।

सरससरसां तीरे धीरे स्फुटे ति... [न]रपद्मिनीः
पटनिलयने पूर्वं जीवाहृये ... दिव्ययुतयोषताः ।
प्रसुरधिवसन् शुद्धाचारे ... ऽऽगमे सरसीतटे
शर्वरविषयं धर्मा... ... गानैः प्रपश्य ... ताः ॥ ६९ ॥
क्रमगमनिकायोग ... निःशेषनिषः ...
समुदययुत ... तद्वयपाकियते... ।
विंशद्चर ... येव महोत्सवे
... रः सौराऽऽगमस्य विसृत्वरे ॥ ७० ॥
प्रण ... ऽरामः सुरैः प्रविकस्वरे-
अ... ... कानां द्राग् वियोगविलासिनाम् ।
... कर्तुं संरध्वजमण्डलं
... मुखरीकुर्वत् सर्वं दिशामपि मण्डलम् ॥ ७१ ॥
अमरसरिति प्रोत्फुल्लं यद् ग्रहोत्पलकाननं
वियति तदलं सौरी दीप्तिः शुशोष सरोपणम् ।
द्विजपतिरुचेर्नाशादेवं क्षितावपि वीक्ष्यतां
विपयवशतः सर्वाङ्गीनग्रहोत्पलकाननम् ॥ ७२ ॥
गगनसुभगाऽऽरामे रात्रावुडुप्रसवावली
विकसिततरा सौरीं पूजां तयेव विधित्सुना ।
विवुधनिवहे नेदानीं द्रागचीयत सर्वतः
प्रभवतु भवाँस्तत्साहाय्यं विधातुमनातुरः ॥ ७३ ॥
इति नरपतिः सुप्तस्तत्रार्थिकैः प्रतिबोधितो
व्यधित सहसाऽऽदेशं देशे प्रवेशमहामहे ।
कुरुत सकलां सज्जां सद्योऽनवद्यपताकिनी-
मभिजिगमिषुः सूरेरेवं कृताभ्युदयक्रियः ॥ ७४ ॥
तृणमिव दिवमेवं भावयन् भावशुद्ध्या
उदयनगरदेशाधीश्वरः स्वीयऋद्ध्या ।
सुरपतिरिव सूरेः सम्मुखीनश्चचाला-
चलमपि बलभाराचालयन्नुज्ज्वलश्रीः ॥ ७५ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
कथानायकस्य उत्तराशाविजयवर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥

---

[69] 1 'मिलितललिताऽऽलीनाम्' मिलिताश्च ते ललिताश्चेति मिलितललिताश्चासावाल्यः सख्यस्तासाम् ।
[70] 2 'उडुसुमनसः' नक्षत्रदेवाः । 3 'विसृत्वरे' प्रसारिणि ।
[71] 4 'वन्याऽऽराम.' वाह्योद्यानम् । 5 'सरध्वजमण्डलम्' पक्षिसमूहम् । 6 'मुखरीकुर्वत्' वाचालीकुर्वत् ।
[72] 7 'अमरसरिति' स्वर्गङ्गायाम् । 8 'ग्रहोत्पलकाननम्'. ग्रहा एवोत्पलानि कमलानि तेषां काननं वनम् । 9 'द्विजपतिरुचे.' चन्द्रकान्त्याः ।
[73] 10 'विबुधनिवहे' पण्डितसमूहे ।
[74] 11 'अनवद्यपताकिनी' निर्दोषसैन्यम् ।

## षष्ठः सर्गः ।

श्रीः ऐँ नमः श्रीपार्श्वार्हते ।

अथ चचाल विशालबले पुरो मदमलीनकटा करिणां घटा ।
घनघटेव भुवं परिसिञ्चती तरुणतारुणतान्वितबिन्दुभिः ॥ १ ॥
सकलसाध्यविधेर्वरसाधनं घनबलेऽवधिरेव गजाऽऽवली ।
पथि जनव्रजतापमपाहरत् सुकरशीकरशीतलवारिभिः ॥ २ ॥
किमिदमीयमियात् समुपस्थिताः प्रभुसिसेविषया विषयाचलाः ।
गलदमन्दमदाम्बुविनिर्झरा न बहुधा बहुधातुविभूषिताः ॥ ३ ॥
कर-चतुष्पद-वालधि-शेफसा क्षितितलस्पृगसौ गजसंहतिः ।
सपदि दर्शनतोऽप्यभिनन्दयेन्नृपरमां परमां खलु तादृशी ॥ ४ ॥
कनक-रत्नविभूषणरश्मिभिः समभिभासितदिग्वलयाभितः ।
भृशमदीप्यत सा द्विपसन्ततिः सुखचिता खचिता शुभलक्षणैः ॥ ५ ॥
परिणता क्वचन क्वचिदुन्नता द्रुतगतिर्यदि वा स्खलिता हठात् ।
गजघटा क्वचिदम्बुधरोद्धुरस्तनवती नवतीव्रहयानुगा ॥ ६ ॥
प्रणमनाय कृतोन्नतपुष्करा कुथचलाचलरश्मितरङ्गिणी ।
गजघटा रुरुचे यमुनेव साऽऽहतरसा तरसा तटभेदने ॥ ७ ॥
रंजतकिङ्किणिकारणपूरितैर्भ्रमदभ्रतरभ्रमरस्वरैः ।
द्रुतविलम्बितमेव जगाम सा घनमदा न मदाऽऽयतपृष्ठिका ॥ ८ ॥

---

[१] १ 'तरुणताऽरुणतान्वितबिन्दुभिः' हस्तिनां तारुण्ये स्वेदबिन्दवोऽरुणा भवन्ति ।

[२] २ 'किमिदमीयमियात् समुपस्थिताः' गजघटाया इदमीयं यन्मियं तस्मात् किं न समुपस्थिताः ।

[५] ३ 'सुखचिता' सुखयुता । ४ 'खचिता' व्याप्ता । ३ 'शुभलक्षणैः' भद्रजातिलक्षणैः ।

[७] ५ 'कृतोन्नतपुष्करा' कृतान्युन्नतान्युद्धतानि पुष्कराणि शुण्डाया अग्रभागा यया सा 'अग्रं हस्तस्य पुष्करम्' इति हैमः [अभि० चिं० कां० ४ श्लो० २९०] । ६ 'कुथ°' 'कुथे वर्णः परिस्तोमः' इति हैमः [अभि० चिं० कां० ३ श्लो० ३४४] 'कुथः स्यात् करिकम्बले' इत्यनेकार्थः । ७ '°तरङ्गिणी' नदी । ८ 'तरसा' शीघ्रम् ।

---

[1] 1 'मदमलीनकटा' मदः दानं तेन मलीनाऽऽविलाः कटा गण्डा यस्यां सा । 2 'घटा' बहूनां गजानां रचना घटा 'बहूनां घटना घटा' इति हैमः [अभि० चिं० कां० ४ श्लो० २८९] 3 'घनघटा' मेघमाला ।

[3] 4 'प्रभुसिसेविषया' प्रभुं सेवितुमिच्छा सिसेविषा तया । 2 'विषयाचलाः' देशपर्वताः ।

[4] 5 'कर-चतुष्पद-वालधि-शेफसा' करः शुण्डा 'हस्तिनस्तु करः शुण्डा हस्तः' इति हैमः [अभि० चिं० कां० ४ श्लो० २९०], चतुष्पदाः चत्वारः पादाः, वालधिः पुच्छम् 'अथ पुच्छं वालहस्तो लाङ्गूलं दुम वालधिः' इति हैमः [अभि० चिं० कां० ४ श्लो० ३१०], शेफः पुंश्चिह्नं तेन प्राण्यङ्गत्वादेकवद्भावः 'अथ पुंश्चिह्नं मेहनं शेफशेफसी' इति हैमः [अभि० चिं० कां० ३ श्लो० २७६] । 6 'नृरमाम्' राजलक्ष्मीम् ।

[6] 7 'परिणता' तिर्यग्दन्तप्रहारिणता 'तिर्यग्घाती परिणतो गजः' इति हैमः [अभि० चिं० कां० ४ श्लो० २८७] । 8 '°उद्धुर°' उद्धुरमुन्नतम् । 9 'नवतीव्रहयानुगा' नवा नूतना तीव्रा द्रुतगतयश्च ये हया अश्वास्ताननुगच्छतीति ।

[8] 10 'रंजतकिङ्किणि' रजतं शुक्लं रूप्यं किङ्किणी क्षुद्रघण्टिका ।

हिमकणलसन्मुक्तायुक्ता इतो वरपद्मिनीः
परिधृतनवज्योतिर्वस्त्राऽऽदिहक्षुतयोद्यताः ।
हसितवदनाम्भोजाः सौराऽऽगमे सरसीतटे
मिलिनललिनाऽऽलीनां गानैः प्रपद्य नृपोज्ज्वलाः ॥ ६९ ॥
उडुसुमनसः प्रस्तीर्णाया निःशेषनिशः कृते
गगनशयने निर्माल्यं तद्व्ययाक्रियतेऽधुना ।
पवनपुरुषैर्भूमीभागे तथैव महोत्सवे
विजयिनि कृते पौरैः सौराऽऽगमस्य विसृत्वरे ॥ ७० ॥
नदति मधुरं बाह्याऽऽरामः स्वरैः प्रविकस्वरै-
र्नृपसवयसां लोकानां द्राग् विबोधविलासिनाम् ।
तदनु तदनु प्रौढिं कर्तुं सरध्वजमण्डलं
ध्वनति मुखरीकुर्वत् सर्वं दिशामपि मण्डलम् ॥ ७१ ॥
अमरसरिति प्रोत्फुल्लं यद् ग्रहोत्पलकाननं
वियति तदलं सौरी दीप्तिः शुशोष सरोपणम् ।
द्विजपतिरुचेर्नाशादेवं क्षितावपि वीक्ष्यतां
विपयवशतः सर्वाङ्गीनग्रहोत्पलकाननम् ॥ ७२ ॥
गगनसुभगाऽऽरामे राध्राग्रुद्गप्रसवावली
विकसिततरा सौरीं पूजां तयेव विधित्सुना ।
विबुधनिवहे नेदानीं द्रागचीयत सर्वतः
प्रभवतु भवाँस्तत्साहाय्यं विधातुमनातुरः ॥ ७३ ॥
इति नरपतिः सुप्तस्तत्रार्थिकैः प्रतिबोधितो
व्यधित सहसाऽऽदेशं देशे प्रवेशमहामहे ।
कुरुत सकलां सज्जां सद्योऽनवद्यपताकिनी-
मभिजिगमिषुः सूरेरेवं कृताभ्युदयक्रियः ॥ ७४ ॥
तृणमिव दिवमेवं भावयन् भावशुद्ध्या
उदयनगरदेशाधीश्वरः स्वीयऋद्ध्या ।
सुरपतिरिव सूरेः सम्मुखीनश्चचाला-
चलमपि चलभाराचालयन्नुज्ज्वलश्रीः ॥ ७५ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते कथानायकस्य उत्तराशाविजयवर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥

---

[ 69 ] 1 'मिलिनललिनाऽऽलीनाम्' मिलिनाश्च ते ललिनाश्चेति मिलितललिताश्चासामाल्यः सख्यस्तासाम् ।
[ 70 ] 2 'उडुसुमनसः' नक्षत्रदेवाः । 3 'विसृत्वरे' प्रसारिणि ।
[ 71 ] 4 'बाह्याऽऽराम.' बाह्योद्यानम् । 5 'सरध्वजमण्डलम्' वादित्रसमूहम् । 6 'मुखरीकुर्वत्' वाचालीकुर्वत् ।
[ 72 ] 7 'अमरसरिति' स्वर्गङ्गायाम् । 8 'ग्रहोत्पलकाननम्' ग्रहा एवोत्पलानि कमलानि तेषां काननं वनम् । 9 'द्विजपतिरुचेः' चन्द्रकान्त्याः ।
[ 73 ] 10 'विबुधनिवहे' पण्डितसमूहे ।
[ 74 ] 11 'अनवद्यपताकिनी' निर्दोषसैन्यम् ।

# षष्ठः सर्गः ।

श्रीः ऐं नमः श्रीपार्श्वार्हते ।

अथ चचाल विशालबले पुरो मदमलीनकटा करिणां घटा ।
घनघटेव भुवं परिसिञ्चती तरुणतारुणतान्वितबिन्दुभिः ॥ १ ॥
सकलसाध्यविधेर्वरसाधनं घनबलेऽवधिरेव गजाऽऽवली ।
पथि जनव्रजतापमपाहरत् सुकरशीकरशीतलवारिभिः ॥ २ ॥
किमिदमीयमिपात् समुपस्थिताः प्रभुसिसेविषया विषयाचलाः ।
गलदमन्दमदाम्बुविनिर्झरा न बहुधा बहुधातुविभूषिताः ॥ ३ ॥
कर-चतुष्पद-वालधि-शेफसा क्षितितलस्पृगसौ गजसंहतिः ।
सपदि दर्शनतोऽप्यभिनन्दयेन्नृपरमां परमां खलु तादृशी ॥ ४ ॥
कनक-रत्नविभूषणरश्मिभिः समभिभासितदिग्वलयाश्रितः ।
भृशमदीप्यत सा द्विपसन्ततिः सुखचिता खचिता शुभलक्षणैः ॥ ५ ॥
परिणता क्वचन क्वचिदुन्नता द्रुतगतिर्यदि वा स्खलिता हठात् ।
गजघटा क्वचिदम्बुधरोद्धुरस्तनवती नवतीव्रहयानुगा ॥ ६ ॥
प्रणमनाय कृतोन्नतपुष्करा कुथचलाचलरश्मितरङ्गिणी ।
गजघटा रुरुचे यमुनेव साऽऽहतरसा तरसा तटभेदने ॥ ७ ॥
रणितकिङ्किणिकारणपूरितैर्भ्रमदमन्दतरभ्रमरस्वरैः ।
द्रुतविलम्बितमेव जगाम सा घनमदा न मदाऽऽपतपृष्ठिका ॥ ८ ॥

---

[१] १ 'तरुणताऽरुणतान्वितबिन्दुभिः' हस्तिनां तारुण्ये स्वेदबिन्दवोऽरुणा भवन्ति ।
[२] २ 'किमिदमीयमिपात् समुपस्थिताः' गजघटाया इदमीयं यन्मिषं तस्मात् किं न समुपस्थिताः ।
[५] ३ 'सुखचिता' सुखपुष्टा । ४ 'खचिता' व्याप्ता । ३ 'शुभलक्षणैः' भद्रजातिलक्षणैः ।

[७] ५ 'कृतोन्नतपुष्करा' कृतान्युन्नतान्युद्गमानि पुष्कराणि शुण्डाया अग्रभागा यया सा 'अग्रे हस्तस्य पुष्करम्' इति हैमः [ अभि० चि० कां० ४ श्लो० २९० ]। ६ 'कुथ०' 'कुथे वर्णः परिस्तोमः' इति हैमः [ अभि० चि० कां० ३ श्लो० ३४४ ] 'कुथः स्यात् करिकम्बले' इत्यनेकार्थः । ७ '०तरङ्गिणी' नदी । ८ 'तरसा' शीघ्रम् ।

---

[1] 1 'मदमलीनकटा' मदः दानं तेन मलीनाऽऽविलाः कटा गण्डा यासां सा । 2 'घटा' बहूनां गजानां रचना घटा 'बहूनां घटना घटा' इति हैमः [ अभि० चि० कां० ४ श्लो० २८९ ] 3 'घनघटा' मेघमाला ।

[3] 4 'प्रभुसिसेविषया' प्रभुं सेवितुमिच्छा सिसेविषा तया । 2 'विषयाचलाः' देशपर्वताः ।

[4] 5 'कर-चतुष्पद-वालधि-शेफसा' करः शुण्डा 'हस्तिनाश्च करः शुण्डा हस्तः' इति हैमः [ अभि० चि० कां० ४ श्लो० २९० ], चतुष्पदाः चत्वारः पादाः, वालधिः पुच्छम् 'अथ पुच्छं वालहस्तो लाङ्गूलं दुम वालधिः' इति हैमः [अभि० चि० कां० ४ श्लो० ३१०], शेफः पुंश्चिह्नं तेन प्राप्यप्राप्यादेशत्वद्वारः 'अथ पुंश्चिह्नं मेढ्रं शेफशेफसी' इति हैमः [ अभि० चि० कां० ३ श्लो० २७४ ]। 6 'नृपरमाम्' राजलक्ष्मीम् ।

[6] 7 'परिणता' तिर्यग्दन्तप्रहारकारिणः 'तिर्यग्घाती परिणतो गजः' इति हैमः [ अभि० चि० कां० ४ श्लो० २८७ ] । 8 '०उद्धुर' उद्भुतमुन्नतम् । 9 'नवतीव्रहयानुगा' नवा नव्याः तीव्रा द्रुतगतयश्च ये हया अश्वास्तननुसरन्तीति ।

[8] 10 'रणितकिङ्किणि' रणितं शब्दितं यस्य किङ्किणी क्षुद्रघण्टिका ।

तदनु काञ्चन-रत्नमयैर्युताः प्रवरपल्ययनैस्तुरगोत्तमाः ।
अनुचरैश्चतुरैरुपरक्षिता अगणना गणनायकमभ्ययुः ॥ ९ ॥
हरिक-शोण-हलाहक-पङ्गुलैर्धवल-लोहित-नीलक-पिङ्गलैः ।
प्रचलितैर्ललितैः पुरतो यमौ सचतुरं चतुरङ्गबलं हयैः ॥ १० ॥
अतिचलाचलवालधिकेशरैर्विततपक्षतयो गरुडा इव ।
कनकरश्मिधरा हरिपुङ्गवा नृपरवेः परवेगभृतो बभुः ॥ ११ ॥
जवनता विनतातनयाऽऽश्रयादुपनता ननु तार्क्ष्यवराऽऽख्यया ।
पवनतोऽप्यतिशायितयाऽचले हरिबलेऽरिबले श्लथताकरे ॥ १२ ॥
हरिपरिक्रमणे जनतामनः सजति चारुपदेषु रजोमिषात् ।
तदिव धूनयितुं चलताऽभवद्धरिपदेऽरिपदे विपदेधके ॥ १३ ॥
विदधतः किमु मण्डलमाश्रिताँश्चरणरेणुमिषात् परिमण्डलम् ।
उपदिशन्ति मनोऽणुकणान् स्म ते हयवरा यवराजिरसोत्कटाः ॥ १४ ॥
करिपरिश्रमसम्भ्रमकारिणोऽन्तिकमुपेत्य निवृत्त्य सुदूरगाः ।
विदधिरे तुरगा उरगारिवत् सनिगमे निगमे गतिविभ्रमान् ॥ १५ ॥
तुरगचक्रमवक्रतया क्वचित् क्वचन वक्रपरिक्रमविक्रमम् ।
विविधवेल्लितवल्गितकौशलादपि कलापिकलामतनोत् पथि ॥ १६ ॥
प्रतिपदं कनकोत्किरणैर्नृपः सुरपतिप्रतिमोऽभिचलन् गुरोः ।
सुभगपात्रजनं पथि नर्त्तयन् मुदमवादमवाप सहास्तिकैः ॥ १७ ॥

---

[ १० ] १ 'हरिक-शोण-हलाहक-पङ्गुलैः' हरिकः पीतहरितच्छायः 'हरिकः पीतहरितच्छायः स एव हालाकः' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३०८ ], शोणः कोकनदच्छविः, हलाहकश्चित्रितो हयः, पङ्गुलैः सितकाचाभैः । २ 'धवल-लोहित-नीलक पिङ्गलैः' धवलः श्वेतः, कर्कलोहितो कियाहः, नीलकः आनीलः पिङ्गलैः पीतरक्तैः । ३ 'सचतुरम्' हयचालकुशलैः सह ।

[ १४ ] ४ 'हयवरा मण्डलं विदधतः किमु मनोऽणुकणान् परिमण्डलं परिमाणं वर्तुलमुपदिशन्ति स्म' इत्युत्प्रेक्षते ।

[ १५ ] ५ 'सनिगमे' वणिक्सङ्कीर्णे । ६ 'निगमे' मार्गे ।

[ १६ ] ७ 'कलापिकलाम्' मयूरचङ्गतिविशेषम् ।

[ १७ ] ८ 'अवादम्' प्रतिपक्षरहितं-अतुल्यं यथा स्यात् तथा । ९ 'सहास्तिकैः' हस्तिसमूहैः, आस्तिकैः श्राद्धैः सह वा ।

---

[ 9 ] 1 'प्रवरपल्ययनैः' श्रेष्ठपर्याणैः 'पर्याणं तु पल्ययनम्' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३१८. ] ।

[ 11 ] 2 'अतिचलाचलवालधिकेशरैः' अतिचपलपोलादि 'गोलाङ्गूलयमेव स्यात् पाण्डुकेशरवालधिः' इति हैम. [ अभि० चिं० कां० ४ श्लो० ३०५ ] । 3 'विततपक्षतय.' वितता विस्तृता पक्षतयो पक्षमूलानि येषां ते । 4 'हरिपुङ्गवाः' अश्वश्रेष्ठाः ।

[ 12 ] 5 'विनतातनयाऽऽश्रयाद्' विनतातनयः गरुडाग्रजस्तस्याश्रयात् । 'विनतासूनुररुणो गरुडाग्रजः' इति हैम-[ अभि० चिं० कां० २ श्लो० ११ ] 6 'तार्क्ष्यवराऽऽख्यया' श्रेष्ठगरुडनाम्या । 7 'हरिबले' अश्वसैन्ये ।

[ 13 ] 8 'हरिपरिक्रमणे' अश्वगमने । 9 'सजति' 'षञ सङ्गे' इति धातोः 'दशसञ्जः शवि' ४-२-४९ । इति सिद्धहैमीयसूत्रेण वर्तमानकाले रूपम् । 10 'विपदेधके' कष्टवर्धके ।

[ 15 ] 11 'उरगारिवत्' गरुडवत् 'सर्पारातिर्वज्रजिद् वज्रतुण्ड.' इति हैमः [ अभि० चिं० का० २ श्लो० १४४ ] ।

[ 16 ] 12 'विविधवेल्लितवल्गितकौशलाद्' विविधानि वेल्लितानि लोठनानि वल्गितानि प्लुतानि च तेषां कौशलान्नैपुण्यात् । 'अपावृत्तपरावृत्तलोठनानि तु वेल्लिते'–'धोरितं वल्गितं प्लुतोत्तेरितानि च' इति हैमः [ अभि० चिं० कां० ४ श्लो० ३११ ] ।

[ 17 ] 13 'सुरपतिप्रतिमः' इन्द्रतुल्यः । 14 'सुभगपात्रजनम्' सुभगाः शोभनाः पात्रजना नाट्येऽधिकृतपुरुषाः ।

समभिनम्य रयात् परया श्रिया क्षितिपतिर्जिनशासननायकम् ।
पुरवरेऽस्य निवेशमकारयत् सविनयं विनयन् स्वदरिद्रताम् ॥ १८ ॥
समभिषेकविधिं निरमापयद् जिनवरे ननु विघ्नहराऽऽह्वये ।
सकलसङ्घसमक्षमयं कृपारसदृशा सदृशा जनरञ्जनः ॥ १९ ॥
मुनिवरानिव रागजयोर्जितान् बुधपदे विनिवेश्य कृतार्थयन् ।
सुकृतपीवरजीववरास्तिकं द्रुतमसन्तमसं भुवनेऽकरोत् ॥ २० ॥
स्मरवशीकरणाय जगद्भुवामवनिजातवनीपरिजीवनम् ।
मधुपगीतयशा मधुरामयौ प्रथमतोऽथ मतो रसिकाङ्गिनाम् ॥ २१ ॥
बहुदिनान्युदगम्बुजलोचना विहरतः कृशकान्तिरहर्मणिः ।
हृतवसुर्ननु दक्षिणया तदुत्सुकमनाः कमनादिव निर्ययौ ॥ २२ ॥
हिमवतः परिशीलनयोत्तरा विरहतापमिवापचिकीरभूत् ।
अहिमरश्मिरसौ नवपद्मिनीरतिकरोऽतिकरोदयदुस्सहः ॥ २३ ॥
गलदमन्दपरागपिशङ्गितोऽपि नवकामुकवन्मधुपव्रजः ।
विटपरागितयेव तमस्समः कमलिनीमलिनीकरणं बभौ ॥ २४ ॥
जल-नभः-स्थलचारिविपुष्मतामनुययुर्मिथुनानि परस्परम् ।
कलरवैर्यतिनामपि मानसे स्मरमयं रमयन्ति रसं भृशम् ॥ २५ ॥
विरहिणां सहकारमहीरुहा किमपहृत्य कुलान् मुकुलादिभिः ।
प्रियतमाङ्कजुषां सुहृशां पिकध्वनिभृता निभृता रतिराद्धे ॥ २६ ॥
हिमवतः पवनो मृदुराययौ मनसि सञ्जनयन् मदमङ्गिनाम् ।
कमलिनीवनसौरभसम्भृतः कमलकोमलकोशविघट्टनात् ॥ २७ ॥

---

[ १८ ] १ 'विनयन्' अपनयन् स्फेटयन् । २ 'स्वदरिद्रताम्' सत्त्वानां दरिद्रभावम् ।
[ १९ ] ३ 'कृपारसदृशा' कृपारसदृष्ट्या । ४ 'सदृशा' तुल्यया । ५ 'जनरञ्जनः' लोकसन्तोषदः ।
[ २२ ] ६ 'हृतवसुः दक्षिणया' दक्षिणया स्त्रिया हृतवसुः सन् ।

---

[ 20 ] 1 'बुधपदे' विबुधपदव्याम् । 2 'कृतार्थयन्' उपकारयन् । 3 'असन्तमसम्' अनन्धकारमर्याद, अपापम् ।

[ 21 ] 4 'स्मरवशीकरणाय' स्मरः कामदेवस्तं वशीकर्तुम् । 5 '°वनीपरिजीवनम्' वनी भिक्षाधनमेव परिजीवनं जीविकाम् । 6 'मधुप°' मधुपो भ्रमरः ।

[ 22 ] 7 'उदगम्बुजलोचना' उदग् उदग्दीति उदकमलाक्षी । 8 'अहर्मणिः' सूर्यः । 9 'कमनाद्' पण्डितात् कामाद् वा ।

[ 23 ] 10 'अपचिकीः' दूरीकर्त्री । 11 'अहिमरश्मिः' सूर्यः । 12 'अतिकरोदयदुस्सहः' अतिकराः बहुकिरणास्तेषामुदयेन दुस्सहोऽसह्यः ।

[ 24 ] 13 '°परागपिशङ्गितः' परागः पौष्पं रजस्तेन पिशङ्गितः पीतवर्णः कृतः । 14 'नवकामुकवत्' नवः नर्तनभागी कामुकोऽनुकल्पेति नवकामुकत्वेन समानः । 15 'मधुपव्रजः' भ्रमरसमूहः ।
16 'विटपरागितया' विटपाः वृक्षास्तेषु रागितया । 'विटपः पुनः पल्लवेऽपि च वृक्षेषु' इति हैमः [ अने॰ सं॰ कां॰ ३ श्लो॰ ४७५ ]

[ 25 ] 17 'जल-नभः-स्थलचारिविपुष्मतां' जलचर-खेचर-स्थलचरप्राणिनाम् । 18 'मिथुनानि' द्वन्द्वानि 'स्त्रीपुंसौ द्वन्द्वं मिथुनम् च तत्' इति हैमः [ अभि॰ चि॰ कां॰ ३ श्लो॰ २०२ ] । 19 'स्मरमयम्' कामयुक्तम् ।

[ 26 ] 20 'सहकारमहीरुहाः' आम्रवृक्षाः । 21 'कुलान्' सजातीयप्राणिनां वृन्दान् । 22 'मुकुलादिभिः' कुड्मलादिभिः । 23 'पिक°' पिकः कोकिलः । 24 'निभृता' विनीता ।

[ 27 ] 25 'सञ्जनयन्' उत्पादयन् । 26 'मदम्' आनन्दसंमोहयोः सङ्गमम् । 27 '°कोश°' कोशः कुड्मलः कोषेय ।

तरुवनान्निपतत्कुसुमैः समं स्मरशरैरिव मूर्त्तिधरैः क्षता ।
सविनयं प्रियमन्वनयत् स्वयमनवमा नवमानवती वधूः ॥ २८ ॥
अनुययौ सुरभिं सुरभिश्रियं विकसितां समवेक्ष्य मदोद्धुरः ।
परवृषं विनुनुत्सुरिव क्रुधा स्थिरतरं रतरञ्जनया हि गौः ॥ २९ ॥
अनुनयन् वचनैः शुकसारिकासमुदयो हृदयेश्वरपाठितः ।
विविधसन्धिविधानविचक्षणः प्रियतमाऽऽयतमानमपाकरोत् ॥ ३० ॥
किशलयैर्वलयैः सरसीरुहां कनकजैर्वलयैश्च न तद्भुवाम् ।
कुवलयैर्मलयैकभुवां रसैर्न कमनः कमनम्रमदं व्यधात् ॥ ३१ ॥
प्रथमतीर्थकराभिनिनंसया स विजहार गुरुर्गुरुगौरवः ।
प(व)डगनाद्युपवागडमण्डलं जनपदे न पदे विपदेनसाम् ॥ ३२ ॥
समभिवन्द्य जिनप्रभुमादिमं प्रतिपदं विहरन् स जनाग्रहात् ।
अपनयन् कुनयाननयानिव निहतमोहतमो जगदातनोत् ॥ ३३ ॥
गणगुरूननुनीय महोत्सवैर्नगरशोभनया भरणांशुकैः ।
समनमद् परवागडभूपतिरुपवने पवनेन चलाचले ॥ ३४ ॥
तमभिबोध्यगुरुर्वचनामृतैः कुशलकीर्त्तितकीर्त्तिरथाचलत् ।
उदयपूर्वपुरे क्रममोदिताऽनुगमना गमनाय शिवाऽऽगमः ॥ ३५ ॥
परिवसन्निह मासचतुष्टयीं जनगणान् जिनधर्ममबूबुधत् ।
नरपतेरपि रागिणि मानसेऽविशदयं सदयं श्रुतमुद्गिरन् ॥ ३६ ॥
जनपदे विचरन् शरदत्यये प्रतिपुरं किल सङ्घपुरन्दरः ।
जिनमतोन्नयनं क्रियया व्यधात् प्रसलमांसलमाङ्गलिकार्चितः ॥ ३७ ॥

[ २८ ] १ 'अनवमा' प्रधाना श्रेष्ठा । 'वसन्तवर्णाधिक्यमिदम्' ।
[ २९ ] २ 'सुरभिम्' धेनुम् । ३ 'हि' निश्चितम्, गौः अनुययौ ।
[ ३२ ] ४ 'पदे' स्थानके । ५ 'विपदेनसाम्' आपत्पापानाम् ।
[ ३३ ] ६ 'निहतमोहतमः' निहतं निराकृतं मोहतमो यत्र तत् ।
[ ३५ ] ७ 'क्रममोदिताऽनुगमनाः' क्रमेण विहारपरिपाट्या, मोदितमनुगानां श्राद्धादीनां मनो येन सः ।
[ ३६ ] ८ 'नरपतेः मानसे' नृपमनसि । ९ 'अविशद्' प्रविवेश ।
[ ३७ ] १० 'प्रसलमांसलमाङ्गलिकार्चितः' प्रसले हेमन्तर्तौ मांसलानि पुष्टानि यानि माङ्गलिकानि तैरार्चितः पूजित इति ।

[ 28 ] 1 'स्मरशरैः' कामदेवस्य बाणैः । 2 'अन्वनयत्' रहसि प्रेरीत् ।
[ 29 ] 3 'सुरभिश्रियम्' वसन्तशोभाम् । 'वसन्ते पुष्पः सुरभिः' इति हैम० [ अभि० चि० कां० २ श्लो० ७० ] । 4 'मदोद्धुरः' मदेन रेतसोद्धुर उत्कटः । 5 'परवृषम्' शत्रुवृषभम् । 6 'विनुनुत्सुः' दुःखार्थं शस्त्राणि प्रेरयितुमिच्छुः 'णुदंत् प्रेरणे' इति धातोः सन्नन्तात् उः प्रत्ययः । 7 'रतरञ्जनया' रतं रतिस्तस्या रञ्जनया । 8 'गौः' वृषभः ।
[ 30 ] 9 'अनुनयन्' वदन् । 10 'समुदयः' समूहः । 11 'विविधसन्धिविधानविचक्षणः' विविधप्रकारेण सन्देशहारकत्वादेर्वचनरचनाकुशलः । 12 'प्रियतमाऽऽयतमानम्' भार्यामानविस्तारम् । 13 'अपाकरोत्' दूरीकृतम् ।
[ 31 ] 14 'वलयैः' कङ्कणैः । 15 'सरसीरुहाम्' कमलानाम् । 16 'कमनः' कामदेवः ।
[ 32 ] 17 'अभिनिनंसया' अभिनेतुमिच्छया । 18 उपवागडमण्डलम् वागडप्रदेशं तत्समीपम् ।
[ 34 ] 19 'अनुनीय' प्रणतिं कृत्वा ।
[ 35 ] 20 'शिवाऽऽगमः' शिवः कल्याणकारी, आगम आगमनं यस्य सः ।
[ 37 ] 21 'शरदत्यये' शरत्कालव्यतीते । 22 'सङ्घपुरन्दरः' चतुर्विधसङ्घेषु पुरन्दर इन्द्रः इव श्रेष्ठः । 23 'जिनमतोन्नयनम्' जैनधर्मस्योन्नयनमुन्नतिम् ।

जिनपतिप्रतिमाभिपवद्वयोत्सवसमुद्यतभक्तजनाऽऽदरैः ।
द्रुतविलम्बितया व्यहरद् भुवि गजगतिर्जगति प्रसरद्यशाः ॥ ३८ ॥
बहुविधाऽर्हतपूजनवन्दनाद्युचितकर्मरतैर्विरतैर्भवात् ।
समनुनीय गुरुं सदुपासकैर्निजगृहे जगृहे जनुपः फलम् ॥ ३९ ॥
गुरुसमागमवित्तविसर्जनैर्विदलिता कलितापकलाऽखिला ।
उपनता जनता सुतपोभरैः सुकृतता कृततात्त्विकभावनैः ॥ ४० ॥
बहुलवाङ्मयशोधनकर्मणाऽजनि जनेऽस्य यशोधनमद्भुतम् ।
प्रसृतमुग्रमहोदयया विभोरसुमतां सुमताश्रितधीमतः ॥ ४१ ॥
नरपतिप्रतिबोधमजीजनत् समयदेशनया स नयाद् द्विधा ।
प्रभवति प्रभुवाक्यसुधारसेऽपरमते रमते स्म न कश्चन ॥ ४२ ॥
अपहृता प्रभुणा रुचिरैन्दवी प्रतिहतं च जनार्दनशासनम् ।
नयविशेषयुजा भृशमुज्ज्वलं भुवि हितं विहितं मतमार्हतम् ॥ ४३ ॥
नरकपालिकपालिजनादृता दृढनृशंसतया पिशिताशिता ।
समुपदेशनयैव विनाशिता विहरता हरतापसदेशिता ॥ ४४ ॥
भगवतः क्रमपद्मनिवेशनाद् वसुमती शुशुभे घनसौरभा ।
नवनवोत्सवसम्भवतः श्रिता सकमला कमलाकरलीलया ॥ ४५ ॥
इति कृशानुभृशानुगतां दिशं समुपदिश्य विमोहवलस्थितिम् ।
शिथिलयन्नथ किञ्चन दुर्णयप्रमपरामपरामगमद् गुरुः ॥ ४६ ॥
पथि समैक्षत दक्षतयाऽक्षतः "क्षितिपतिर्यतिनां जलजाकरम् ।
प्रगुणिताद्भुतरागमिवोन्मिषत् सुजलजं जलजन्तुकुलाकुलम् ॥ ४७ ॥
यवनराजभयेन यथा सुरा विपयसुग्रमहीधरमाश्रयत् ।
नवतटाकमिषाज्जलधेः स्थितिर्भुवि तथाऽवितथा सकला बभौ ॥ ४८ ॥

---

[ ३८ ] १ 'जिनपतिप्रतिमाऽभिपवद्वय°' जिनप्रतिष्ठाद्वयम् ।

[ ४३ ] २ 'रुचिरैन्दवी' रुचिः कापालिकश्रद्धा, इन्दुसम्मत-प्ररूपकः सोमलस्तत्सम्बन्धिनीति । ३ 'जनार्दनशासनम्' लोकपीडोपदेशः कृष्णशासनं वा ।

[ ४४ ] ४ 'पिशिताशिता' मांसभोजनम् । ५ हरतापस-देशिता' हरस्येश्वरस्य मते ये तापसास्तैः कथिता ।

[ ४६ ] ६ 'कृशानुभृशानुगतां दिशम्' आग्नेयीं दिशम् ।

[ ४८ ] ७ 'अवितथा' सत्या ।

---

[ 38 ] 1 'गजगतिः' गज इव प्रशस्ता गतिर्यस्य सः ।

[ 39 ] 2 'जगृहे' आप । 3 'जनुपः' जन्मनः ।

[ 40 ] 4 '°विसर्जनैः' दानैः । 5 'विदलिता' विनाशिता । 6 'कलितापकला' कलिः क्लेशः कलियुगो वा तस्य तापः सन्तापस्य कला ।

[ 41 ] 7 'बहुलवाङ्मयशोधनकर्मणा' बहुलाः बहवो वाङ्मयाः सिद्धान्तग्रन्थास्तेषां शोधनं सम्पादनं तस्य कर्मणा कार्येन । 8 'उग्रमहोदयया' उग्रस्तीव्रो यो महोदयो महोन्नतिस्तया ।

[ 42 ] 9 'अजीजनत्' 'जनैचि प्रादुर्भावे' इति धातोः णिगन्ते अद्यतन्यां 'उपान्त्यस्यासमानलोपि°' ४-२-३५-इति सिद्धहैमीय-सूत्रेण रूपं सिध्यति । 10 'अपरमते' शैव वैष्णवाद्यन्याम्नाये ।

[ 45 ] 11 'क्रमपद्मनिवेशनात्' चरणकमलन्यासात् । 12 'वसुमती' पृथ्वी । 13 'घनसौरभा' गाढगन्धवती 'गन्धवती पृथ्वी' इति लक्षणात् । 14 'बहुसितच्छदपक्षिसुखाश्रिता' इत्यपि मूल-प्रतौ पाठान्तरम् । '°सितच्छदपक्षि°' सितच्छदाः हंसाः । 15 'सकमला' कमला लक्ष्मीस्तया सहिता । 16 'कमलाऽऽकरली-लया' कमलसरःक्रीडया ।

[ 47 ] 17 'क्षितिपतिर्यतिनां' यतिनां साधूनां क्षितिपतिर्नृपतिः श्रीविजयप्रभसूरिः । 18 'जलजाऽऽकरम्' सरोवरम् । 19 'जल-जन्तुकुलाऽऽकुलम्' जलजन्तूनां कुलं समूहस्तेनाऽऽकुलं व्याप्तम् ।

निशि सतारनभःप्रतिबिम्बना कृपणवद् गणयांचकृवान् मणीन् ।
जलचलत्कुमुदच्छलसम्भवद्विमकरो मकरोऽग्रसरोऽम्बुधिः ॥ ४९ ॥
तरदनेकसितच्छदपिच्छलच्छदमिषोच्छलदुज्ज्वलचामरः ।
स्फुटरथाङ्गकुलाऽऽतपवारणः सरसभारसभाधिपतिर्व्यभात् ॥ ५० ॥
अनुतटं जलकेलिचिकीर्षया मिलितचारुविलासवतीजने ।
सपदि पाद्यविधिं विलुलत्कुशैर्नवसरोऽवसरोचितमादधे ॥ ५१ ॥
अभिपतत्तटिनीचलवीचिभिर्जनितफेनमिषाद्धसिताम्बुधिः ।
मणिगणैर्विरराज जलाशयः सललनाललनात् पतयालुभिः ॥ ५२ ॥
विततपाग्रतयैव पयोधरैरनुदिशं निभृतः समुदित्वरैः ।
जलनिधेः प्रतिकर्तुमिवोल्लसद्रसवयाः सवयास्सजलाशयैः ॥ ५३ ॥
चलतरङ्गतुरङ्गमशालिनीरनुमयन्नृपवद् बहुवाहिनीः ।
स रुरुधे क्षितिविल्लयनोद्यतः शिखरशेखरसेतुमहीभृता ॥ ५४ ॥
वहनमुक्तिभृतलोहितकेतनं दधदयं हृदयं समरञ्जयत् ।
जयवतः क्षितिपस्य निपश्यतः प्रकृतिभिः कृतिभिर्विहितस्तुतेः ॥ ५५ ॥
जलनिमज्जनसज्जनकामिनीनयननिर्जितशालिपयोरुहः ।
सुषमयास्यसुनंदिसरोम्बरे सुरपतेरपतेज इवोदयौ ॥ ५६ ॥
उदयनगरलक्ष्या रम्यमादर्शरूपं पुरवरमदसीये सन्निविष्टं प्रतीरे ।
तपगणगुरुरागात् तत्र रागाविभागाद् घनतरविजयश्रीभूपरूपैरपीज्यः ॥ ५७ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
कथानायकस्य ईशानदिग्विजयवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥



[ ५३ ] १ 'उल्लसद्रसवयाः' उल्लसन्तः रसवयसो जलपक्षिणो यत्र सः । २ 'सवयाः' जलनिधेः मित्रैः सहितः ।

[ ५७ ] ३ '°विजयश्रीः' पत्तनाद्चलितानामीशानदिग्विजयः । मरुदेशापेक्षयाऽऽग्नेयीविजयः ।

[ 49 ] 1 'मकर.' निधिविशेषः । 2 'अग्रसरः' अग्रः ।

[ 50 ] 3 "सितच्छद" सितच्छदा. हंसाः । 4 'स्फुटरथाङ्गकुलाऽऽतपवारणः' स्फुटा ये रथाङ्गाश्चक्रवाकपक्षिणो तेषां कुलं समूहः स एवाऽऽतपवारणं छत्रं यस्य सः । 5 'व्यभात्' विशेषेणाशोभिष्ट ।

[ 51 ] 6 'जलकेलिचिकीर्षया' जलक्रीडां कर्तुमिच्छया । 7 'पाद्यविधिम्' पादार्थं वारि पाद्यं तस्य विधिः 'पादार्थं पाद्यम्' इति हैमः [ अभि० चिं० कां० ३ श्लो० ३६४ ] ।

[ 52 ] 8 'तटिनीचलवीचिभिः' तटिनी नदी तस्याः चलाः चपला वीचयः कल्लोलास्तैः । 9 'पतयालुभिः' पातुकैः ।

[ 54 ] 10 "°तुरङ्गम°" तुरङ्गमा अश्वाः । 11 'वाहिनीः' सेनाः ।
[ 55 ] 12 'प्रकृतिभिः' प्रजाभिः । 13 'कृतिभिः' विद्वद्भिः ।

## सप्तमः सर्गः ।

श्रीः ऐँ नमः श्रीपार्श्वभगवतेऽर्हते ।

जिनेशतीर्थे समभूदमत्सरो निपीय सूरेर्वचनानि भूपतिः ।
जिनेशतीर्थे समभूदमत्सरोऽप्यलंचिकीर्षुः प्रमनाः स संवरे ॥ १ ॥
समांशमास्थाय ततः क्षमाभृतां प्रभुश्चचालाचलनिश्चयाऽऽशयः ।
स मांसमास्थाय ततः क्षमाभृतां नृपोऽपि तस्यानुमतेन्यवर्त्तत ॥ २ ॥
अवेत्य सासच्छदिकं पुरं पुरो व्यधाच्चतुर्मासकमार्हतार्चितः ।
अवेत्य सासच्छदिकं पुरं पुरोर्जितद्विपेन्द्राननयक्षराडिव ॥ ३ ॥
स शासनेनोदयितोऽपरागिणां महार्हतां भव्यजनानिति क्षितौ ।
शशास "नेनोदयितोऽपरागिणां भवेत् प्रकाशस्तमसामिव क्वचित् ॥ ४ ॥
परैः सतीर्थ्यैः सहसाऽऽहवार्थिभिर्जनैः समं सद्व्यवहारगीर्गुरुः ।
परैः स तीर्थ्यैः सहसाऽऽहवार्थिभिरबाध्यबोधोऽभिजगाम कामितम् ॥ ५ ॥
शुभप्रवृत्तेः शमरोचितस्थितेर्महात्मनः प्रेरयिता यताऽऽशयः ।
शुभप्रवृत्तेः समरोचितस्थितेर्गजस्य सादीव बभौ जयश्रिया ॥ ६ ॥

---

[ १ ] १ 'जिनेशतीर्थे' अर्हद्धर्मे । २ 'समभूदमत्सरः' अमत्सरोऽद्विष्टोऽभूत् । किं० भूपतिः । ३ 'जिनेशतीर्थे' जिनः कृष्ण ईशो महादेवस्तयोस्तीर्थे । ४ 'समभूदमत्सरः' समा चासौ भूः समभूस्तस्यां दमो बन्धो दण्डः, समभूदम इवाचरतीति क्विपि समभूदमति शतृप्रत्यये तादृशं सरस्तटाकस्तम् । "दमः स्यात् कर्दमे दण्डे दमने दमथेऽपि च" इति हैमः [ अने० सं० कां० २ श्लो० ३२८ ] ५ 'अलंचिकीर्षुः' अलङ्कारं कर्तुमिच्छुः कृष्णेश्वरप्रासादयोः [ विष्णु-शिवमन्दिरयोः ] ६ 'प्रमनाः' उत्कण्ठितः, उत्सुको वा ७ 'संवरे' पाल्याम् ॥

[ २ ] ८ 'समांशमास्थाय' मासमात्रं तत्र स्थित्वा, मासे पर्यांशको भवेदिति दोषः, तुल्यमंशमैश्वर्यस्यं मत्वा वा । ९ 'सः' भूपतिः । १० 'मांसमास्थाय' मांसमाश्रित्य मांसाशनम् । ११ 'क्षमाभृतां नृपः' राज्ञां नृपो राजराजः । १२ 'तस्यानुमतेः' तस्य गुरोरनुमत्याऽऽज्ञया १३ 'न्यवर्त्तत' निवृत्तः कतिचित् प्रयाणान्यनुगत्य पश्चाद् वलितः मांसाशनं प्रत्याचख्यौ वा ।

[ ३ ] १४ 'अवेत्य' प्राप्य । १५ 'सासच्छदिकम्' 'सादडी'ति नाम्ना पुरं नगरम् । १६ 'पुरः' अग्रे परापूर्वं वा । १७ 'व्यधात्' व्यधत्त । १८ 'सासच्छदिकम्' सप्तवर्णसम्बन्धिनं गुग्गुलं प्राप्य । १९ 'पुरोर्जितद्विपेन्द्राननयक्षराडिव' पुरं शरीरं तेनोर्जितो बलवान् द्विपेन्द्राननो गणपतिर्यक्षः, यक्षो [ मेघदूतस्य-नायकः ] यथा धातुर्मासकं व्यधत्त तथैव । "पुरं शरीरे नगरे गृहपाटलिपुत्रयोः । पुरस्तु गुग्गुलौ पुर्ङ् कृमौ दैत्येक्षुभेदयोः". इति हैमः [ अने० सं० कां० २ श्लो० ४५०-४५१ ] ॥

[ ४ ] २० 'शासनेन' आज्ञया । २१ 'उदयितः' उदयो जातोऽस्योदयितः । २२ 'अपरागिणाम्' रागरहितानाम् । २३ महार्हतां भव्यजनान् इति शशास । २४ 'इनस्य' स्वामिनः सूर्यस्य वा । 'उदयितोऽपरागिणाम्' या उदयिता तत्रोपद्रवकारिणां प्रकाशो न भवेद् । २५ 'तमसाम्' तिमिराणां राहूणामिव ॥

[ ५ ] २६ 'परैः' उत्कृष्टैः । २७ 'सतीर्थ्यैः' एकब्रह्मव्रताऽऽचारैः । २८ 'सहसाऽऽहवार्थिभिः' बलेनाऽऽकारणार्थिभिः जनैः समम् । २९ 'परैः तीर्थ्यैः' अन्यैस्तीर्थ्यैस्तीर्थान्तरीयैः । ३० 'सहसाऽऽहवार्थिभिः' सहसा शीघ्रं, आहवार्थिभिः रणोन्मुखैः यज्ञार्थिभिर्वा । "आहवस्तु समत्कौ स्याद्विदेशाऽऽह्वानयोरपि" इत्यनेकार्थः । ३१ 'अबाध्यबोधः' अबाध्यो बोधो यस्य सः । ३२ 'अभिजगाम कामितम्' कामितं स्थानमभिजगाम ॥

[ ६ ] ३३ 'शुभप्रवृत्तेः शमरोचितस्थितेर्महात्मनः प्रेरयिता' महात्मनः साधोः प्रेरयिता शुभप्रवृत्तेः 'शमरोचितस्थितेः' शमरोचिता स्थितिर्यस्य । ३४ 'यताऽऽशयः' यते नियमे, आशयो यस्य सः । ३५ 'शुभप्रवृत्तेः' शुभा प्रवृत्तिर्मदो यस्य । ३६ 'समरोचितस्थितेः' समरे सङ्ग्रामे उचिता स्थितिर्यस्य । ३७ 'सादी' महामात्रः ॥

स दक्षजातिप्रणयः कलाभृतां नृणामभीष्टः सुमनो मुदेऽभवत् ।
सदक्षजातिप्रणयः कलाभृतां तनुं वहन्निन्दुरिवोज्ज्वलांशुपः ॥ ७ ॥
वियोधहेतुर्जडजन्मशालिनां गवां प्रसारैः सरसां श्रियं दधौ ।
वियोधहेतुर्जलजन्मशालिनां महायनानामिव भानुमान् विभुः ॥ ८ ॥
सदा रसं सज्जनताः स्वसादरं समुन्नयन् यो जगति प्रणीतवान् ।
सदारसंसज्जनतास्वसादरं प्रतिस्थलं तं स्वलगा ववन्दिरे ॥ ९ ॥
समीहितार्थप्रथनैः स दैवतद्रुमायते स्माङ्गभृतां धियां निधिः ।
शमी हितार्थप्रथनैः सदैव तन्न कस्य लाभाय जनेऽस्य सन्निधिः ॥ १० ॥
क्रमात् समासाद्य मरोः रसामयं पुपाव भावोज्ज्वलमेदिनीपुरम् ।
क्रमात् समाऽऽशायमरोरसामयं स देशसङ्घाऽऽगमभक्तिभावनैः ॥ ११ ॥
द्वनव्यवायोपगतेर्विनायकः पुरे स नारायणनाम्नि तस्थिवान् ।
द्वनव्यवायोऽपगतेर्विना यकश्चकोऽपि निस्तारयिता कलौ युगे ॥ १२ ॥
सुरेश्वराऽऽशाविजयाऽऽहिताऽऽशयः परं चतुर्मासककर्मणस्ततः ।
सुरेश्वराशाविजया हि तांसयन्नयं स सङ्ग्रामपुरं समीयिवान् ॥ १३ ॥
इतोऽपराऽऽशापवनाद् दिवोदितं तमो विमोहोद्भवजं स चिन्तयन् ।
इतोऽपराऽऽशापवनाद् "दिवो दितं" स्वतेजसा मालपुरं गुरुस्ततः ॥ १४ ॥

---

[ ७ ] १ 'सः' गुरुः। २ 'दक्षजातिप्रणयः' दक्षजातौ प्रणयः स्नेहो यस्य सः। ३ 'कलाभृताम्' कला विज्ञानं तद्वता-मभीष्टः। ४ 'सदक्षजातिप्रणयः' सदृशे सद्व्यवहारे जाता जन्मना प्रणयो यात्रा यस्य सः, यस्य सदृशे क्षिपे प्रणयमति-क्रान्तोऽतिप्रणयः न दाती। दक्षजा मार्गश्री तया सह यः स सदक्षजः तिथ्यन्त्र प्रणयमतिक्रान्तोऽतिप्रणयो न रागानिम्यधैः "दक्षो रुपन्यावयवे व्यवहारे विनीतवे" इति हैमः [अने० सं० का० श्लो० ५११]। "प्रणयः प्रेमयाञ्चयो:, विश्रम्भे प्रसरे ऽपि" इति हैमः [अने० सं० का० ३ श्लो० ५२२] ५ 'कलाभृताम्' कलिनाश्रीजैनानामृताम्। "कलनं वीर्यरेतसोः, अकलनमपुरत्याने कला स्याद् तिथ्यरयोः। कलने मूलोद्धृतौ योस्त्वांशे विमोति" इति हैमः [अने० सं० का० २ श्लो० ४८८]। ६ 'उज्ज्वलांशुपः' उज्ज्वलान् अंशून् पातीति ॥

[ ८ ] ७ 'जडजन्मशालिनाम्' जडजन्मानिवो यत्रे पदानाम्।

[ ९ ] ८ "सदा रसं सज्जनताः स्वसादरं समुन्नयन् यः" यः सदा रसं समुन्नयन् सज्जनताः सज्जनगणमुदात् स्वसाद् स्वाधीनान्, आत्मसात् प्रणीतवान्। ९ 'सदारसंसज्जनतास्व-सादराम्' सदीनसमासोदेषु सआदराम्। १० 'तम्' गुरुम् ॥

[ १० ] ११ 'समीहितार्थप्रथनैः' इष्टार्थदानैः। १२ 'स' गुरुः। १३ 'द्रुमायते स्म' कल्पवृक्षायते स्म। १४ 'शमी' शमनः। १५ 'हितार्थप्रथनैः' हितप्रयोजनविस्तारैः ॥

[ ११ ] १६ 'क्रमात्' क्रमाभ्यां पादाभ्यामवतीति क्रमात् यद्वा क्रमः परम्परागमस्तेनावतीति क्रमात्। १७ 'मरोः रसा-मयम्' मरोः भूमीम्। १८ 'समाऽऽशायम्' सर्वदिग्भागे आयम्। १९ 'अरोरसामयम्' रोरा दरिद्राः सामायाः सरो-गास्तैः रहितम् ॥

[ १२ ] २० 'द्वनव्यवायोपगतेः' द्वना महा व्यवायानां विभावनापुरगानिम्नस्याः देवोः। २१ 'विनायकः' गणेशः। २२ 'द्वनव्यवायः' द्वनः व्यवायो मैथुनं येन सः। २३ 'अपगते.' नाशयते:। २४ 'यकश्चकोऽपि निस्तारयिता' विनायकोऽपि निस्तारयिता ॥

[ १३ ] २५ 'सुरेश्वराऽऽशाविजयाऽऽहिताऽऽशयः' पूर्वदिग्विजये स्थापिताभावः। २६ 'सुरेश्वराऽऽशाविजया' सुराणामीश्वराऽऽशा यनवती पूज्या तस्या विभा पृथग्मावचया। २७ 'हि' निश्चितम्। २८ 'तांसयन्' होरयन्। २९ 'अयम्' पारम् ॥

[ १४ ] ३० 'इतोऽपराऽऽशापवनात्' इतः अपरस्य पराशस्य वा आशापवनात् यस्मो वायुस्मात्। ३१ 'दिवोदितम्' दिवा दिने उदितम्। ३२ 'तमः' पापमज्ञानं वा। ३३ 'इतः' प्रसः। ३४ 'अपराशापवनात्' अपराशा पश्चिमा तत्पवनात्। ३५ 'दिवः' स्वर्गस्य। ३६ 'दितम्' खण्डितम्। ३७ 'स्वतेजसा' स्वप्रतापेन ॥

असौ गतं नाटयिता सितच्छदव्रजस्य चक्रे वचनैः क्षमातलम् ।
असौगतं नाटयिता सितच्छदप्रभुस्तथोत्सूत्रपथे मनागपि ॥ १५ ॥
स मानवाधीश्वरसेवितक्रमाम्बुजश्चतुर्मासककर्म तेनिवान् ।
समा नवा "धीः स्वरसेऽवितक्रमाऽङ्गिनां ततोऽभूद् विषयेऽर्हतां मते ॥ १६ ॥
विहारशोभाऽतिशयात् सभा सुरप्रभोर्यदीया बहु पिप्रिये मुहुः ।
विहारशोभाऽतिशयात् सभासुरः क्रमात् समास्तत्र निनाय काश्चन ॥ १७ ॥
अलं कलङ्कः सकलोऽप्यपास्यत सचेतसां दुर्णयहारिणाऽमुना ।
अलं कलं कः सकलोऽप्यपास्यतः प्रभोर्वचो बोधयितुं नरः परः ॥ १८ ॥
असन्निभोऽङ्गप्रभयाऽधिकाञ्चनश्रियं दधौ गौतमतः प्रति प्रभुः ।
असन्निभोऽङ्ग ! प्रभयाऽधिकां च नः प्रियां समज्ञां भुवने गुरोरपि ॥ १९ ॥
न वासवानामनुरागिता गता वसुन्धरायां स्फुरितेऽस्य शासने ।
नवाऽऽसवानामनुरागिता गता जनस्य नश्यत्तमसः प्रभोर्गिरा ॥ २० ॥
अदीनभावातिगभीरतामसावशिश्रियद् विश्वगुरुर्गरीयसीम् ।
न दीनभा वाऽतिगभीरतामसाऽऽशयस्य सर्वस्य मुनेर्गणे ततः ॥ २१ ॥
अजन्यताऽऽपारविहारि मण्डलं प्रभोर्विहारेण धनाढ्ययोधने ।
अजन्यतापा रविहारिमण्डलं महाऽऽतपेऽप्याप्य मही सुसीमगा ॥ २२ ॥
न रोचिता चापकलाऽसुहारिणी नृपादिलोकेऽस्य शमोपदेशनात् ।
नरोचिता चाऽऽपि कलाऽऽशु हारिणी तपोजपादेर्जगति प्रसारिताम् ॥ २३ ॥

---

[१५] १ 'गतम्' गमनं ज्ञानं वा । २ 'नाटयिता' प्रवर्तकः ३ 'सितच्छदव्रजस्य' श्वेताम्बरव्रजस्य । ४ 'असौगतम्' असौगतम् । ५ 'नाटयिता' न, भटयिता 'स्वार्थे णिच्' । ६ 'सितच्छदप्रभुः' श्वेताम्बराधिपः । ७ 'उत्सूत्रपथे' उत्सूत्रमार्गे ॥

[१६] ८ 'सः' गुरुः । ९ 'मानवाधीश्वरसेवितक्रमाम्बुजः' नृपवन्दितचरणपद्मः । १० 'समा' अकुटिला । ११ 'नवा' नवीना । १२ 'धीः' मतिः । १३ 'स्वरसेऽवितक्रमा' स्वाभिप्रायेऽवितः रक्षितः क्रमः पारम्पर्यं यस्यां सा । १४ 'अङ्गिनाम्' प्राणिनाम् । १५ 'विषयेऽर्हतां मते' अर्हतां मते विषये देशे ॥

[१७] १६ 'विहारशोभाऽतिशयात्' विहारा जिनप्रासादास्तेषां शोभाभरेण । १७ 'सभा सुरप्रभोः' सुरप्रभोः, इन्द्रस्य सभा । १८ 'बहु पिप्रिये' बहु यथा स्यात् तथा पिप्रिये तुष्टा १९ 'विहारशोभाऽतिशयात्' विहारे देशान्तरगमने यः शोभाया अतिशयो दुर्भिक्षडमरादिनाशलक्षणात् । २० 'समाः' वर्षाणि ॥

[१८] २१ 'अलम्' समर्थः । २२ 'कलम्' मृष्टम् । २३ 'अपास्यतः नरः पुरुषस्य परः सकलोऽपि कः बोधयितुं अलम्, इत्यन्वयः' अपि तु न कोऽपीत्यर्थः ॥

[१९] २४ 'असन्निभः' अतुल्यः । २५ 'अङ्गप्रभया' देहकान्त्या । २६ 'अधिकाञ्चनश्रियम्' काञ्चनमधिकृत्याधिकाञ्चनं श्रीर्हेमसौन्दर्यम् दधौ । २७ 'गौतमतः प्रति' गौतमतुल्यः । २८ 'असन्निभः' असद् अविद्यमानं निभं यस्मिन् सः । २९ 'अङ्ग !' अङ्ग इति संबोधने । ३० 'प्रभया' बुद्ध्या । ३१ 'नः' अस्माकम् । ३२ 'प्रियाम्' इष्टाम् । ३३ 'समाज्ञाम्' कीर्तिम् । ३३ 'गुरोः' देवसूरेरधिकां दधौ ॥

[२०] ३४ 'वासवानाम्' भूपानाम् । ३५ 'अनुरागिता' रागित्वं गता भूपाः । ३६ 'वसुन्धरायाम्' पृथ्व्याम् । ३७ 'शासने' जैनशासने तस्मिन्ननुरागिणो जाता इत्यर्थः । ३८ 'नवाऽऽसवानामनुरागिता गता' नवा नव्याऽऽसवानामादरो गतः ॥

[२१] ३९ 'अदीनभावातिगभीरतामसावशिश्रियद्' अदीनः समुद्रस्तद्वद् भावे चित्ताभिप्रायेऽतिगभीरताम्, असौ, अशिश्रियत् आश्रितः । ४० 'दीनभा' दैन्यम् । ४१ 'वा' अथवा । ४२ 'अतिगभीः' अति गच्छतीत्यतिगाऽतिशायिनी भीर्भयम् । ४३ 'अतामसाऽऽशयस्य' अतामसोऽक्रोध आशयो यस्य ।

[२२] ४४ 'अजन्यताऽऽपारविहारि' अपाराः बहवो विहाराश्चैत्यानि यत्रेदृग्, अजन्यत । ४५ 'मण्डलम्' देशः । ४६ 'अजन्यतापा' अतापा अजनि । ४७ 'रविहारिमण्डलम्' रवेश्चारुबिम्बम् । ४८ 'महाऽऽतपेऽपि' ग्रीष्मेऽपि । ४९ 'आप्य' आप्य ऋतूनामानुकूल्यात् । ५० 'मही' पृथ्वी ॥

[२३] ५१ 'न रोचिता' नेष्टा । ५२ 'चापकला' धनुःकला । ५३ 'असुहारिणी' प्राणहारिणी । ५४ 'नरोचिता' नराणामुचिता । ५५ 'आप कलाऽऽशु हारिणी तपोजपादेर्जगति प्रसारिताम्' तपोजपादेस्तपोजपादेः कला घटिका, प्रसारितां विस्तारमाप, आशु शीघ्रम्, हारिणी रम्या ॥

गणेशानैपुण्यमहो महाऽऽयतेः प्रभोर्दिदीपे बहुदानवत्तया ।
गणे शनैः पुण्यमहो महायते जगत्प्रकाशाय बभूव शाश्वतम् ॥ २४ ॥
न धादरः कोऽपि निकामजागरे गणेऽभवत् तस्य गुणव्यतिक्रमः ।
न चाऽऽदरः कोपिनि कामजागरेरिता नृणां चेतसि धैर्यविक्रिया ॥ २५ ॥
न वैरपीडा न बलाभियोगिता गुरोर्विहारे मरुमण्डले ततः ।
नवैरपीडा नवलाभियोगितादृशाऽन्यतीर्थ्यैरकृशा व्यधीयत ॥ २६ ॥
नाऽऽवेशरोगोऽभिनिवेशकामना गुरोः प्रकाशेऽन्यमते तनुभृतः ।
नावे सरोगोऽभिनिवेशकामनाऽऽशयो बुधः कस्तरणेऽब्धिवन्दिरे ॥ २७ ॥
पराजितो धन्वनि योजिते गुणे प्रभोर्बली मोहमहाभटच्छली ।
पराजितो धन्वनि योजिते गुणे गुरुप्रकाण्डाद्य बिभेति कः क्षितौ ॥ २८ ॥
सभाजनेऽनन्तरसस्तपालये गुणं गुरौ शासति सङ्गते प्रगे ।
स भाजनेऽनन्तरशस्तपा लये जिनेन्द्रवाचां परमानुरागिणि ॥ २९ ॥
स देशरूपं कलया च कारयन् मरौ गणी धर्मविधौ निजे पदे ।
सदेशरूपं कलयाञ्चकार यन्निवेश्य सूरिं विजयादिरत्नकम् ॥ ३० ॥
वसुन्धरा सा शुचिरस्य संगतः प्रतिस्थलं स क्षणलक्षणेक्षणैः ।
वसुं धराऽऽशासु चिरस्य संगतमबोधि बोधिप्रदमेनमार्हतः ॥ ३१ ॥

---

[ २४ ] १ 'गणेशानैपुण्यमहः' गणेशवत् पाण्डित्यस्य तेजः । २ 'महाऽऽयतेः' महती, आयतिर्विस्तृतिर्यस्य 'यतिर्विकारे विरतौ भिक्षौ' इति हैमः [ अने० सं० कां० २ श्लो० १९२ ] तेन, प्रभ-हायतेः न महद्विकारस्य । ३ 'गणे' गच्छे । ४ 'शनैः शनै-र्जगत्प्रकाशाय शाश्वतं पुण्यमहर्दिनं बभूव' इत्यन्वयः । ५ 'महा-ऽऽयते:' महायोत्सवायाऽऽयतिरुत्तरकालो यस्य ॥

[ २५ ] ६ 'धादरः' दृश्यमानः । ७ 'निकामजागरे' अत्यर्थं जागरूके । ८ 'गुण०' गुणाः प्राणातिपातनिवृत्त्यादयो मूलगुणाः, पिण्डविशुद्ध्यादय उत्तरगुणाः । ९ 'कोपिनि' क्रुद्धे आदरः । १० 'कामजागरेरिता' कामाज्जाता गरेण करणेनेरिता न धैर्यविक्रिया । 'गरस्तूपविषे विषे । रोगे गरं स्यात् करणे' इति हैमः [ अने० सं० कां० २ श्लो० ४२०–४२१ ] ॥

[ २६ ] ११ 'नवैरपीडा' नवैः स्तवैरपि ईडा स्तुतिः । १२ 'नवलाभियोगितादृशा' लाभोऽस्त्येषां लाभिनः, योगोऽस्त्येषां योगिनस्ततो द्वन्द्वस्तेषां भावस्तत्ता नवा चासौ लाभियोगिता यस्याः दृग् दृष्टिस्तया । गणे लाभाधिका लब्धिपात्रं योगभाजश्च बहुला दृश्यन्ते तेन श्रीपरमगुरौ मतान्तरीयाणामपि महती श्रद्धा । १३ 'अन्यतीर्थ्यैः' तापसभक्तादिभिः । १४ 'अकृशा' बहुला । १५ 'व्यधीयत' अक्रियत ॥

[ २७ ] १६ 'नाऽऽवेशरोग.' आवेशरोगोऽपस्माररुजाऽन्यमत-प्रवेशरूपो रोगो वा न । १७ 'अभिनिवेशकामना' अभिनिवेश-वाञ्छाऽपि हठाऽऽग्रहोऽपि न । १८ 'गुरोः प्रकाशे सत्यन्यमते' । १९ 'तनुभृत.' जीवस्य । अन्योक्तिमाह 'नावे०' अब्धिवन्दिरे तरणे नावे यानपात्राय को बुधः 'सरोगः' सरसि गच्छतीति 'अभिनिवेशो' वाहनमध्यासने कामनाऽभिलाषाऽऽशयो यस्य सः ।

[ २८ ] २० 'पराजितः' भग्नः । २१ 'धन्वनि' मरौ । २२ 'गुणे' धर्मरूपे योजिते सति प्रभोः पराजितः । २३ 'धन्वनि' धनुषि । २४ 'गुणे' ज्यायां योजिते सति । २५ 'गुरुप्रकाण्डात्' । उत्कृष्टसङ्ग्रामाद् महाबाणात् को न बिभेति । अयमपि गुरुप्रकाण्डो गुरुमुख्य इति ॥

[ २९ ] २६ 'सभाजनेऽनन्तरसः' सभाजने बहुरस आसीत् । २७ 'तपाऽऽलये' तपागणोपाश्रये । २८ 'सङ्गते' प्रातर्मिलिते । २९ 'प्रगे' प्रभं गते । ३० 'भाजने' स्थाल्यादौ । ३१ 'अनन्तर-शस्तपा' अनन्तराणि सान्द्राणि शस्तानि मङ्गलानि पातीत्यनन्तर-शस्तपा बहुमङ्गलान्वित इत्यर्थः । ३२ 'लये' ध्याने । सभाजने जिनेन्द्रवाचां ध्याने परमानुरागिणि ॥

[ ३० ] ३३ 'स देशरूपम्' गुरुन्यायिप्रवृत्तिम् । ३४ 'कलया' विज्ञानोद्बोधनेन । ३५ 'निजे पदे' निजे पदे श्रीविजय-रत्नसूरिं निवेश्य । ३६ 'सदेशरूपम्' सदा ईशरूपं पट्टना-यकत्वं कलयाञ्चकार । 'ईशः स्वामिनि रुद्रे च' इति हैमः [ अने० सं० कां० २ श्लो० ५५६ ] ॥

[ ३१ ] ३७ 'वसुन्धरा सा' सा भूमिः । ३८ 'शुचि.' उज्ज्वला पवित्रा वा । ३९ 'अस्य' गुरोः संगतः । ४० 'प्रतिस्थलं स क्षणलक्षणेक्षणैः' प्रतिस्थलं सर्वत्र, क्षणलक्षणेक्षणैः महोत्सव-लक्षणदर्शनैः । ४१ 'वसुम्' देवविशेषमबोधि । ४२ 'धराऽऽ-शासु' पर्वतदिक्षु । ४३ 'चिरस्य' बहुकालम् । ४४ 'संगतम्' मिलितम् । ४५ 'एनमार्हतः' आर्हतः श्राद्धः, एनं गुरुम् ॥

न गौतमीयं मतमक्षपादजं धिया प्रमाण्यक्रियताऽमुना मनाक् ।
न गौतमीयं मतमक्षपादजं प्रमोचितं केवलिनः प्रमोचितम् ॥ ३२ ॥
न साधुना वै भवहारिणी रुचिर्विखण्डिता नन्दितपण्डिता गणे ।
नसाधुना वैभवहारिणी रुचिर्धृता तपोभिः प्रभया समन्वितैः ॥ ३३ ॥
विमुक्तरा गा नवधा सुरक्षणा जगौ गुरुर्ब्रह्मधरः क्षमापरः ।
विमुक्तरागा नवधासुरक्षणा गणे प्रवृत्तिर्व्रतिनां ततोऽभवत् ॥ ३४ ॥
प्रवासना ज्ञापनयेऽस्य मानसे गुरोर्निदेशेन रुपाऽपि योगिनाम् ।
प्रवासनाऽऽज्ञापनयेऽस्यमानशो परिग्रहं भावयतां विदूरतः ॥ ३५ ॥
शुचिप्रभावैः श्रमणानुगामिनस्तदाऽऽहृताः पुण्यजना इवेश्वराः ।
शुचिप्रभा वैश्रमणानुगामिनप्रसादतः प्रौढिविभूतिमादधौ ॥ ३६ ॥
निरन्तरायाऽऽगमहेतुरङ्गतः शुभां रुचिं प्राप्य गुरोर्निदेशतः ।
निरन्तरा यागमहे तुरङ्गतस्तदा चिर्हिस्यात् सुजना न्यवीवृतन् ॥ ३७ ॥
विनाऽशनायां गजविक्रमा रते पराङ्मुखाः शुद्धदृशो न भुञ्जते ।
विनाशनायाङ्गजविक्रमारतेस्तपस्विनो यस्य गणे गणेशितुः ॥ ३८ ॥
न नाम धीरञ्जनया जिनोदिते पटुः सभा का तमुपेत्य दूरतः ।
ननाम धीरं जैनयाजिनोदिते चिरं विरक्तं विपथे यथेच्छया ॥ ३९ ॥

---

[३२] १ 'अक्षपादजम्' अक्षपादो नैयायिकमतप्रणेता तस्माज्जातं श्रीगौतमीयं मतम् । २ 'गौतमीयम्' गौतमोऽग्रेन्द्रभूतिः । ३ 'क्षपादजम्' क्षपायां रात्रावत्तीति क्षपादस्तस्माज्जाते, ईदृशं न तन्मतम् । ४ 'प्रमोचितम्' मुक्तम् । ५ 'केवलिनः प्रमोचितम्' केवलज्ञानिनो ज्ञानयोग्यम् ॥

[३३] ६ 'वै भवहारिणी' वै निश्चितं साधुना भवहारिणी भवहन्त्री । ७ 'रुचिः' इच्छा । ८ 'विखण्डिता' खण्डिता न । ९ 'गणे' गच्छे । १० 'नसाऽधुना' नसा नासिकारूपेणाधुना । ११ 'वैभवहारिणी' वैभवेन हारिणी मनोहरा । १२ 'रुचिः' कान्तिः ॥

[३४] १३ 'विमुक्तराः' विमुञ्चति कर्मपाशाद् विमुग्, अतिशयेन विमुग् विमुक्तराः । १४ 'गाः' वाणीः । १५ 'नवधा सुरक्षणाः'—नवप्रकारगुप्तिरूपा सुरक्षणा सुतरां क्षणं उत्सवो यासु ताः सुषु लक्षणानि यासु ता वा । १६ 'जगौ गुरुः' गुरुर्जगौ अगाद् । १७ 'नवधासुरक्षणाः' नवप्रकारा अभयः प्राणास्तद्धाऽऽश्रयत्वात् प्राणिनस्तेषां रक्षणं यस्यां सा ॥

[३५] १८ 'प्रवासना' प्रवासनम् । १९ 'ज्ञापनये' ज्ञापनस्य नये अभिप्राये । २० 'अस्य' गुरोः निदेशेन । २१ 'रुपाऽपि' रोषेणाऽपि योगिनां मानसे, न कोऽपि सन्तापितवान् । २२ 'प्रवासना' प्रकृष्टा वासना भावना । २३ 'आज्ञापनये' आज्ञाग्रहणे । २४ 'अस्यम्' क्षेप्यं परिग्रहं भावयताम् । २५ 'मानशे' व्याप्ता । २६ 'विदूरतः' दूरतः ॥

[३६] २७ 'शुचिप्रभावैः' पवित्रतेजोभिः । २८ 'श्रमणानुगामिनः' यतिसेवकाः । २९ 'शुचिप्रभाः' निर्मलधियः । ३० 'वैश्रमणानुगाम्' धनदानुरूपाम् । ३१ 'इनप्रसादतः' स्वामिप्रसादतः ॥

[३७] ३२ 'निरन्तरायाऽऽगमहेतुरङ्गतः' अन्तरायरहितो य आगमेषु हेतुषु च रङ्गोऽत्याग्रहस्तस्मात् । ३३ 'शुभाम्' निर्दोषाम् । ३४ 'रुचिम्' इच्छाम् । ३५ 'निरन्तरा' दृढा । ३६ 'यागमहे' यज्ञोत्सवे । ३७ 'तुरङ्गतः' अश्वात् । ३८ 'चिर्हिस्यात्' वध्यात् । ३९ 'सुजनाः' सुष्ठु लोकाः । ४० 'न्यवीवृतन्' निवृत्ताः ॥

[३८] ४१ 'विनाऽशनायाम्' अशनायां क्षुधां विना । ४२ 'गजविक्रमाः' गजवद् बलवन्तः । ४३ 'रते' भोगे पराङ्मुखाः । ४४ 'विनाशनायाङ्गजविक्रमारतेः' अङ्गजस्य कामस्य विक्रमो विलासस्तत्र आरतिर्विरतिस्तस्य विनाशनाय ॥

[३९] ४५ 'धीरञ्जनया' बुद्धिरागेण । ४६ 'जिनोदिते' जिनवचने । ४७ 'पटुः' दक्षा । ४८ 'सभा' भामण्डलादेवता सभा । ४९ 'तमुपेत्य दूरतः' दूरतः उपेत्य तं, न नाम अपि तु सर्वाऽपि ननाम । ५० 'धीरम्' प्राज्ञम् । ५१ 'जैनयाजिनोदिते' जैनं धर्मं यजतीति जैनयाजी तस्मै यो जिनोदितपदार्थस्तेन जिनोदिते प्रेरिते । ५२ 'विरक्तम्' विरक्तं तं गुरुम् । ५३ 'विपथे' कुमार्गे ॥

सदा नवाऽऽलापिकयाचिदुत्तरा[1] वितेनिरे तां स्वगणे मिथः कथाम्[2] ।
सदानबाला[3]ऽपि कयाचिदु[4]त्तरात् समं यदाख्यावशतो[5]ऽनयन् निशाम् ॥ ४० ॥
अनङ्गरागं नियतः[6] स मुक्तमा[7] यः साङ्गरागः सुतनोः[8]स्तनौ[9] दधौ ।
अनङ्गरागं[10] नियतः समुक्तमाः प्रोचैः स्तनः को न गिरिर्वनं दधत् ॥ ४१ ॥
[ एकालापकम् ]

नियामका[11]श्चेतसि भावयन्त्यहो ! किं नाम देयोऽनुवरायकः[12] स्त्रियाः ।
नियामका[13]श्चेतसि भावयन्त्यहोरात्रं स तीर्थङ्कर एव नः प्रभुः ॥ ४२ ॥
सुखायनः[14] सारसनाभिकामितः[15] कीदृग् रथः स्यात् सुभटो वधूजनः ।
सुखाय नः सारसनाऽभिकामितः[16] कथं जयार्थी नृपतिर्महाबलः ॥ ४३ ॥
[ एकालापकं समस्तम् ]

महो[17] दयाया जगतीश्वरश्रियो[18] मा या विमोहं स यतोऽर्हतां मते[19] ।
महोदयायाऽऽजगतीश्वरश्रियो[20] यथास्थितं[21] भावनया[22]ऽस्य[23] सन्मते ! ॥४४॥ [ क्रियागुप्तम् ]
परा[24]ऽसितीव्रा[25] विरतिः प्रमाऽऽपणे[26] न नाम काऽबोधि विदा तपोगणे[27] ।
पलाशितीव्रा[28]ऽविरतिः प्रमापणे[29] नवाऽपि कामोचितया न भी मृता ॥ ४५ ॥
[ क्रियागुप्तम् ]

[ ४० ] १ 'उत्तराः' यानप्रवराः, "उत्तरं प्रवरोर्द्धयोः" इति हैमः [ अने० सं० कां० ३ श्लो० ५५८ ] । २ 'कथाम्' वार्ताम्, मिथः सदा नित्यं नवाऽऽलापिकया वितेनिरे । ३ 'सदानबाला' दानवती बाला स्त्री । ४ "कयाचिद्' सख्या । ५ 'यदाख्यावशतः' यस्याः कथाया आख्यावशात आलापिका-कथनेन ॥

[ ४१ ] ६ 'नियतः' यत्तोऽपि । ७ 'स मुक्तमाः' स मुक्तवद् भासत इति मुक्तमाः "मुक्ता मौक्तिकपुंश्चल्योः" इति हैमः [ अने० सं० कां० २ श्लो० १९१ ] । ८ 'सुतनोः' स्त्रियाः । ९ 'तनौ' शरीरे यः साङ्गरागोऽपि अनङ्गरागं दधौ । १० 'अनङ्ग-रागम्' अनङ्गे आकाशे रागोऽरुणिमा यस्य तत् "अङ्गहीनेऽप्यनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे" इति हैमः [ अने० सं० कां० ३ श्लो० ११५ ]; "रागः स्याल्लोहितादिषु" इति हैमः [ अने० सं० कां० २ श्लो० ४६ ]; यद्वाऽनङ्गैर्मदनफलैः राजत इत्य-नङ्गराः, अगाः वृक्षा यस्य तत् ईदृशः स्तन इत्येकालापकम् ॥

[ ४२ ] ११ 'नियामकाः' पोतवहाः । १२ "°वरायः कः स्त्रिया देयः" देयः करः । १३ "नियामकाः" नियमधारिणः साधवः । 'तीर्थङ्कर एव नः अस्माकं प्रभुः' ॥

[ ४३ ] १४ 'सुखायनः' सुखकारि अयनं गमनं यस्य यद्वा नोऽस्माकं सर्वलोकानां सुखाय । १५ 'सारसनाभिकामितः' सारं अरैः सहितं सनाभि नाभियुक्तं कामितमभिलषितं यस्य स भटः; सारसनमधिकान्नमभिकामितं प्रियं यस्य स वधूजनः; राज्ञः पक्षे सारः श्रेष्ठः सनाभिस्सगोत्रः स एव कामितो यस्य सः; "नाभिः क्षेत्रप्रधानयोः, चक्रमध्ये मृगमदे प्राण्यङ्गे मुख्यराजि च" इति हैमः [ अने० सं० कां० २ श्लो० ३१४ ] "सनाभि-र्ज्ञातिसदृशोः" इति हैमः [ अने० सं० कां० ३ श्लो० ४८९] १६ 'सारसनाऽभिकामितः' सारं धनं तस्य सना नित्यमभिकः कामयिता तेन अमितः प्राप्तः "गत्यर्थानां प्राप्त्यर्थत्वात्" रमस्य धनवतामादराद् यद्वा सारे धने सदाऽभिकामिता लुब्धता यस्येति वधूजनः सरसैव सा रसा सा चासौ नाभिः कामिता इष्टा यस्य सः ॥

[ ४४ ] १७ 'महः' उत्सवः । १८ 'जगतीश्वरश्रियः' जगती भूमिस्तदीश्वरो भूपस्तस्य श्रियो लक्ष्म्याः । १९ 'मा या विमोहं स यतोऽर्हतां मते' इति पदविभागे–अर्हतां मते विमोहं मा या स–मा प्राप्नुहि; 'या' इति क्रियागुप्तं ह्यस्त्यपि मासहिते वाक्ये भविष्यत्काले रूपम्–यद्वा 'मायाविमोहं स्मयतः' इति पदविभागे तु स्मयतोऽहङ्काराद् मायया कपटेन विमोहः परेषां भ्रमे पातनम् । २० 'महोदयायाऽऽजगतीश्वरश्रियः' आजगति आभुवनं, ईश्वरा समर्था श्रीः शोभा यस्य । २१ 'यथास्थि-तम्' परमार्थतया । २२ 'भावनया' चिन्तनया । २३ 'अस्य' क्षिपस्वेति, अस्येति क्रियागुप्तं "असूच् क्षेपणे" धातुर्दिवादिः ॥

[ ४५ ] २४ 'परा' उत्कृष्टा । २५ 'असितीव्रा' खड्गधारे–वोग्रा । 'परासितीव्रा' इति पदविभागे परासि पराक्षा तीव्रा इति क्रियागुप्तम् । २६ 'प्रमाऽऽपणे' ज्ञानहट्टे । २७ 'न नाम काऽबोधि विदा तपोगणे' तपोगणे विदा ज्ञानिना नाम प्राकाश्येका विरतिर्नाबोधि । बोधिविदा नरेण का अविरतिर्न परासि । २८ 'पलाशितीव्रा' मांसाशिवत् तीव्रा; "तीव्रं कटूष्णा-त्यर्थेषु तीव्रा तु कटुरोहिणी" इति हैमः [ अने० सं० कां० २ श्लो० ४४० ] २९ 'प्रमापणे नवापि कामोचितया न भी मृता' इति पदविभागे कामोचितया न भी मृता कन्दर्पार्हगमनस्य

न विप्रयुक्तिर्मधुरा न वास्तवमदःप्रबोधे विदुराहंता गुणम् ।
न विप्रयुक्तिर्मधुरा नवा स्तवप्रतीतिरागात् पटुतां ततो गुरुः ॥ ४६ ॥ [ क्रियागुप्तम् ]

समाधिता पापरुचिर्विवर्द्धनं ससार पुण्याभ्युदयो महस्विनाम् ।
समाधितापाऽपरुचिर्विवर्द्धनं वीरे गुरौ श्रीजिनवीरतीर्थपे ॥ ४७ ॥ [ क्रियागुप्तम् ]

पुरोगमैषी प्रयतः सधारणः साधोरणः कल्पितमत्तवारणः ।
पुरोगमैषी प्रयतः सधारणः प्रपीयतामित्युदिते न कोऽप्यभूत् ॥ ४८ ॥
[ स्पष्टान्धकम् ]

तपोगणेऽराजत तेजसा समं सौरीप्रभा साऽधिसरोजनालिकम् ।
तपोऽङ्गणे राजततेऽञ्जसा समं सितच्छदानामभिनन्दनं ततः ॥ ४९ ॥
[ सन्दानोपमा ]

स दानतः स्वर्गहरिप्रभावकस्तपःप्रशस्यश्चकमे यते जयम् ।
सदाऽऽनतः स्वर्गहरिप्रभावकसभाऽवतस्तस्य यशश्च यं तदा ॥ ५० ॥ [ गूढचतुर्थः ]

---

नरकस्य भयधारिणा; 'प्रमापणे नवाऽऽपि काऽमोचि तया' इति पदविभागे तु प्रमापणे जीवघातेऽविरतिः का न आमोचि तया विरत्या; 'काऽऽमोचितयाममीमूता' मीमूता मरेणाऽऽमोचितं यामं रोगार्हंगमनं तस्माद् विभ्यता, यद्वा प्रमापणे घाते विरतिः का न आपि 'वा' इति पक्षान्तरे आपीति वा, 'अमोचि' इति क्रियागुप्तम् ॥

[ ४६ ] १ 'न विप्रयुक्तिमधुरा' श्राद्धानां विप्रस्य द्विजस्य युक्तिर्न मधुरा । २ 'न वास्तवम्' न तात्त्विकम् । ३ 'अदःप्रबोधे' अमीषां विप्राणां प्रबोधे उपदेशे । ४ 'विदुराहंता गुणम्' विदुराः पण्डिता ये आर्हताः श्राद्धा गुणमविदुः 'अविदुः' इति क्रियागुप्तम् । ५ 'न विप्रयुक्तिः' गुरोर्विप्रयुक्तिर्वियोगो न पटुतामागात् । ६ 'मधुरा' प्रिया । ७ 'नवा स्तवनप्रतीतिरागात्' नवीना स्तवनप्रसिद्धिरागात् पटुतामागाद् 'आगाद्' इति क्रियागुप्तम् ॥

[ ४७ ] ८ 'समाधिता' समाधेर्योगविशेषस्य भावः । ९ 'पापरुचिर्विवर्द्धनम्' विशेषेण वर्द्धनमाप; पापरुचिर्विवर्द्धनं छेदमधित । १० 'ससार पुण्याभ्युदयो महस्विनाम्' इति पदविभागे महस्विनां पुण्यः पवित्रोऽभ्युदयः ससार प्रसृतः; 'स सारपुण्याभ्युदयः' इति पदविभागे तु स प्रसिद्धः सारः श्रेष्ठः पुण्याभ्युदयः । ११ 'समाधितापाऽपरुचिर्विवर्द्धनम्' समा समस्ता पापरुचिरपरुचिर्मलिना यद्वा समाधितापयतीति समाधितापा सदाऽपरुचिर्मिथ्यात्वं च्छेदमधित । समा प्राग्वत् । 'ससार' 'अधित' 'आप' इति क्रियात्रयं गुप्तम् ॥

[ ४८ ] १२ 'पुरोगमैषी' पुरोगमाः पत्तयस्तान् इच्छतीति पुरोगमैषी । १३ 'प्रयतः' प्रकृष्टं यतं निषादिनां पादकर्म यस्य । १४ 'सधारणः' धारणया बुद्ध्या सहितः सधारणः । १५ 'साधोरणः' आधोरणा हस्तिपकास्तैः सह साधोरणः; साधोः मुनेः रणः शब्दः । १६ 'कल्पितमत्तवारणः' सज्जितो मत्तो वारणः; कल्पिता कथिता मत्ता वारणा येन सः । १७ 'पुरोगमैषी' पुरोगमान् अग्रस्थान् एषते इति पुरोगमैषी । १८ 'प्रयतः' सोद्यमः उद्यमोपदेशयुक्तः । १९ 'सधारणः' धारणा बुद्धिगुणस्तेन सहितः; धारणा ध्यानविशेषस्तेन युक्तः । २० 'प्रपीयतामित्युदिते न कोऽप्यभूत्' इत्युक्तेऽपि पुरः नगराद् बहिर्गमनेच्छुर्न कोऽप्यभूत् । प्रपीयताम् सादरं श्रूयताम् ॥

[ ४९ ] २१ 'तपोगणेऽराजत तेजसा समं सौरीप्रभा' सौरीप्रभा सूरेः सम्बन्धिनी प्रभा कान्तिः तेजसा प्रकाशेन समं तपोगणेऽराजत । २२ 'साऽधिसरोजनालिकम्' सरोजनालिकं सरसा ज्ञानेन युक्ता जनाः सरोजनास्तेषामलिकं भालं तदधिकृत्य; अन्याऽपि सौरीप्रभाऽधिसरोजनालिकं पद्मनालिकामधिकृत्य राजते । २३ 'तपोऽङ्गणे राजततेऽञ्जसाऽसमम्' तपो धर्मः राजतते राजभिस्तते व्याप्तेऽङ्गणेऽञ्जसा शीघ्रमसमं अतुल्यमराजत "तपः कृच्छ्रादिकर्मणि, धर्मे लोकप्रभेदे च" इति हैमः [ अने० सं० कां० २ श्लो० ५४३–५४४ ] । २४ 'सितच्छदानामभिनन्दनम्' सितच्छदानां श्वेताम्बराणामभिनन्दनं तोषणम्; अन्याऽपि पद्मनालिकानिष्टसौरभमया सितच्छदानां हंसानाम् ॥

[ ५० ] २५ 'सः' गुरुः । २६ 'स्वर्गहरिप्रभावकः' कल्पवृक्षकान्तिरक्षकः । २७ 'तपःप्रशस्यः' तपसा प्रशस्यः । २८ 'चकमे' ऐच्छत् । २९ 'यते' संयते देशतः सर्वतो वा । ३० 'आनतः' नता देवेन्द्रा यं सः । ३१ 'प्रभावकसभा' प्रभावकाणां श्रावकाणां सभा । ३२ 'अवतः' पालयतः । ३३ 'तस्य यशश्च यम्' तस्य प्रभोर्यशश्च यं चकमे ॥

दिष्ट्या स्थिरासज्जनधीधनाऽऽदरैर्यतो दिनादेष गणेऽधिनायकः ।
दिष्ट्या स्थिरा सज्जनधीधनादरै रराज राज्ञां सखिताऽभिपङ्क्तः ॥५१॥ [ निरौष्ठ्यः ]
कल्याणधाऽऽराधिगताहतां गणे क्रियाऽऽसनाथा यतिनायकेन तत् ।
कल्याणधाराऽधिगताहतां गणे श्रेयो न कस्यातिशयाय जायते ॥५२॥ [ निरौष्ठ्यः ]
समङ्गलं माण्डलिकेन्द्रमण्डलं यं वन्दते पिञ्जरयत् पदाम्बुजम् ।
समङ्गलं माण्डलिकेन्द्रमण्डलं संस्कृत्य सन्तः सततं स्तुवन्ति तम् ॥ ५३ ॥
[ बिन्दुमान् ]
विश्वम्भरेणोद्धरणे जगद्गुरुः प्राकाशि नूनं गुरुणा स्वतेजसाम् ।
विश्वं भरेणोद्धरणे जगद्गुरुः पदार्थराशेर्ददता नृणां व्रतम् ॥ ५४ ॥ [ बिन्दुच्युतकम् ]
सदागमानामनुयोगदेशने मन्द्रध्वनिर्घोषयति स्मयान् गुरोः ।
सदागमा नाम नु योगदेऽशनेऽमक्ष्यस्य तैर्वाग्विभवेऽस्य निश्चिताः ॥ ५५ ॥
[ बिन्दुच्युतकम् ]
वन्दने रुचिराभाति शितांशुकलयाऽन्विता ।
वन्दने रुचिरामाऽतिशयाद् गीर्विदुषां गुरोः ॥ ५६ ॥ [ बिन्दुच्युतकम् ]
सामयः सुहृशा हेयः शाकारम्भविचिन्तनात् ।
सामयः सुहृशाऽहेय इदं मोहस्य जृम्भितम् ॥५७॥ [ मात्राच्युतकं बिन्दुच्युतकं च ]

---

[५१] १ 'दिष्ट्या' दिष्टिर्हर्षमोदयोर्भाग्यं वा तया । २ 'स्थिरासज्जनधीधनाऽऽदरैः' स्थिरे मोक्षे आसीदन्तीति स्थिरासदो भव्यास्त एव जनास्तेषां धीधनस्य पण्डितस्याऽऽदरैः । "स्थिरो मोक्षे निश्चले च स्थिरा भूः शालपर्ण्यपि" इति हेमः [ अने० सं० कां० २ श्लो० ४०९ ]। ३ 'दिष्ट्या' प्रमोदेन । ४ 'स्थिरा' भूमिः । ५ 'सज्जनधीधनादरैः' सज्जनाः सत्पुरुषास्तेषां धीर्बुद्धिर्धनमादरोऽभयर्थः । ६ 'सखिताऽभिपङ्क्तः' मैत्रीलक्षणात् ॥

[५२] ७ 'कल्याणधा' कल्याणं मोक्षं धत्ते कल्याणधा । ८ 'आराधिगताहताम्' आराधितोऽर्हतो योगश्च गता प्राप्ता । ९ 'गणे' गच्छे । १० 'कल्याणधारा' स्वर्णधारा । ११ 'अधिगता' प्राप्ता । 'अर्हतां गणे' आर्हतानां गणे ॥

[५३] १२ 'समङ्गलम्' मङ्गलेन सहितम्, "मङ्गला श्वेतदूर्वायां" इति हेमः [ अने० सं० कां० ३ श्लो० ७१२ ]; तया युतम् । १३ 'माण्डलिकेन्द्रमण्डलम्' माण्डलिकानामिन्द्राणां मण्डलं संनिधेन । १४ 'समङ्गलम्' समं सार्द्धं गलं कण्ठं च । १५ 'मण्डलम्' भूषणविशेषमलङ्कारम् । १६ 'संस्कृत्य' सत्कृत्य । १७ 'तम.' गणधरः ॥

[५४] १८ 'विश्वम्भरेण' विष्णुना पृथ्व्या । १९ 'गुरुः' इन्द्रस्य पतिर्बृहस्पतिः । २० 'विश्वम्भरेण' सर्वभारेण, विश्वं जगत् सर्वं पदार्थराशेः भरेण भारोऽधस्ता बृहस्पतिर्गते वृथे । २१ 'भूव.' कोषवचनम् ॥

[५५] २२ 'स्मयान्' विस्मयान् । २३ 'सदागमानाम्' सदागमाना-नाम् । २४ 'अनुयोगदेशने' व्याख्याने । २५ 'मन्द्रध्वनिः' मन्द्रशब्दे बिन्दुं विना मद्रध्वनिर्मङ्गलशब्दः 'जयइ जगजीवजोणी'-त्यादिको जयजयारावो वा । २६ 'सदागमाः' शुद्धसिद्धान्ता निश्चिताः । २७ 'नाम' प्राकाश्ये । ·२८ 'योगदे' नियमदायके । २९ 'अशनेऽमक्ष्यस्य' अमक्ष्यस्याशने भक्षणे । ३० 'तैर्वाग्विभवेऽस्य' तैः शास्त्रैरस्य गुरोः वाग्विभवे ॥

[५६] ३१ 'वन्दने' नमने । ३२ 'रुचिः' सम्यग्दर्शनमाभाति । ३३ 'शितांशुकलयाऽन्विता' श्वेताम्बरपक्षानुयुता । ३४ 'वन्दने' वदने बिन्दुं विना वदने गुरोः चन्द्रकलया युक्ता । ३५ 'रुचिराभाति शयात्' इति पदयोजने रुचिर्दीप्तिराभाति गुरोः भाभाति दीप्यमाने शयात् हस्तात्; 'रुचिराऽऽमाऽतिशयात्' आभाया अतिशयात् रुचिरा स्यात् । ३६ 'गीर्विदुषाम्' पण्डितानां विदुषां गीर्वाणी यथा गुरोः स्तुत्यं इत्याभाति । विदुषां वदने वन्दने गी रुचिरा ॥

[५७] ३७ 'सामयः' रोगी हेयः । ३८ 'सुहृशा' शुभनेत्रेण साधुना वा । ३९ 'शाकारम्भविचिन्तनात्' शाकारम्भस्य विचिन्तनात् शाकभोजी रोगी भवति यदा शाकं सहारम्भः सचेतनाद्याश्रितद्वित्रयात् पुष्पादीनां शाकवनस्पतियोगात्, शाकस्य शास्त्रादिभिर्विशेषकारणादारम्भ उत्पत्तिनिष्पत्तिचिन्तनात्, शाकमर्यादीनां भक्षणदोषाः वक्तव्याः नहि साधुभिः गमनादि यदा शाकं यथा स्यात् तथा भवितः प्रतिनिषिद्धत्वात् अभिलोऽत्सर्गिकः, शाकं अतिविचिन्तनात् शाकस्य वर्ज परित्यागः कृता ये अभिनवविचिन्तनात्, शाकभोजनस्य दोषाधिकाराः- वर्जकाः प्रजाः । ४० 'सामयः सुहृशाऽहेयः' सामयो धर्मी-

मं[1]हेश्वरः शर्व[2]जनै[3]रपीड्यते हासप्रकाशो नटनेऽति[4]दक्षधीः।
मं[5]हेश्वरः सर्वजनैरपीड्यतेत्येवं [6]विनेयोऽपनयैर्[7]विनीयते ॥ ५८ ॥ [ मात्राच्युतकम् ]
प्र[8]तिक्रियाम[9]र्हति का[10]मलालसः सुरो भजन्नेव स[11]मग्रमुद् भुवि।
प्रति क्रियामर्हति का[12]मलालसः कथं जनो [13]निर्मललोचनेक्षणम् ॥ ५९ ॥
[ मात्राच्युतकम् ]

स्व[14]काननेकान्ततया[15] वि[16]शारदद्विजेशजैत्रान् गुरुरेवमादिशत्।
स्व[17]काऽऽनने का[18]न्ततया वि[19]शारदसितांशुलक्ष्मीं नि[20]दधे महोदये ॥ ६० ॥
अ[21]नेनसा का[22]रिकयाचिदाश्रया सभा स[23]भावा गणभृता सताम्।
अ[24]नेन साऽकारि कयाचिदा[25]श्रयानुशीलिनी जैनमते प[26]रापरे ॥ ६१ ॥ [ वर्णच्युतकम् ]
ना[27]लीकराजी स[28]रसः प्र[29]बोधभाक् प्रै[30]ष्यप्रसारे हि यथाऽऽस[31]सौरभा।
ना[32]लीकराजी सरसप्रबोधभाक् तथा तदाऽऽसीत् सु[33]मनः प्रभोर्गिरा ॥ ६२ ॥
[ यकारच्युतकम् ]

प्र[34]भञ्जने कोम[35]लतां स[36]सौरभां सु[37]सीमतां वर्णयते यतः कविः।
प्र[38]भं जने [39]कोऽमलतां स[40]सौरभां सु[41]सीमतां ध्या[42]यति किं न मन्यते ॥ ६३ ॥
[ बिन्दुच्युतकम् ]

---

प्रधानः सुरक्षा स्त्रियाऽहेय आदरणीयः; आकारमात्रां विना समयोऽवसरः सुरक्षा पण्डितेन हेयः; समयः सिद्धान्तः सुरक्षा सम्यक्त्ववता हेयस्त्याज्य इत्युभमसङ्गात्-पण्डितोऽपि समयमवसरं त्यजति मद्वारकोऽयं मदाधिपत्यं यन्मया क्रियते तद् भवतीति मदान्धतया इदं मोहविजृम्भितम् ॥

[ ५८ ] १ 'महेश्वरः' महामहिपो लोकैरपीड्यते। २ "शर्वजनैः" ईश्वरभक्तैः। ३ 'ईड्यते' स्तूयते। ४ 'अतिदक्षधीः' वृषमतिक्रान्ताऽतिदक्षा धीर्यस्य; अतिदक्षा निपुणा धियो यत्र सः। ५ 'महेश्वरः' अत्र मात्राच्युतके महस्वर इत्यत्रशब्दः; महिपशब्दः सर्वजनैरपीड्यत-अपशब्दत्वाद् इत्येव रागद्वेषविजृम्भितं विरुद्धनये संसारमार्गे। ६ 'विनेयः' शिष्यः। ७ 'विनीयते' शिक्षां प्राप्यते ॥

[ ५९ ] ८ 'प्रतिक्रियाम्' विद्वेषभावं स्पर्द्धां भजन्नपि। ९ 'अर्हति' जिने। १० 'कामलालसः सुरः' स्मरपरवशः सुरः। ११ 'समग्रमुत्' सर्वज्ञः। अत्र दृष्टान्तः-'कमलारोगेण अरसः निर्मललोचनेक्षणं यथा स्यात् तथा जनः कथं प्रतिक्रियां वैद्योपचारमर्हति' कमलायामलसः प्रतिक्रियां वैरशुद्धिं नैवार्हति किं० भुवि सुर इव सुरः पुनः किं० भजन्नपि पुनः किं० अग्रमुद् न पूर्वापरभागवेदी अविवेकीत्यर्थः-अत्रार्थान्तरम्। १२ 'कामलालसः' अलालसोऽलोभी जनः कथं केन प्रकारेण कम्?। १३ 'निर्मललोचनेक्षणम्' कृपास्नेहाऽऽर्द्रनेत्रेण विलोकयितारमपि पुरुषं प्रति क्रियां सेवादिकां नैवार्हति कमपीत्यर्थः। अत्र कामपि कमपीति मात्राच्युतिर्ज्ञेया ॥

[ ६० ] १४ 'स्वकान्' स्वीयान् शिष्यादीन्। १५ 'अनेकान्ततया' स्याद्वादभावेन। १६ 'विशारदद्विजेशजैत्रान्' निपुणविप्रराजजयनकारिणः। १७ 'स्वकाऽऽनने' स्वमुखे। १८ 'कान्ततया' रम्यतया। १९ 'विशारदसितांशुलक्ष्मीम्' विशिष्टशरत्कालीनचन्द्रशोभाम्। २० 'निदधे' धत्ते स्म ॥

[ ६१ ] २१ 'अनेनसा' पापवर्जितेन सर्वा सभा। २२ 'कारिकया' स्वरूपवृत्त्या। २३ 'सभावा' ज्ञानवती। २४ 'अनेन सा' अनेन सा प्रसिद्धाऽकारि कयाचिद्। २५ 'आश्रयानुशालिनी' चैत्योपश्रयानुरक्ता; आशयशुद्धा। २६ 'परापरे' स्याद्वादरूपे पक्षे परे उत्कृष्टे अपरा अपगतो रो यस्याः साऽपरा ॥

[ ६२ ] २७ 'नालीकराजी' पद्मश्रेणिः। २८ 'सरसः' तटाकस्य। २९ 'प्रबोधभाक्' विकासवती। ३० 'प्रैष्यप्रसारे प्रेष्यः वसन्तः; प्रकृष्ट इषः आश्विनमासः। ३१ 'आससौरभा' प्राप्तपरिमला। ३२ 'नालीकराजी' न अलीकेन राजते इत्येवंशीलः। ३३ 'सुमनः' सज्जनः ॥

[ ६३ ] ३४ 'प्रभञ्जने' वायौ। ३५ 'कोमलताम्' मन्दताम्। ३६ 'ससौरभाम्' सपरिमलाम्। ३७ 'सुसीमताम्' शीतताम्। ३८ 'प्रभम्' श्रीविजयप्रभम् 'सत्यभामा-भामा' इति न्यायात्; 'प्रभजने' सेवने। ३९ 'कोऽमलताम्' अमलतां को न मन्यते, अपि तु सर्वोऽपि मन्यते। ४० 'ससौरभाम्' सूरेरियं सौरी सा चासौ भा दीप्तिस्तया सह। ४१ 'सुसीमताम्' समर्यादताम्। ४२ 'ध्यायति' ध्यानकरे जने ॥

विभाजयन् वारिवलं स कश्मलं यथा प्रशस्योऽत्र विशारदाऽऽगमः ।
विभा जयन् वाऽरिवलं सकश्मलं दधौ विसं बोधयिता जगद्गुरुः ॥ ६४ ॥

[ शकारच्युतकम् ]

विश्लेपयन्नङ्गजपांशुसङ्करं नृणां निपेयः ससुरापगाऽम्बुवत् ।
विश्लेपयन्नङ्ग ! जपांशुसङ्करं स्थलं विचक्रे विमलं महीतलम् ॥ ६५ ॥

[ लकारच्युतकम् ]

स्तम्भेन धाम्नः स्थिरता यलान्वितेऽनेनाभवत् तीर्थवरस्य सज्जने ।
स्तम्भे न धाम्नः स्थिरतायलान्वितेऽभिनन्दयित्रीं किमितीव सुश्रुतेः ॥ ६६ ॥

[ बिन्दुच्युतकम् ]

स कं प्रभावं न बभार भारते समुल्लसज्जैनमते तपोभरैः ।
सकम्प्रभावं नवभालभारले दृष्टे गुरौ मोहमहीश्वरे दधौ ॥ ६७ ॥

[ रकारच्युतकम् ]

विभा वसु श्रीर्महिमाऽर्थनन्दनादिनादिनादैधत सर्वदाऽर्हते ।
विभावसुश्री महिमाऽर्थनन्दनान्यदीधरत् तत्समये तपोगुरुः ॥ ६८ ॥

[ रकारच्युतकम् ]

---

[ ६४ ] १ 'विभाजयन्' विश्लेषयन् । २ 'वारिवलम्' जलबलम् । ३ 'सकश्मलम्' कश्मलं मलिनम् । ४ 'विशारदाऽऽगमः' विशिष्टः शारदोऽयं शारदागमः । ५ 'विभाः' कान्तीः । ६ 'वा' पादपूरणे । ७ 'अरिबलं जयन्' इत्यन्वयः । ८ 'सकश्मलम्' पापपरं पक्षे विशं शकाररहितं सकमलं सलक्ष्मीकम् । ९ 'विशाम्' मनुष्यं वैश्यं वा बोधयिता । १० 'जगद्गुरुः' गुरुः जगद् बोधयिता ॥

[ ६५ ] ११ 'विश्लेपयन्' दूरीकुर्वन् । १२ 'अङ्गजपांशुसङ्करम्' अङ्गे जातं पांशुसङ्करं धूलीपुञ्जम् । १३ 'निपेयः' सादरं वीक्षणीयः । १४ 'सुराऽऽपगाम्बुवत्' गाङ्गवारिवत् । १५ 'विश्लेपयन्' कर्म मलं लकार-रहितं यथा स्यात् तथा विश्लेपयन्निल्यर्थः पक्षे मलमलयं विश्लेषेण क्षेपयन् क्षालयन् । १६ 'अङ्गजपांशुसङ्करम्' 'अङ्ग !' इति संबोधने । यद्वा अङ्गे जपेन मन्त्रजापेन जपाया वा पांशुसमूहं विश्लेषयन्; जपावद्रक्तता दधत् ॥

[ ६६ ] १७ 'स्तम्भेन' स्तम्भेन बलान्विते सति । १८ 'धाम्नः' गृहस्य स्थिरताऽभवत् । १९ 'अनेन' गुरुणा । २० 'तीर्थवरस्य' सद्गुरूपस्य । २१ 'सज्जने' सन्नीकरणे । २२ 'स्तम्भे' स्तम्भे; 'स्तम्भोऽस्त्रजाड्ये स्थूणायाम्' इति हैमः [ अने० सं० का० २ श्लो० ३१० ] बिन्दुच्युतके, अबलान्विते बागीगणयुते स्तम्भेऽजे धाम्नः गृहस्य स्थिरता; स्तम्भेनावष्टम्भेनानेनाभिनन्दयित्री स्थिरताऽभवत् 'पशुभिः बहुभिरपि न कुलावष्टम्भः किन्तु कुलस्तम्भेनैकेनाऽपि कुलावष्टम्भ' इति तात्पर्यम् । २३ 'न धाम्नः स्थिरता' न तेजसः स्थिरता । २४ 'अभिनन्दयित्रा किमितीव सुश्रुतेः' आगमस्य वर्धयित्रा 'मूर्खेभ्यो धर्मतेजोहानिः स्याद्' इति शास्त्राणि पाठयित्वा गुरुरित्यर्थः, इतीव किं सुश्रुतेर्धाम्नस्तेजसः ॥

[ ६७ ] २५ 'सः' गुरुः । २६ 'सकम्प्रभावम्' चञ्चलताम् । २७ मोहमहीश्वरे' मोहराजे ।

[ ६८ ] २८ 'विभा' दीप्तिः । २९ 'वसु' धनम् । ३० 'श्रीः' लक्ष्मीः । ३१ 'महिमा' महत्त्वम् । ३२ 'अर्थ०' अर्थः कार्यम् "अर्थो हेतौ प्रयोजने निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु" इति हैमः [ अने० सं० का० २ श्लो० २१५ ] । ३३ 'नन्दनादिना' पुत्रादिना । ३४ 'आर्हते' श्राद्धे । ३५ 'विभावसुश्रीः' विभावसुः सूर्यस्तद्वत् श्रीर्यस्य "विभावसुस्तु भास्करे हुताशने हारभेदे चन्द्रे" इति हैमः [ अने० सं० का० ४ श्लो० ३४१ ] । ३६ 'महिमार्थनन्दनानि' महा उत्सवा विद्यन्ते यस्यां सा महिनी ईदृशी मा लक्ष्मी तयाऽर्थवर्धनानि; पूर्वार्धपदे रकारं विना अथ इति महिमा आरेतः व्याख्यार्थः । यद्वा महिम्ना महत्त्वेनार्थनन्दनानि सूत्रार्थवृद्धीः ॥

विश्वाङ्गणे चेतनतां निभालयन् दध्रे पदं योऽनवधीरणायुतः ।
विश्वां गणे चेतनतां निभालय स्थितिं स सन्त्याजयति स्म मण्डले ॥ ६९ ॥
[ वकार-रकारयोश्च्युतकम् ]

ससंयमो मानिनि कामशर्मणे स्तनप्रदेशश्च मरालबालकः ।
ससंयमो मानिनिकामशर्मणे कीदृक् सुदृग्भूषणतामुपैत्ययम् ॥ ७० ॥
[ मुक्ताहारविभूषितः-बहिरेकाऽऽलापकं प्रश्नोत्तरम् ]

वामाङ्गजातिप्रणयेऽघनाशने मनः क वा धीरमते महात्मनः ।
वामाङ्गजातिप्रणये घनाशने जैनस्य शैवस्य नृपस्य मालिनः ॥ ७१ ॥
[ क्रियागुप्तम्-बिन्दुच्युतकम्-सर्वतोभद्रम्-व्यस्तसमस्तमेतरैकालापकम् ]

---

[ ६९ ] १ 'विश्वाङ्गणे' जगन्मध्ये । २ 'चेतनताम्' जीवस्वरूपम् । ३ 'निभालयन्' विलोकयन् । ४ 'दध्रे' दध्र इत्यत्र रेफं विना दधे । ५ 'अनवधीरणायुतः' अनवहेलनाऽऽदरत्वेन युतः; येवकारे धीः इंदग् न यद्वा न वधी न हिंसकः; यद्वा नवधीर्नवमतिः; रणेनायुतः यद्वा नवबुद्धिप्रेरणायुक्तः । ६ 'विश्वाम्' सर्वाम्; पृथ्वीम्; वकारच्युतौ विशांगणे नरसमूहे; विश्वामित्यत्र वकारं विना विशामिति । ७ 'गणे' गच्छे । ८ 'चेतनताम्' च पूर्वमिता प्राप्ता पश्चाद्गता प्रगुणीकृताऽऽचीर्णताम्; इतनतां पूर्वं प्राप्ता पश्चाद्गता नम्रताम् । ९ 'निभालयस्थितिम्' निभं कपटं तदाऽऽलयस्तत्र स्थितिं धारणां त्याजयति स्म; निभालय-स्थितिं दम्भरीतिं त्याजयति स्म । १० 'सः' गुरुः ॥

[ ७० ] ११ 'ससंयमः' सबन्धः । १२ 'मानिनि' अहङ्कारिजने; विवेकिनि; हे मानिनि ! । १३ 'कामशर्मणे' कामस्य शर्मणे कामं गाढं शर्मणे । १४ 'ससंयमः' सचारित्रः; सम् सम्यग् यमं युग्मं संयमं तेन सहितः । १५ 'मानिनिकामशर्मणे' मानि मानं ज्ञानमस्मिन्नस्तीति मानि ईदृशं निकाममत्यर्थं शर्म तस्मै मोक्षाय । १६ 'कीदृक् सुदृग्भूषणतामुपैति' कीदृक् सुदृग् भूषणतां सम्यक्त्ववदलङ्कारत्वं याति' कीदृक् सुदृशः स्त्रिया भूषणतां स्तनप्रदेशो याति' कीदृक् सुदृशः पण्डितस्य विवेकादिना भूषणतां याति । १७ 'मुक्ताहारविभूषितः' मुक्ताहारश्चासौ विशेषेण भूम्यामुषितः' मुक्ताहारविभूषितो मरालबालकः, मुक्तानामाहारेण विभूषितः ॥

[ ७१ ] १८ 'वामाङ्गजातिप्रणये' स्त्रीपार्श्वस्नेहे; स्त्रीपुत्रस्नेहे । १९ 'अघनाशने' पापनाशने; बहुभोजने च । २० 'वा' अथवा । २१ 'धीरमते' धीर्मतिः क रमते ?; हे धीरमते, इति सम्बोधने क्रियागुप्तम् । २२ 'महात्मनः' उत्तमस्य मनः; महिम्नः जीवस्य वा महात्मनो जीवस्य जैनस्य वा; महात्मनः उत्सववतः 'अमहात्मनः' इति पदविभागे, क्षुद्रस्य । २३ 'वामाङ्गजातिप्रणये' शैवस्य वामः प्रतिकूलोऽङ्गजः स्मरो यस्य तस्य हरस्य स्नेहे; नृपस्य बिन्दुच्युतके वामाः स्त्रियः गजाश्च सेवा स्नेहे; मालिनः वामा मनोहराऽगजातिर्वृक्षजातिस्तस्याः स्नेहे; महात्मनो महिम्नजीवस्य वा मा प्रतिकूला विषमाऽगजातिः पर्वतश्रेणिस्तत्स्नेहे; महात्मन उत्सववतः मनोज्ञाऽङ्गजातिः स्वजनवर्गस्तत्स्नेहे, अमहात्मनः क्षुद्रस्य मनोज्ञेऽङ्गे देहे जातेर्जन्मनः स्नेहे इत्यपि; नृपस्य वामा स्त्रीरूपा मनोहरा वाऽगजा पार्वती तस्याः स्नेहे; शैवस्य वामा वामभागस्था अगजा पार्वती यस्य तस्येश्वरस्य स्नेहे; नृपस्य वामः प्रतिकूलोऽगजातिप्रणय' पर्वतस्नेहो यस्य तत्र; वामा याऽगजा भवानी तस्यामतिप्रणयो यस्य तस्मिन् जैनस्य प्रणयमतिक्रान्तोऽतिप्रणयः; वामाऽगजा यस्य स वामागजः शिवस्तज्जातिप्रणयो विरागस्तस्मिन् इत्यपि; वाऽथवा मा लक्ष्मीः, अगजः कामस्तयोरतिप्रणयो यस्य तत्र कृष्णे; जैनस्य स्त्रीपुत्रविरागे; मालिनः वामं सुन्दरमङ्गं यस्यास्तस्या जातेर्जातिवृक्षस्य स्नेहे इत्यपि; क्षुद्रस्य वामा प्रतिकूलाऽङ्गजा पार्वती यस्य स दरिद्रस्तेनानिस्नेहे इत्यपि सर्वतोभद्रत्वाद् यथेच्छं व्याख्या । २४ 'घनासने' घनं यदासनं वाहनं यत्र; घनो मुस्ताऽशनो धायाकवृक्षस्तत्र; बहुघनभोजने; बहूनां भोजने; 'अवनाशने' इति पदविभागे स्वघमश्चिवं तन्नाशने; न घनाशने मनोपवासादौ; नृपस्य घनासने इन्द्रे; घनासने ईश्वरे वा; 'अघनाशने' अनह्नुभोजने ॥

[1]कामीहतेऽजः [2]क्षितिपे च कीदृशे बलं [3]महात्मा क बहु क वाऽथ कः ।
कामीह तेजः [4]क्षितिपेचकी दृशे [5]वामाङ्गजातिप्रणये [6]घनासनः ॥ ७२ ॥

[ आदिविषमअन्तरे कालापकम्; व्यस्तसमस्तम् पाठान्तरम् ]

[7]सभाऽनुयोगे [8]नवसौररागतः [9]प्रसृत्वरे [10]द्राक् [11]कमलाऽवबोधने ।
[12]सभानुयोगे [13]नवसौररागतः कथंचमासीत् सुदृशां गुरोर्गणे ॥ ७३ ॥

[14]सितम्बराणामुदयेऽनुरागिणां तथार्हतानामुदिता यशः प्रथा ।
सितम्बराणामुदये [15]नु [16]रागिणां [17]भवोद्धृतानां शशिनां विजित्वरी ॥ ७४ ॥

[18]तपो धनं निर्वृतिसाधनं जयस्तपोगणे सर्वमिदं महोदयः ।
[19]तपोधनं [20]निर्वृतिसा [21]धनञ्जयश्रियं [22]तमीशं समवाप्य [23]दिद्युते ॥ ७५ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
पश्चिमदिग्विजयो नाम सप्तमः सर्गः ॥ ७ ॥



[ ७२ ] १ 'कामीहतेऽजः' अजः कृष्णः कामीहते इच्छति, मां लक्ष्मीं प्रायः कथनात् । २ 'क्षितिपे' भूपे कीदृशे ? । ३ 'महात्मा क बहु क वाऽथकः कामी' महात्मा क कामी अभिलाषी इह लोके तेजो बहु क । [redacted] 'क्षितिपेचकी' क्षितौ पेचकी कः ? 'पुच्छमूलं तु पेचकम्' । 'पेचकः करिलाङ्गूलमूले' इति हैमः [ अने० सं० कां० ३ श्लो० ७१ ] । ५ 'वामाङ्गजातिप्रणये' वाऽव्ययं पादादौ महाचित्रत्वाच्च दुष्टम् "अहह धवलसमीरणदारुणं किमिदमाचरितं चरितं त्वया" इत्यादौ दृश्यतेऽपि, एवमाह "कुशवजलदायीति निषेधे प्रतियोगोऽपि" यद्वा वामां श्रियं भोगेश्वरत्वाद् विष्णोः श्रीपार्श्वदेहे; निन्दुस्युत्कं वामा स्त्रीरूपा या अगजा पार्वती तस्यामतिस्नेहो यस्य तत्र । ६ 'घनासनः' महात्मा कीदृशोऽघनाशनः, घनमासनं स्कन्धो यस्य गजस्य स घनासनः ॥

[ ७३ ] ७ 'सभाऽनुयोगे' सभाव्याख्याने । ८ 'नवसौरागत.' नवो नवीनो यः सूरिसम्बन्धी रागः स्नेहस्तस्मात् । ९ 'प्रसृत्वरे' प्रसृत्वरे प्रसृते सति । १० 'द्राक्' शीघ्रम् । ११ 'कमलाऽवबोधने' कमलप्रकाशने । १२ 'सभानुयोगे' भानूनां रश्मीनां योगः सम्बन्धस्तत्सहिते कस्मात् । १३ 'नवसौररागतः' नवो यः सूरसम्बन्धी रागोऽरुणिमा ततः ॥

[ ७४ ] १४ 'सितम्बराणामुदये' श्वेतपटानां पक्षे सितशुभ्रपक्षमम्बरं गगनं येभ्यस्तेषामुदये । १५ 'नु' वितर्के । १६ 'रागिणाम्' लौहित्यभाजाम् । १७ 'भवोद्धृतानाम्' संसारादुद्धृताः स्याद्वाक्लेषां पक्षे भवनेश्वरेणोर्ध्वंधृतानाम् ॥

[ ७५ ] १८ 'तपो धनं निर्वृतिसाधनं जय इदं सर्वं तपोगणेऽभूद्' इत्यन्वयः । १९ 'तपोधनम्' तप एव धनं यस्य तम् । २० 'निर्वृतिसा' निर्वृतिः सा सुखलक्ष्मीः । २१ 'धनञ्जयश्रियम्' धनञ्जयोऽर्जुनस्तद्वदथवाऽग्निस्तद्वत् श्रीर्यस्य तम् । २२ 'तमीशं समवाप्य' तं ईशं स्वामिनं प्राप्य । २३ 'दिद्युते' दिदीपे ॥

इति श्रीदिग्विजयकाव्ये महोपाध्यायश्रीमेघविजयगणिकृते सप्तमसर्गविवरणम् ।

# अष्टमः सर्गः ।

अथ विक्रमभूपतेः क्रमाच्छरदां त्यष्टि[१७]शतव्यतिक्रमे ।
मुनिराड् मुनि[७]राम[३]वत्सरे शिवपुर्यां विदधे गुरुस्थितिम् ॥ १ ॥
शिवसंनिधिनेव यत्पुरे शिवरागः शिवमव्ययं हितम् ।
शिवपाठरुचिर्द्विजन्मनां विदिता तच्छिवपुर्यसाविति ॥ २ ॥
अलकाऽप्यलकायते त्विषा पुरतोऽस्याः सुरतोत्सवाऽऽगमे ।
नगरी न गरीयसी दिवः प्रतिभाति प्रतिभाऽतिशायिनाम् ॥ ३ ॥
भवनं नवनन्दनश्रिया रहितं यत्र न किञ्चिदीक्ष्यते ।
घनमप्यरविन्दलोचनातनुरम्भाऽधिकरूपसम्पदा ॥ ४ ॥
कलिना बलिनाऽपचिन्वता सुकृतस्याद्भुतवैभवं द्विधा ।
पुरमव्ययशर्मबन्धुरं न परामृष्टमदुष्टदुर्णयम् ॥ ५ ॥
तनुजैरदितेर्महाभुजैर्दनुजैर्वा मनुजैरसौ पुरी ।
ननु जैनविहारभासुरा मनसा सौमनसाञ्च कैर्धृता ॥ ६ ॥
रमणी रमणीयतावलान्न कलाकेलिरसं व्यमुञ्चत ।
रतिरप्यतिशायिनी जने सकला केलिकला स्वतः स्थिरा ॥ ७ ॥

---

[२] १ 'शिवसंनिधिनेव' शिवस्य हरस्य सारणेश्वरमूर्तेः सामीप्येन, धर्मकर्मणामस्याद्दूरे शिवस्य मोक्षस्य सामीप्येनेवेत्युत्प्रेक्षा । २ 'शिवरागः' शिवस्य मोक्षस्य रागः, "शिवस्य मध्यध्याने स्वात्मात्मानं ध्यात्वा" इति वचनात् शान्तरूपस्य राग इत्येवं समर्थनीयम् "शिवं तु मोक्षे क्षेमे सुखे जले, शिवो योगान्तरे वेदे गुग्गुलौ वालुके हरे पुण्डरीकद्रुमे कीले, शिवा शाटामलोमयोः" इति हैमः [ अने० सं० कां० २ श्लो० ५५०–५५१ ] । ३ 'शिवम्' क्षेमम् । ४ 'हितम्' हितकृत् । ५ 'शिवपाठरुचिः' शिवस्य वेदस्य पाठस्तस्मिन् रुचिः प्रीतिः । ६ 'विदिता' ख्याता ।

[४] ७ "नवनन्दनश्रिया" नवा ये नन्दनाः पुत्रास्तेषां श्रिया; वनपक्षे नन्दनं नाम देववनं तस्य श्रिया "नन्दनं वनम्" इति हैमः [ अभि० चिं० कां० २ श्लो० ९२ ] । ८ "अरविन्दलोचनातनुरम्भाऽधिकरूपसम्पदा" अरविन्दान्येव लोचनानि यद्वाऽरविन्दानां रोचना शोभाऽतनवो महत्यो या रम्भास्तासां यदधिकं रूपं सैव संपत् तया; भवनपक्षेऽरविन्दलोचनानां स्त्रीणां तनौ रम्भा देववनिताख्याप्योऽतिशायिरूपलक्ष्म्या ।

[५] ९ "सुकृतस्य" पुण्यस्य कृतयुगस्य वा ।

---

[1] 1 'त्यष्टि°' त्यष्टिः सप्तदश "अथ सप्तदश त्यष्टिः" इत्यङ्कसंज्ञा । 2 'मुनिरामवत्सरे' मुनयः सप्त "मुनिपर्वतशैलादिसप्ताचलनगाः स्मृताः" रामाः त्रयः "कृशानुगुणरामाग्निपावकानलवह्नयः" इत्यङ्कसंज्ञा । 3 "शिवपुर्याम्" आधुनिक'सिरोही'ति प्रसिद्धनगर्याम् । 4 'गुरुस्थितिम्' चातुर्मासिकावस्थानम् ।

[3] 5 "अलका" अलं भूषयतीत्यलका, "अलका वस्वोकसारा" इति हैमः [ अभि० चि० कां० २ श्लो० १०५ ] । "पुर्योऽमरावती भोगावती" इत्यरिसिंहः [ काव्यकल्पलतावृत्तिः, प्रतानः ४ स्तबकः ४ श्लो० २४२ ] 6 "सुरत०" सुरतं मोहनम्, "सुरतं मोहनं रतम्" इति हैमः [ अभि० चिं० कां० ३ श्लो० २०० ] ॥

[5] 7 "कलिना" कलिश्चतुर्थो युगस्तेन । 8 "अपचिन्वता" अपहर्त्रा । 9 "अव्ययशर्मबन्धुरम्" अक्षीणसुखशोभनम् । 10 "परामृष्टम्" भृशं चिन्तितम् ॥

[6] 11 "तनुजैः" पुत्रैः । 12 "अदितेः" पुनर्वसुनक्षत्रस्याधिष्ठातृदेवस्य । 13 "दनुजैः" असुरैः, "असुरा दैत्यदैतेयदनुजेन्द्रा०" इत्यमरः [ अमर० कां० १ श्लो० १२ ] "दैत्ये दितेर्दनोः पुनाः" इत्यरिसिंहः [ काव्यकल्पलतावृत्तिः, प्रतानः २, स्तबकः २, श्लो० ५८ ] ।

न विना [1]कविनाऽभिधीयते [2]विधिना[3]ऽस्या [4]विधिनाऽखिलस्तुतिः ।
सफलीक्रियतां ततः स्ववाक् [5]सुधिया तद्विषयांशवर्णनात् ॥ ८ ॥
गुरुणा [6]करुणाऽरुणाऽऽत्मना शिवरूपेण [7]महाव्रतश्रिया ।
गिरिभूरिह भूपिताऽऽश्रयान्न नृणामभ्युदये तदद्भुतम् ॥ ९ ॥
शिवसङ्गतरङ्गयोगतः प्रभया संयुत एव तत्पुरे ।
[8]धनदः किमुपेयिवान् नृपप्रतिकृत्योत्तरलोकपालकः ॥ १० ॥
नगरी [10]नगरीतिबृंहितैर्धनिनां शुभ्रतरैर्निकेतनैः ।
समराजत [11]राजताऽद्रिणा सह वादं सृजतीव [12]केतनैः ॥ ११ ॥
गगने [13]गगनाध्ववाजिनां [14]सुरसिन्धोस्तटशष्पभोजने ।
जनयन्ति जिनालया रयाज्जिनकेतूच्छलनेन चालनाम् ॥ १२ ॥
परितः [16]सरितां पतिर्बभौ निशि [17]चान्द्रोपलनिर्गलज्जलैः ।
तमुदीक्ष्य सुराऽऽपगाऽप्यगाज्जिनचैत्यध्वजकेतवाद् दिवः ॥ १३ ॥
वसुधास्थलमीयुषी सुधा विबुधानामभिषिञ्चनेऽर्हताम् ।
किमु [18]कैतवकैतवान्नृणां नयनाऽऽनन्दनिदानदानतः ॥ १४ ॥
शिखरेषु [19]जिनौकसां धृतान् [20]नवगाङ्गेयमयाँल्लसत्त्विषः ।
कलशानिव पूरितुं दिवो ननु गङ्गाऽवतरद् ध्वजश्रिया ॥ १५ ॥
सकलं धवलं भुवस्तलं विदधे चैत्यसुधा नवच्छविः ।
गगनेऽपि तथा [21]विधित्सया ध्वजरूपाऽभ्युदियाय साऽ[22]वशा ॥ १६ ॥

[ ८ ] १ "तद्विषयांशवर्णनात्" तद्विषयस्तद्गोचरो य अंशो भागः प्रदेशविशेषः ।

[ ९ ] २ "गिरिभूः" पर्वतभूमिः नगरे तत्सामीप्यात् पक्षे गिरिभूर्भवानी ।

[ १० ] ३ "शिवसङ्ग" शिवस्य सङ्गतं मैत्री यद्वा प्रसङ्गपाटुत्वम् । ४ "प्रभया" अलकानगर्या कान्त्या वा । ५ "नृपप्रतिकृत्या" राज्ञः प्रतिबिम्बेन । ६ "उत्तर०" उत्तरस्या उत्तरः श्रेष्ठो वा ।

[ ११ ] ७ "नगरीतिबृंहितैः" पर्वतवद् वृद्धैः ॥

[ १४ ] ८ "कैतवकैतवात्" केतूनां समूहः कैतवं तस्य कैतवाद् व्याजात् ।

[8] 1 "कविना" शुक्रेण "शुक्रो मघाभवः काव्य उशना भार्गवः कविः" इति हैमः [ अभि० चिं० कां० २ श्लो० ३१ ]। 2 "विधिना" धात्रा "धाता विधाता विधिः" इति हैमः [ अभि० चिं० कां० २ श्लो० १२६ ] । 3 "अस्याः" पुर्याः । 4 "विधिना" विधानपूर्वकेण । 5 "सुधिया" विदुषा ॥

[9] 6 "करुणाऽरुणाऽऽत्मना" करुणा दया तया बालसन्ध्यारागाऽऽत्मना । 7 "महाव्रतश्रिया" अहिंसा सत्य अस्तेय ब्रह्मचर्य-अपरिग्रहरूपलक्ष्म्या ॥

[10] 8 "धनदः" कुबेरः । 9 "उपेयिवान्" आगतः ॥

[11] 10 "निकेतनैः" गृहैः । 11 "राजताऽद्रिणा" अष्टापदपर्वतेन । 12 "केतनैः" ध्वजैः ॥

[12] 13 "गगनाध्ववाजिनाम्" आकाशमार्गाश्वानाम् । 14 "सुरसिन्धोः" स्वर्गङ्गायाः । 15 "°शष्प°" शष्पं तृणम् ।

[13] 16 "सरितां पतिः" समुद्रः । 17 "चान्द्रोपल०" चन्द्रस्यायं चान्द्र उपलः मणिः, चन्द्रमणिः । 18 "°कैतवाद्" व्याजात् ॥

[15] 19 "जिनौकसाम्" जिनमन्दिराणाम् । 20 "नवगाङ्गेयमयान्" नवीनसुवर्णयुक्तान् ।

[16] 21 "विधित्सया" विधातुमिच्छया । 22 "अवशा" स्वतन्त्रा ।

चरितं सरितः सुधाभुजां दुरितादङ्कुरितं धनास्थिजात् ।
तदिव व्यपनेतुमाययौ ध्वजवेषा हरशेखराऽपरा ॥ १७ ॥
कलशैः किल शैवलोपमे गगनाम्भोधेस्तिमिरे व्यपाकृते ।
स्फुरितेव सुधामयी प्रभा परितः केतुमिषाद् विषादहृत् ॥ १८ ॥
हिमवच्छिखरैः सुहृत्क्रिया विदधे चैत्यगणेन शाश्वती ।
अत एव सुराऽऽपगाऽप्ययादनुनेतुं तमथो ध्वजच्छलात् ॥ १९ ॥
प्रथमं प्रमथेशमाश्रयद्दपिकल्पः स तु रुद्ररूपभाक् ।
इति सङ्कुचितेव सा लघुर्ध्वजरूपाऽऽर्हतसद्मसङ्गता ॥ २० ॥
कविधीरिव सर्वतोमुखी जनतापच्छिदि चन्द्रगोलिका ।
मरुदन्वयिनीश्वरेव या ध्वजराजिर्मुदेऽस्तु कस्य सा ॥ २१ ॥

[ इति ध्वजवर्णनम् ]

मणिनिर्मितनर्महर्म्यजा द्युतिरन्वास्त मिथोऽत्र सङ्करम् ।
न पुपोष परं प्रदोषकं रसगोष्ठी जनसङ्कुले कुले ॥ २२ ॥
अहरन् नवचन्द्रशालिकाद्युतयो दर्शतमिस्रकालिकाः ।
न विवेद विभेदमालिका रमणे पक्षयुगेऽपि बालिका ॥ २३ ॥
दयिता दयिताङ्कगा क्षणान्मणिभित्तिप्रतिबिम्बितेक्षणात् ।
सहसापि सकोपलक्षणा न जहौ मैथुनमम्बुजेक्षणा ॥ २४ ॥
मणिकुट्टिमरङ्गसङ्गमे शतधा स्वस्य धवस्य बिम्बितैः ।
भयविस्मयसाहसान्विता वनिता स्वाऽऽलिजनेन हस्यते ॥ २५ ॥
नवनीलमणीरुचां चयैर्निचिता यत्र तमीव शाश्वती ।
धुतमानतया निशात्ययेऽपि च भीतिर्न वधूषु भास्वती ॥ २६ ॥

---

[ १७ ] १ "धनास्थिजात्" धनानि यान्यस्थीनि तेभ्यः संजातात् ।

[ २१ ] २ "जनतापच्छिदि" जनानां तापो जनताया आपद् वा तं छिनत्तीति जनतापच्छित् तस्मिन् ॥

[ २२ ] ३ "प्रदोषकम्" सन्ध्यासमयम्, "प्रदोषो रजनीमुखम्" इत्यमरः [ अमर० कां० १ श्लो० ११३ ] परस्परजातिसाङ्कर्यदोषं वा ।

[ २४ ] ४ "न जहौ मैथुनम्" धाष्ट्याद् मैथुनात्यागः ।

---

[ 17 ] 1 "सुधाभुजाम्" देवानाम् । 2 "व्यपनेतुम्" दूरीकर्तुम् । 3 "हरशेखरा" शिवमस्तका ॥

[ 18 ] 4 "शैवलोपमे" शेवालसदृशे "शेवालं शैवलं शेपालम्" इति हैमः [ अभि० चिं० कां० ४ श्लो० २३३ ] । 5 "व्यपाकृते" दूरीकृते । 6 "विषादहृत्" ग्लानिनाशिका ॥

[ 19 ] 7 "अनुनेतुम्" प्रसादितुम् । 8 "तम्" चैत्यगणम् ।

[ 20 ] 9 "प्रमथेशम्" शिवम्, "प्रमथाः पार्षदा गणाः" इति हैमः [ अभि० चिं० कां० २ श्लो० ११५ ] । 10 "रुद्ररूपभाक्" शिवस्वरूपी । 11 "आर्हतसद्मसङ्गता" जिनमन्दिरयुक्ता ॥

[ 21 ] 12 "चन्द्रगोलिका" चन्द्रभित्तिका; "मुसली गोधिका गोलिके गृहात्" इति हैमः [ अभि० चिं० कां० ४ श्लो० ३६३ ] ।

[ 22 ] 13 "हर्म्यजा" प्रासादजाता । 14 "सङ्करम्" समुत्कीर्यतेऽसौ सङ्करस्तम् । 15 "रसगोष्ठी" रसवार्ता ।

[ 23 ] 16 "दर्शतमिस्रकालिकाः" अमावास्यान्धकारवच्छ्यामिका, "अमाऽमावस्यमावस्या दर्शः सूर्येन्दुसङ्गमः" इति हैमः [ अभि० चिं० कां० २ श्लो० ६४ ] । 17 "आलिका" सखी ॥

[ 24 ] 18 "दयिताङ्कगा" प्रियक्रोडगता । 19 "अम्बुजेक्षणा" कमललोचना ॥

[ 25 ] 20 "मणिकुट्टिम०" मणिभिः कुट्टिमं गृहस्य बद्धा भूमिः । 21 "धवस्य" नायस्य । 22 "स्वालिजनेन" स्वकीयसखीजनेन ॥

[ 26 ] 23 "नवनीलमणिरुचां चयैः" नवीनेन्द्रनीलदीप्तीनां समूहैः, "नीलमणिस्त्विन्द्रनीलः" इत्यमरः [ अभि० चिं० कां० ४ श्लो० १३१ ] । 24 "तमी" रात्रिः । 25 "निशात्यये" रात्रिविरामे ॥

प्रतिबिम्ब यथास्थलस्थितैस्तदलङ्कारमणीगणैर्वधूः ।
अनलङ्कृतमङ्गमात्मनो बुबुधे न स्मरविस्मयाऽऽकुला ॥ २७ ॥
प्रतिवेश्म महोत्सवादहर्निशमाहूतसगोत्रभुक्तिषु ।
सुहितो खेचनीवनीपकः पुरि यस्यामवनीपति स्वतः ॥ २८ ॥
नवहर्म्यशिरस्सु काञ्चनैः कुसुमैर्नीलमणीदलस्थितैः ।
सुमनोभिरसौ हि वीरुधां हरिभिर्निजगृहे समावभौ ॥ २९ ॥
सुदती सुदती नृणां मनः कमनव्यासभृतां जलाशये ।
मुखमम्बुरुहां वनान्तरे नृपरूपं दधती मुदेऽभवत् ॥ ३० ॥
समवापि मयाऽपि वापिका चतुरैः कैरिह न सराऽऽतुरैः ।
सुदृशां जलमज्जने श्रिता कमलाऽऽभां वदनैरनार्तवाम् ॥ ३१ ॥

[ इति नगरभवन-वन-वापी-सरोवर्णनम् ]

अथ तत्र पुरे सुरेशितुर्महनीयः किरणैरहर्मणिः ।
उदियाय जयाय तीर्थकृत् प्रभुपार्श्वः प्रतिमास्वरूपतः ॥ ३२ ॥
विपयैर्विपर्यीकृते शुभैर्विपये निर्विपयीकृताशुभे ।
सुकृताभ्युदयाय भूस्पृशामुदियाय प्रतिमाऽश्वसेनभूः ॥ ३३ ॥ [ पाठान्तरम् ]
जनता बहुधेष्टपूरणात् स हि शङ्खेश्वर एव शाश्वतः ।
कुरुते गुरुतेजसाऽऽत्मनां बहुशः खेश्वरदेवभास्वतः ॥ ३४ ॥
भरतार्द्धपतिः पुरा हरिः पुरि शङ्खेश्वरनाम्नप्रतिष्ठिपत् ।
पंकुभां विजये जिनेश्वरं स्वरसात् पार्श्वमतीव भास्वरम् ॥ ३५ ॥
अभिधानविधिस्ततोऽर्हतः स्मरणीयोऽस्य पुरा पुरानुगः ।
अथ तीर्थमिहापि पप्रथे प्रतिबिम्बेऽतिशयप्रभावतः ॥ ३६ ॥

---

[ २८ ] १ "सुहितः" तृप्तः, "तृप्ते त्वाघ्रातसुहिताऽऽहिताः" इति हैमः [ अभि० चिं० कां० ३ श्लो० ९० ] । २ "वनीपकः" पृथिव्या मार्गणः "याचकस्तु वनीपकः" इति हैमः [ अभि० चिं० कां० ३ श्लो० ५१ ] । ३ "अवनीपति" अवनीव इवाऽऽचरतीत्यवनीपति क्विप् ॥

[ ३० ] ४ "अम्बुरुहाम्" कमलानाम् । ५ "नृपरूपं दधती" राजवद्-मुखं प्रकाशयन्ती ॥

---

अत्र "[illegible]" इति काव्य-कल्पलतावृत्तौ [ प्र० ४ स्त० ५ ] [illegible] नीलमणिषु भ्रमेण [illegible] परिकल्प्य [illegible] दर्शते ।

[ 29 ] 1 "नवहर्म्यशिरस्सु" नवीनप्रासादशिखरेषु । 2 "कमलगृहे" [illegible] । 3 "सुमनोभिः" पुष्पैः । 4 "वीरुधाम्" लतानाम् । 5 "हरिभिः" [illegible] । 6 "निजगृहे" [illegible] ।

[ 30 ] 7 "सुदती" शोभनदन्ती । 8 "कमनव्यासभृताम्" [illegible] ॥

[ 31 ] 9 "सराऽऽतुरैः" कामपीडितैः । 10 "अनार्तवाम्" अनीहिताम् ॥

[ 32 ] 11 "महनीयः" तेजस्वी । 12 "अहर्मणिः" सूर्यः ।

[ 33 ] 13 "विपर्यीकृते" गोचरीकृते, "विषयोऽन्य यो ज्ञानमात्र गोचरेन्द्रियोः ग्रामादौ जनपदे च" इति हैमः [ अने० चं० कां० श्लो० ] । 14 "भूस्पृशाम्" मानवानाम् । 15 "अश्वसेनभूः" पार्श्वनाथः ॥

[ 35 ] 16 "हरिः" कृष्णः । 17 "पंकुभाम्" दिशाम् ॥

[ 36 ] 18 "पुरानुगः" पूर्वानुगतः । 19 "पप्रथे" विस्तार ॥

भगवान् समुदेत्यहर्पतिर्विषयांस्तद्विषयान् प्रकाशयन् ।
क्वचिदम्बुधरोपरोधने मधुरा वा विधुराऽऽतपक्रिया ॥ ३७ ॥
नयभावनयाऽनया भवेद् विभवस्तीर्थपमूर्त्तितेजसः ।
भुवनेष्वपि तारतम्यवाँस्तनुभाजां ननु दैवसङ्गतेः ॥ ३८ ॥
सुरसंनिधिरत्र सन् निधिर्महसामीहितपूरणं नृणाम् ।
त्रिजगज्जनपूजनं वपुः कमला कोमलतापि तादृशी ॥ ३९ ॥
विदितं तदितोऽदितेर्दितेस्तनयैस्सद्भिनयैर्निषेवितम् ।
वरतीर्थमनन्तशर्म्मदं भुवि शङ्खेश्वरपार्श्वशर्म्मणा ॥ ४० ॥
अभिधामभिधारणं श्रियां शिवपुर्यां हृदि भावयन्निव ।
जननमणयादशिश्रियन्नगरीं तामुचितां जगद्गुरुः ॥ ४१ ॥

[ इति श्रीभगवत्प्रतिमावर्णनम् ]

चलनद्वितयी भृशं बभौ दृढपद्मासननिश्चितप्रभोः ।
कमलोदयनिलययोधनं निदिशन्तीव निजोपजीविनाम् ॥ ४२ ॥
गतिहेतुपदद्वयोन्मुखीभवनेऽवादि किमत्र लक्षणैः ।
भगवद्भजनेन चक्रिताद्युपलब्धिर्नियतोर्ध्वगामिता ॥ ४३ ॥
चरणारुणिमाऽनणुश्रिया नववैराग्यजितः सिसेविषुः ।
मुमुचेऽङ्घ्रितलं कदापि नो ननु रागः स्वपरागसच्छिदे ॥ ४४ ॥
पुरतो मरुतां स्मितानना: प्रभुसौभाग्यदिदृक्षया स्थिराः ।
अयमङ्घ्रितलेऽनुबिम्बितः खलु तासामनुरागनिर्भरः ॥ ४५ ॥
अथ एव विधीयते द्विधा भवरागः प्रभुणा तथाप्यहो ।
उदयश्चरणेऽनुरागतः सुदृशामित्यवदत् तलं किमु ॥ ४६ ॥
भगवच्चरणद्वये ध्रुवं नयनालीकरुचिर्व्यजृम्भत ।
अत एव परागभागजा परमा रागदशा प्रसारिणी ॥ ४७ ॥
प्रभुणा जयता मनोभुवं यदुपासङ्गयुगं बलाहृतम् ।
तदिदं पदसम्पदा बभौ स्फुटपञ्चाङ्गुलिमार्गणाङ्कितम् ॥ ४८ ॥

---

[ ४२ ] १ "लक्षणैः" चक्रादिभिः" ।
[ ४५ ] २ "भवरागः" भवस्य संसारस्येश्वरस्य वा रागः ।
[ ४८ ] ३ "उपासङ्गयुगम्" उपासङ्गं शराश्रयः-तूणीर-युगलम् । "तूणो निषङ्गस्तूणीर उपासङ्गः शराश्रयः" इति हैमः [ अभि० चिं० कां० ३ श्लो० ४४५ ]

---

[ 37 ] 1 "अहर्पतिः" सूर्यः । 2 "विषयान्" देशान् । 3 "तद्विषयान्" तत्पदार्थान् ॥
[ 38 ] 4 "नयभावनया" नैगमादिसप्तनयभावनया ।
[ 40 ] 5 "अदितेः" पुनर्वसुनक्षत्राधिष्ठातृदेवस्य । 6 "दितेः" दैत्यमातुः ।
[ 41 ] 7 "शिवपुर्याः" आधुनिकसिरोहीनगर्याः । 8 "जगद्गुरुः" श्रीविजयप्रभसूरिः ॥
[ 41 ] 9 "चलनद्वितयी" क्रमद्वयी । 10 ""बोधनम्" विकासम् । 11 "निजोपजीविनाम्" स्वसेवकानाम् ॥
[ 42 ] 12 "चक्रिताद्युपलब्धिः" चक्रवर्तित्वादिप्राप्तिः ।
[ 43 ] 13 "अनणुश्रिया" महालक्ष्म्या । 14 "सिसेविषुः" सेवितुमिच्छुः । 15 "स्वपरागसच्छिदे" स्वपरपापनाशाय ॥
[ 44 ] 16 "मरुताम्" देवानाम् । 17 "स्मितानना:" हर्षितवदनाः स्त्रियो देव्य इत्यर्थः । 18 "तासाम्" देवीनाम् ।
[ 48 ] 19 "मनोभुवम्" कामदेवम् । 20 ""मार्गणाङ्कितम्" बाणैरङ्कितम् ॥

करपद्मयुगोपसम्पदा चरणाब्जे वदतः किमुन्मुखे ।
निवसन्ति चतुर्विधा अपि चेतुराशाब्धिभुवोऽत्र नित्यशः ॥ ४९ ॥
नखरैः खररश्मयो जिता जडजातिप्रभया कलाभृतः ।
चरणद्वितयेन चक्रिणा हरिणेव स्फुटमाहतं तमः ॥ ५० ॥
विनतेन्द्रसुवर्णमौलिजद्युतिलक्षेशपदाम्बुजन्मना ।
नलिनं तुलयेन्न तन्न तद्विधिनाऽऽधीयत किं वराटकः ॥ ५१ ॥
[ इति चरणकमलवर्णनम् ]

भुजयोर्विजयोर्जितश्रिया विभुमूर्त्तिः शुशुभेऽशुभारिणी ।
मरुतां सरितः प्रवाहयोरिव युक्तिः करपद्मशालिनी ॥ ५२ ॥
हृदि दुग्धमहोदधिर्विभोर्धवलध्यानविधेर्विसृत्वरः ।
भुजमध्यमपाणियोजनैरिव वेलालहरीमरीरमत् ॥ ५३ ॥
अभिषेकविधौ द्युसद्मनां पयसां पूर इवेश्वराङ्गतः ।
स्थिरतां समुपेत्य दिद्युते विपुलोत्सङ्गसरःस्वरूपतः ॥ ५४ ॥
वदनेन कलाभृता विभोर्जनतापापहरी द्विधाऽप्यसौ ।
किमु तानि विशिष्य कौमुदी सहसाऽङ्के कुमुदावबोधनी ॥ ५५ ॥
गलकन्दलमालिकामिषादवतीर्णा त्रिदशाऽऽपगा नगात् ।
विपुलस्थलमङ्कशोभया समवाप्य प्रससार सारसात् ॥ ५६ ॥
इह दुग्धपयोनिधिः स्वयं भजते नैव कदाऽपि विक्रियाम् ।
मुनिभर्त्तुरिवाङ्कवर्ष्मणा भजनायाः फलमेतदुज्ज्वलम् ॥ ५७ ॥
समवेक्ष्य मुनीन्दुमानसं धवलध्यानजलेन पूरितम् ।
किमियाय सरोऽपि मानसं तदिहाङ्कोपधिनेव सौहृदात् ॥ ५८ ॥

---

[ ५१ ] १ "वराटकः" पद्मबीजकोशः कपर्दको वा, वराटकः "पद्मबीजकोशे रज्जौ कपर्दके" इति हैमः [ अने० सं० ४ श्लो० ३२ ]

---

[ 49 ] 1 "चतुराशाब्धिभुवः" चतुर्दिग्सागरभूमयः ।

[ 50 ] 2 "नखरैः" नखैः । 3 "जडजातिप्रभया" कमलातिशायिलक्ष्म्या । 4 "कलाभृतः" चन्द्राः । 5 "हरिणा" इन्द्रेण । 6 "तमः" पापं राहुश्च ॥

[ 52 ] 7 "मरुतां सरितः" स्वर्गङ्गायाः । 8 "युक्तिः" योजनम्, "युक्तिर्न्याये योजने च" इति हैमः [ अने० सं० का० २ श्लो० १५३ ]

[ 53 ] 9 "धवलध्यानविधेः" शुक्लध्यानविधेः । 10 "विसृत्वरः" प्रसारी । "विसृत्वरः विसृमरः प्रसारी च विसारिणि" इत्यमरः [ अमर० का० ३ श्लो० १०४३ ] 11 "अरीरमत्" अतिशयेनारमत्, 'रमिं क्रीडाया'मिति धातोर्ण्यन्ताल्लुङ्यद्यतन्या रूपम् ॥

[ 54 ] 12 "द्युसद्मनाम्" देवानाम् । 13 "विपुलोत्सङ्गसरःस्वरूपतः" विस्तृतक्रोडसरोरूपी, "पूर्वभाग उपस्थोऽङ्कः क्रोड उत्सङ्ग इत्यपि" इति हैमः [ अभि० चिं० का० ३ श्लो० २६६ ] ॥

[ 56 ] 14 "त्रिदशाऽऽपगा" स्वर्गङ्गा । 15 "नगात्" पर्वतात् ॥

[ 57 ] 16 "मुनिभर्त्तुः" तीर्थकृतः । 17 "अङ्कवर्ष्मणा" उत्सङ्गशरीरेण ॥

[ 58 ] 18 "इयाय" जगाम । 19 "सरोऽपि मानसम्" हिमालयस्थमानससरोवरमपि चित्तं सरोरूपमपि वा ॥

कमलाऽभ्युदिता न नीरधेर्न पुनः पङ्कजमेतदाश्रयः ।
इयमङ्कपयोधिजा विभोर्ध्रुवमास्तेऽह्निकराम्बुजन्मसु ॥ ५९ ॥
तरसा तरणाय जन्मिनां भवसिन्धोः किमिवाङ्करूपभृत् ।
विभुना वहनं पट्टकृतं तदमुष्मिन् खलु कोटिपात्रतां ॥ ६० ॥

[ इति भगवत्प्रतिमाया मध्यभागवर्णनम् ]

अरुचद् मरुदर्चितं विभोः प्रतिमाने विपुलं भुजान्तरम् ।
भुवनाद्भुतकेवलश्रिया रमणायेव कृतं जगत्कृता ॥ ६१ ॥
मसृणैर्घुसृणानुलेपनैर्निदधे वीसिरहर्मुखोचिता ।
नवकेवलभानुमालिनोऽभ्युदयस्थानतयेव वक्षसा ॥ ६२ ॥
हृदयं हृदयङ्गमं नृणां सदयं धीररुचेर्द्विधाऽऽश्रयम् ।
परिभावयतीव पीवरप्रभुभक्त्या हि महोन्नतिं श्रियाः ॥ ६३ ॥
नवरश्मिकलापशालिनी द्विविधा काऽपि विभा विभावसोः ।
विजयेन जगत्त्रयी भुवां हृदि शम्भोर्मुदमुन्निनीषति ॥ ६४ ॥
परिधापनिकानिकाचितैर्विलसत्काञ्चनरत्नभूषणैः ।
हृदये प्रतिबिम्बितैर्विभोर्भुवि विश्वम्भरतेव दिद्युते ॥ ६५ ॥
कमला जडजाऽऽश्रयेत् पदः किल कौलीनमपाचिकीर्षति ।
बहुधैर्यविबोधशालिनि हृदि देवस्य पदार्थसङ्क्रमैः ॥ ६६ ॥
स्मितसौमनसस्रजां मिषाद् हृदये सौमनसं जगत्त्रये ।
प्रकटीभवति स्म विस्मयान्मुनिराजोऽङ्गभृतां हितैषिणः ॥ ६७ ॥

[ इति वक्षःस्थलवर्णनम् । ]

जिनकण्ठतटी पटीयसी महसा निर्मलवृत्तरूपतः ।
वदतीव तथाप्ररूपणा ध्वनिसन्धानपदत्वमात्मना ॥ ६८ ॥

---

[ ६० ] १ "कोटिपात्रता" के निपातः (?) कोटिपात्रं पक्षे कोटिगुणपात्रत्वम् ।

[ ६५ ] २ "परिधापनिका" जिनमूर्तेः संनिहिता वक्षाऽऽभरणपूजा ।

---

[ 59 ] 1 "कमला" लक्ष्मीः । 2 "नीरधेः" समुद्रात् "लक्ष्मीः समुद्रादुत्पन्नेति पुराण-कथा प्रसिद्धाऽस्ति" । 3 "अङ्कपयोधिजा" क्रोडरूपसमुद्राज्जाता ॥

[ 60 ] 4 "तरसा" शीघ्रम् । 5 "तरणाय" तरीतुम् । 6 "वहनम्" पोतः, "बोहित्थं वहनं पोतः" इति हैमः [ अभि० चि० कां० ३ श्लो० ५४० ] । 7 "पट्टकृतम्" अपट्टः पट्टकृतमिति गतिशीघ्रस्य कृतम् ॥

[ 61 ] 8 "मरुदर्चितम्" देवपूजितम् । 9 "केवलश्रिया" केवलज्ञानरूपलक्ष्म्या । 10 "जगत्कृता" ब्रह्मणा ॥

[ 62 ] 11 "मसृणैः" स्निग्धैः, "स्निग्धे मसृणचिक्कणे" इति हैमः [ अभि० चि० कां० ३ श्लो० ७७ ] 12 "घुसृणानुलेपनैः" लोहितचन्दनविलेपनैः "काश्मीरजन्म घुसृणं वर्णं लोहितचन्दनम्" इति हैमः [ अभि० चि० कां० ३ श्लो० ३०८ ] । 13 "अहर्मुखोचिता" प्रभातयोग्या, "प्रभातं स्यादहर्मुखम्" इति हैमः [ अभि० चिं० कां० २ श्लो० ५२ ] । 14 "नवकेवलभानुमालिनः" नवीनकेवलज्ञानरूपसूर्यस्य ॥

[ 64 ] 15 "विभा" प्रभा कान्तिरित्यर्थः । 16 विभावसोः सूर्यस्य । 17 "शम्भोः" प्रभोः ।

[ 66 ] 18 "कौलीनम्" जनप्रवादम्, "जनप्रवादः कौलीनं विगानं वचनीयता" इति हैमः [ अभि० चिं० कां० २ श्लो० १८४ ] । 19 "अपाचिकीर्षति" अपाकर्तुमिच्छतीति–दूरीकरोतीत्यर्थः ॥

[ 67 ] 20 "स्मितसौमनसस्रजाम्" हास्यरूपकुसुममालानाम् ।

त्रिपदी त्रिजगद्विशुद्धये त्रिपथेव प्रससाद साऽऽदरा ।
इत एव जगत्पतिरिति स्फुटरेखात्रितयाङ्कवान् गलः ॥ ६९ ॥
रमते सततं गलस्थले विनिधायेव निजं भुजद्वयम् ।
विभुना वरशुक्लधारणा वनिता सौमनसस्रजश्छलात् ॥ ७० ॥
गलकन्दलशोभयेशितुर्विजितः कम्बुरनम्बुमेघवत् ।
ध्वनिमातनुते विशीर्णहृत् प्रतिवेश्म भ्रमभिक्षुहस्तगः ॥ ७१ ॥
स्वरसात् स्वरसार्थमाधुरी त्रिविधाऽऽस्थायमिदं गलस्थलम् ।
जनरञ्जनहेतुरीशितुर्विधिनैतत् त्रिरुदीक्ष्य रेखितम् ॥ ७२ ॥
यदि वाऽत्र समुद्भवद्ध्वनेर्मननं संवरणं तथा रुचिः ।
त्रयमभ्युदयाय जायते गलरेखात्रयमित्यवीवदत् ॥ ७३ ॥
भगवन्मुखचन्द्रमण्डलादिव सुस्राव सुधा त्रिधा रयात् ।
तत एव गले त्रिरेखिका त्रिदशैः स्निग्धतया निपीयते ॥ ७४ ॥
धृतरेखतया त्रिधोपमात्रितयं कण्ठतटी जिगाय सा ।
महसा (१) कृतितः (२) स्वरोदया (३) च्छशिनं (१) कम्बुवरं (२) सुधारसम् (३) ॥७५॥
जडधीष्टतनूद्भवः स्वयं बहुधाऽऽवर्त्तविवर्त्तितान्तरः ।
कथमेत्युपमां हि वारिजः शुभकण्ठस्य समग्रवेदिनः ॥ ७६ ॥
वदनं विधुरेखसोदरः कमलाभोगधरः करः प्रभोः ।
किमितीव विमृश्य वारिजो विरराजेव गलस्थलच्छलात् ॥ ७७ ॥
जलधिर्ध्वनिनाऽवधीरितः शशभृद् भूत्य इवाऽऽननश्रिया ।
इति नाथगलस्य लीलया वरकम्बोर्विजये सहायता ॥ ७८ ॥
मणिभर्त्तुरतः पुरोद्भवन् ध्वनिरेव प्रसृतः सुराध्वनि ।
जलधेर्विजयी तदङ्गभूरिह शङ्खस्तुलयेद् गलेन किम् ॥ ७९ ॥

[ इति गलस्थलवर्णनम् । ]

भगवद्वदनेन्दुमण्डलं सततं प्राप्तमहोदयश्रिया ।
अपनीय कलङ्कसङ्करं सुदृशामभ्युदयश्रियेऽद्भुतम् ॥ ८० ॥

---

[ ७० ] १ "वरशुक्लधारणा" श्रेष्ठशुक्लध्यानरुचिः ।
[ ७१ ] २ "जडधी०" जलधिः सिन्धुः "रलयोरैक्यम्" इति सूत्रात्, पक्षे जडधी मन्दः ।
[ ७७ ] ३ "कमलाऽऽभोगधरः" कमलानामाभोगो विस्तारस्तं धरतं इति, पक्षे श्रीभोगधरः ॥
[ ७९ ] ४ "तदङ्गभूः" समुद्रपुत्रः ।

---

[ 69 ] 1 "त्रिपदी" उत्पाद-व्यय ध्रौव्यात्मिका पदत्रयी ।

[ 71 ] 2 "कम्बुः" शङ्खः "कम्बुस्तु वारिजः त्रिरेखः षोडशावर्तः शङ्खः" इति हैमः [ अभि० चि० कां० ४ श्लो० २७०–७१ ] । 3 "प्रतिवेश्म" प्रतिगृहम् । 4 "भ्रमभिक्षुहस्तगः" चलनस्वभावस्य याचकसाधोः 'बावा' इति भाषाप्रसिद्धस्य करगतः ।

[ 75 ] 5 "महसा" तेजसा शशिनं चन्द्रं जिगाय । 6 "कृतितः" कार्यात् कम्बुवरं श्रेष्ठशङ्खं जिगाय । 7 "स्वरोदयात्" ध्वनेरुद्गमात् सुधारसममृतरसं जिगाय ।

[ 78 ] 8 "अवधीरितः" तिरस्कृतः । 9 "शशभृद्" चन्द्रः ।

[ 80 ] 10 भगवतो मुखमिन्दुमण्डलेनोपमीयते तेनोदयश्रीरूपो धर्मः, मुखं चोपमावाचकत्वमतो धर्मोपमावाचकयोः पूर्णत्वमुपमायाः प्रदर्शितमस्ति, यथा काव्यालङ्कारवृत्तावरिसिंहः—
"धर्मोपमावाचकयोर्योक्तौ पूर्णा मता यथा ।
शशीवाऽऽस्यं मुदं दत्ते········· [ प्र० ३, स्त० ५ श्लो० २ ]"

वदनेन्दुविभाभरैर्जितं कमलं लज्जितवन्निमज्जनम् ।
प्रविधाय जलाऽऽशये भ्रमद्भ्रमराऽऽरावमिषेण रोदिति ॥ ८१ ॥
परितः शतपत्रयोगजा कमलानां कमला प्रसर्पति ।
न पुनः स्वत इत्यतः कथमुपमा तेषु विभोर्मुखश्रिया ॥ ८२ ॥
मुखशीतरुचेः प्रकाशतः शतपत्रं त्रपयेव संदधत् ।
भ्रमरोपधिनाऽसिताम्बरं स्वशिरो धूनयति प्रकम्पनैः ॥ ८३ ॥
मधुपैः परिपीतमन्वहं मलिनं पङ्कभरात् कलङ्कितम् ।
भगवद्वदनोपमाधियं न जडोऽप्यत्र मनाग् व्यवस्यति ॥ ८४ ॥
वदनं सदनं विदां प्रभोः स्मरणीयं सततं विदांवरैः ।
कमलेन मलेन विप्लुते जडजातेन किमेति तुल्यताम् ॥ ८५ ॥
भगवन्मुखसौरभश्रियाः किमु चौरं सरसीरुहं विधिः ।
भ्रमराय सशृङ्खलस्खलचलनं न्यक्षिपदम्बुनिर्भरे ॥ ८६ ॥
अपि भागवताऽऽस्यदास्यतः कमले योधकला सुवृत्तता ।
प्रतिभाति ससौरभा न चेज्जडजातेऽस्ति कुतः प्रबुद्धता ॥ ८७ ॥
श्रुतिपाटवमस्य शाश्वतं विपुला निर्मलदर्शनस्थितिः ।
भगवद्वदनस्य भास्वतो जडजातेर्विजयेन चाद्भुतम् ॥ ८८ ॥
कमलाधसतेः पयोरुहं वहतामीशमुखोपमास्मयम् ।
परमार्थविचिन्तने तनोत्युदबिन्दुच्छलतोऽश्रुमोचनम् ॥ ८९ ॥
कमलं सलिलाऽऽतपक्रियातपसा प्राप्य विभोर्मुखोपमाम् ।
पतनस्य भियेव न स्पृशत्युत दोषाकररोचिरन्तरम् ॥ ९० ॥
जगतीतलभासनाद् दृशोः सुखदानात् परितापनाशनात् ।
भगवद्वदनश्रियं श्रयेत् कथमप्येष विधुर्न चेत् क्षयी ॥ ९१ ॥
रुचिरालिकसन्नियोजने दधदत्युग्रमहस्वितां विभोः ।
अतुलं वदनं तुलाभृता सदृशं स्याद् विधुनाऽधुना कथम् ॥ ९२ ॥

---

[ ८३ ] १ "प्रकम्पनैः" वातैर्भयकम्पैर्वा ।
[ ९२ ] २ "अलिकसन्नियोजने" अलिकभावे तत्सामीप्यात्, अलिको भ्रूश्रिकरादिः ।

---

[ 81 ] 1 अत्र वदनेन्दुना पराभूतं कमलं लज्जया जलाशये निमज्जति; अर्थादिन्दुदर्शनेन विकस्वरे कमलाऽऽकुमति तत्स्थितश्च भ्रमर आक्रन्दं करोति । अत्र लज्जाऽऽक्रन्दादिभावाः यथोचिताः काव्यकल्पलतावृत्तेः कथनानुसारेण योजिताः । यथा–

"लज्जाकोपतपोनाशसेवाऽऽक्रन्दाऽऽस्यकृष्णताः ।
रागात् पाण्डुरता शस्त्रीविपत्सम्पादियोजने ॥ १४६ ॥
[ प्र० ४ स्त० ५ ]"

[ 85 ] 2 "सदनं विदाम्" विदुषां गृहम् । 3 "विदांवरैः" श्रेष्ठपण्डितैः ।

[ 86 ] 4 अत्र "समानवस्तुनः शोभाचौर्योद्घाषोऽथ निग्रहः" इति काव्यकल्पलतावृत्तौ [ प्र० ४ स्त० ५ ] उक्तत्वात्, मद्यमुखसौरभस्य चौरं कमलं जले सशृङ्खलं निगृह्णाति ।

[ 90 ] 5 अत्र "तपसा सत्पदावाप्तिः" [ प्र० ४ स्त० ५ श्लो० १४९ ] इति काव्यकल्पलतोक्तेः यत्कमलेनाऽऽकण्ठजले जलाऽऽहारेण तपस्तप्तं तेन प्रभुमुखसमानता लब्धेत्याशयः । 6 "दोषाकररोचिः" चन्द्रकिरणम् ।

[ 91 ] 7 अत्र "तदाऽसौ दुष्कृतं विप्रः" इति कल्पलतावृत्त्युक्तेः [ प्र० ४ स्त० ५ श्लो० १५० ] यदि चन्द्रमा क्षयशीलो न स्यात् तदा भगवद्वदनस्य साम्यं स्यात्, तेजसो ज्ञानाद् वा चन्द्रवदनयोर्विक्षेऽनुक्रमात् जगत्प्रकाशनात्, शुक्लपक्षप्रकाशादुपदेशाद् वा, सुधावर्षाद् दुःखनाशाद् वा, लभेत ।

विदुपामुपमा सुदुर्लभा प्रभुवक्त्रस्य सदा महस्विनः ।
तदनन्यगतेर्विमर्शने ननु दिग्मात्रमयं सुधाकरः ॥ ९३ ॥
अमृतद्युतिरर्हदीशितुर्मुखसाम्यं समवाप्य किञ्चन ।
न जडोद्भवमध्यसङ्गतिं मधुपापीततयेव सेवते ॥ ९४ ॥
शशिनः शिरसि न्यधात् कलां गिरिशस्तं सकलं हरिर्दृशि ।
विभवानुभवोऽयमर्हतः सुलभोऽस्याऽऽस्यवरस्य दास्यतः ॥ ९५ ॥
नलिने मलिनालिनो न चेद्य सुधाधाम्नि कलङ्कसङ्करः ।
सततप्रतिबुद्धबुद्धराण्मुखसाम्यस्य कथा तथाऽपि न ॥ ९६ ॥
कमले क्रमपात्रविच्युतिः शशिनि स्यात् सकला कलाक्षतिः ।
भगवद्वदनेन साम्यताकरणादेष विधेरयं विधिः ॥ ९७ ॥
उपमानमदर्शि भूचरैः कमलं शीतरुचिश्च खेचरैः ।
प्रतिवादधिया न तात्त्विकी भगवद्वक्त्रकलाऽनयोर्मनाक् ॥ ९८ ॥
सकलांशुकधारणं विधोरघनस्येव न पर्वणः परम् ।
जलजस्य विबोधनं दिने मुखसादृश्यमयोऽनयोऽनयोः ॥ ९९ ॥
भगवद्वदनोपमाविधेरधिकारो द्वितये विवर्तते ।
निशि चन्द्रमसि प्रभाकरेऽभ्युदिते तत्क्षणतः सरोरुहे ॥ १०० ॥
विभुतो हि सदैवदैवतो भवति न्यूनतमेऽधिकारिता ।
अत एव मुखोपमापदं हिमगुर्या जलजं न सर्वथा ॥ १०१ ॥
विजितं प्रभयेन्दुमण्डलं कमलं सौरभपूरसंभवात् ।
भगवद्वदनं ततोऽभवद् भुवने निस्तुलवस्तुपुष्कलम् ॥ १०२ ॥
यदि सौम्यरुचिर्दिवाकरेऽप्यथवा राजनि निष्कलङ्कता ।
जलजन्मनि भासुरद्युती रमतां तत्र शुभाऽऽननोपमा ॥ १०३ ॥
बहुलक्षणभास्वरं प्रभोर्मुखमीदृग् ननु राजमण्डलम् ।
अभिनन्दितराजदर्शनं प्रतियोधेन न चेद् दृगम्बुजम् ॥ १०४ ॥
सकलैः स्वगुणैर्मुखोपमाऽद्भुतभावे यदि दृश्यते क्वचित् ।
विबुधा न सुधा निशाकरे जलजेवाभिनिवेशयन्ति ताम् ॥ १०५ ॥

[ इति भगवद्वदनवर्णनम् । ]

---

[१०४] १ "बहुलक्षणभास्वरम्" भूरिलक्षणैर्दीप्तम्। बहुलस्य कृष्णपक्षस्य क्षणोऽवसरस्तत्र भासुरम् । २ "अभिनन्दितराजदर्शनम्" अभिनन्दिताः प्रमोदिताः राजानो येनेदृशं दर्शनं यस्य मुखमीदृशं न कमलम्; अभिनन्दितमानो राजा चोदितेन्दुर्यस्य दर्शनं यस्य । ३ "प्रतियोधेन" प्रबोधेनोपदेशकरणेन प्रकाशेन वा ।

---

[93] 1 "विदुषां" [illegible] ।

[94] 2 "अमृतद्युतिः" चन्द्रः । अत्र "[illegible]" इति वाक्यपदीये [ प्र० ४ का० ५ श्लो० १५१ ] [illegible] ।

[96] 3 कमले भ्रमरालेप [illegible], चन्द्रमसि कलङ्कलेप न स्यात् तदा प्रतिबोधितस्य बुद्धभगवतो [illegible] मुखसादृश्यम् [illegible] न भवतीति भावः ।

[100] 4 द्वितीयार्थे कमलस्य निशि च चन्द्रस्य उपमाऽर्हत्व भगवन्मुखस्य वर्तते इत्यर्थः ।

नयनद्युतिरीशितुर्जने जनयन्ती बहुशर्मसम्पदम् ।
विलसद्रसबोधसत्वरी भवदिन्दीवररूपजित्वरी ॥ १०६ ॥
हृदयान्तरतापवारणात् सुदृशां नित्यविकासकारणात् ।
अमृतद्रवसम्भृते दृशौ सरसीवास्य विरेजतुर्विभोः ॥ १०७ ॥
वसुधास्थलवासिदैवतैः किमिवाऽऽनीय दिवः सुधा धृता ।
इह सा मुनिराजलोचनोज्ज्वलपात्रे अनुभाव्य दीव्यति ॥ १०८ ॥
अजरामरतां प्रयान्त्यमी विबुधास्तन्नयनांशुपानतः ।
धवलीभवदात्मना मनागपि जाड्येन विना तदद्भुतम् ॥ १०९ ॥
अमृताशनतो द्युसद्मनां विविधा वर्णगतिस्तथा मतिः ।
नयनांशुसुधापरिप्लवादतिशुक्लैव नृणामिहोभयी ॥ ११० ॥
अचिराद् रुचिरा रुचिर्दृशोस्तनुते पङ्कभरापसर्पणम् ।
सुरसिन्धुरिव प्रसारिणी स्फुरदिन्दीवरराजिशोभया ॥ १११ ॥
धवलाऽधवलाऽरुणत्विषामनुषङ्गाद् भगवद्दृशोर्द्वयी ।
विशदीकरणाय देहिनामुदीयायेव सरित्त्रिवेणिका ॥ ११२ ॥
अहरद् वरदीप्तिमीक्षणद्वितयी शुभ्रतया तथा हरेः ।
शितिमानमपि स्वतारया चलशोणत्वविधेर्विधोर्द्युतिम् ॥ ११३ ॥
करुणामरुणत् समानसं भुवनस्योपरि यामधीश्वरः ।
अधिपात्रयुगं समुच्छ्वसित्यधुना साऽमललोचनश्रिया ॥ ११४ ॥
बहुसौरभलोभविस्फुरद्भ्रमरोर्चिरुभयी सरोजयोः ।
उपमां प्रभुचक्षुषोर्दधात्यसितभ्रूयुगलोपधानयोः ॥ ११५ ॥

[ इति नयनवर्णनम् । ]

अलिकं कलिकन्दलच्छिदे भविनां संभवति स्वभावतः ।
समसन्तमसं भुवोऽहरद् यतिनामीशितुरुद्यतद्युतेः ॥ ११६ ॥
स्फुटमातपवारणं श्रियो वरनाशाऽऽयतदण्डमण्डनम् ।
विपुलप्रभुभाललीलया प्रविरेजे रजसां निवारणम् ॥ ११७ ॥

[ ११० ] १ "उभयी" गतिर्मतिश्च ॥

[ 106 ] 1 "भवदिन्दीवररूपजित्वरी" सतः कमलरूपस्य जयनशीला ।

[ 107 ] 2 प्रभोरक्षिणी सुधासम्भारेण मनुजानां हृदयं निस्तापं नित्यविकस्वरं च सरसीव कुर्वाते ।

[ 110 ] 3 "अमृताशनतः" सुधाभोजनात् । 4 "द्युसद्मनाम्" देवानाम् ।

[ 111 ] 5 "स्फुरदिन्दीवरराजिशोभया" विकस्वरकमलपङ्क्तिदीप्त्या ॥

[ 112 ] 6 "सरित्त्रिवेणिका" सरितां गङ्गा यमुना-सरस्वतीनां त्रिवेणिका ।

[ 116 ] 7 "अलिकम्" ललाटम्, "भाले गोध्यलिकालीकललाटानि" इति हैमः [ अभि० चिं० कां० ३ श्लो० २३७ ] । 8 "कलिकन्दलच्छिदे" कलेः कन्दलं नवाङ्कुरं छिनत्ति तस्मै; "कन्दलं तु नवाऽङ्कुरे कलध्वनौ" इति हैमः [ अने० सं० कां० ३ श्लो० ६६७ ] । 9 "समसन्तमसम्" समानरूपेण सततान्धकारम्, "समवान्धात् तमसः" इत्यत् [ सिद्धहेम० ७-३-८० ] ।

[ 117 ] 10 "आतपवारणम्" छत्रम्, "छत्रमातपवारणम्" इति हैमः [ अभि० चिं० कां० ३ श्लो० ३८१ ] । 11 "वरनाश०" वरनाशः वृत्तिनाशः ।

अलिकं फलकं धनुर्भ्रुवौ स्मरतः संहरतेऽसिनाऽमुना ।
जगतीजनमोहनक्रिया विहिता कार्मणकर्मणेव किम् ॥ ११८ ॥
धनुषोऽद्रिभिदोऽन्तरस्थितं नभसः खण्डमखण्डशोभया ।
अलिकस्य करोत्यनुक्रियां यदि तत् पाटलवार्दलाऽऽवृतम् ॥ ११९ ॥
उदयाचलचूलयाऽऽवृतं यदि विम्बस्य दलं विवस्वतः ।
उदितेन दलेन तुल्यता ध्रियते नाम तदाऽलिकश्रियः ॥ १२० ॥
घुसृणारुणरोचिषाऽलिके प्रतिभाति स्म विभातजा विभा ।
नवकेवलतीव्ररोचिषोऽभ्युदयं निर्दिशतीशितुर्ध्रुवम् ॥ १२१ ॥
भविता भुवनैकभास्करस्तमसां नाशयिताऽयमीश्वरः ।
इति दारदवर्णवर्णजोऽरुणिमाऽलीकपदे पटुर्यमौ ॥ १२२ ॥
घनकार्मणकाननं दहन् विमलध्यानमहानलः किल ।
हृदयेऽभ्युदियाय शाश्वतः प्रभुभाले तत एव रक्तिमा ॥ १२३ ॥

[ इति ललाटपट्टवर्णनम् । ]

भुजगाधिपतेः स्वतेजसां प्रसृताः किं नु गणाः फणामिषात् ।
प्रभुमूर्ध्नि प्रभुः सदोर्ध्वता ननु युक्तैव हि भक्तिकारिणः ॥ १२४ ॥
भगवानिह सप्तविष्टपीश्वरतालक्षणमेव सप्तधा ।
विपुलाऽऽतपवारणश्रियं निदधे तुङ्गफणागणाऽऽश्रयाम् ॥ १२५ ॥
भयसप्तकगन्धसिन्धुरद्रुतदर्पंकरणं फणाधिया ।
प्रगुणीकृतवान् निरङ्कुशान्महसाऽपं विभुरङ्कुशानिव ॥ १२६ ॥
जिनपृष्ठत एव जन्मिनामभिदित्सुः स्तवपाठवाग्मिनाम् ।
शिवशर्मफलात् फणाच्छलात् सहसाऽऽकृष्टमिवोद्यता द्युतिः ॥ १२७ ॥

---

[ १२२ ] १ "दारद०" दरदं हिङ्गुलः ।
[ १२६ ] २ "निरङ्कुशान्" निरर्गलान् । ३ "महसा" तेजसा ।

---

[ 118 ] 1 "फलकम्" आवरणम् "अङ्गनं फलकं चर्म खेटकाऽऽवरणस्फुरः" इति हैम. [ अभि० चिं० कां० ३ श्लो० ४४७ ], "ललाटमष्टमीविधु- फलकं च" [ धन्य० प्र० ४ स० १ श्लो० २० ] इति ललाटस्यात्र फलकेनोपमानं दत्तम्, तथैवात्र भ्रुवोः पटुता 'भ्रुवौ- धन्वधनुर्यष्टिरेखा" [ धन्य० प्र० ४ स० १ श्लो० २१ ] ।

[ 120 ] 2 "विवस्वत." सूर्यस्य ।

[ 121 ] 3 "घुसृणारुणरोचिषा" श्रोहितचन्दनरूपसूर्यकिरणेन । 4 "नवकेवलतीव्ररोचिषः" नवीनकेवलज्ञानस्वरूपसूर्यस्य ।

[ 123 ] 5 "घनकार्मणकाननम्" निचितकर्मसमूहवनम् । 6 "विमलध्यानमहानलः" शुक्लध्यानस्वरूपाग्निः ।

[ 125 ] 7 "सप्तविष्टपीश्वरता०" सप्तावनीश्वरत्वम् ।

[ 126 ] 8 "भयसप्तकगन्धसिन्धुरद्रुतदर्पंकरणम्" सप्त भया एव गन्धसिन्धुराः मदोन्मत्तहस्तिनस्तान् द्रुतं शीघ्रं दर्पंकरणमाधीनकरणम् ।

अयि ! पल्लवितं सुरद्रुमं जलधिं वोत्तरलं परिस्तुमः ।
अभिधारयते फणान्वितप्रतिबिम्बस्य जिनस्य यः स्मृतिम् ॥ १२८ ॥
भगवद्वदनामृतद्युतेः किरणानामिव चारुमण्डलम् ।
परितः प्रसरत्फणामिषान्नभसः कार्ष्ण्यमपाचिकीर्षति ॥ १२९ ॥
ललितोदयमाप्य वेलया विशदध्यानमहोदधौ दधौ ।
अमृतद्रव एष पिण्डतां सुदृशां मोदयिता फणातनुः ॥ १३० ॥
नवशारदवादलैः समं कृतसौहार्दमिवोदुयियासति ।
स्फुटकैतवतः स्फुटं प्रभोरभिषेकोचितगाङ्गशम्बरम् ॥ १३१ ॥
भगवद्यशसां [redacted] डम्बरं हृदि विद्वः क्षितियोषिदम्बरम् ।
परिभावयितुं दिगम्बरं समुदीतं विलसत्फणोपधेः ॥ १३२ ॥
वरदुग्धपयोनिधेर्लसल्लहरी कीदृगिति भ्रमं नृणाम् ।
अपनेतुमिवोत्थिताऽङ्गजा फटका पट्टपटुर्विभोर्विभा ॥ १३३ ॥
भगवद्वचनामृतं द्रुतं फणिराड्डुस्मयन् पिपासति ।
समुपेत्य सभासु भासुरद्युतिरुत्सृष्टविषोऽनुपृष्ठतः ॥ १३४ ॥
दिविषज्जिवहं वहंस्तुलां भगवत्सेवनयोत्फणीभवन् ।
प्रभया किमधश्चिकीर्षति मणिरोचिःखचितः फणीशिता ॥ १३५ ॥
भगवच्छिरसि स्फटावलेः पटुलालित्यमुपेत्य राजते ।
धवलः खलु तेजसा तनोः स तमस्कायभरो लघूभवन् ॥ १३६ ॥
सुभगं भगवन्तमन्तरं जगतः पूरयितुं प्रभाभरैः ।
भृशमुद्यतमङ्गसङ्गतैर्भजते को न सुरासुराधिपः ॥ १३७ ॥
सुमनोमणिरामणीयकं द्युमणेर्वा किरणाङ्कणं वपुः ।
रुचिराङ्करुचिः सुरेशितोऽतिशयं नो लभते जिनद्युतेः ॥ १३८ ॥
तिलकाङ्गदमौलिमौक्तिकाऽऽवलिकण्ठाभरणादिभूषणैः ।
भगवत्तनुतेजसोऽञ्जसा पुनरुक्तिः क्रियतेऽपदूषणैः ॥ १३९ ॥

---

[ १३६ ] १ "तमस्कायभरः" तमस्काय एव भरः समूहः । | [ १३८ ] २ "सुमनोमणि०" चिन्तारत्नम् ।

---

[ 128 ] 1 "सुरद्रुमम्" पारिजातम् । 2 "जिनस्य" पार्श्वनाथस्य ।

[ 129 ] 3 "भगवद्वदनामृतद्युतेः" भगवतो मुखचन्द्रमसः । 4 "अपाचिकीर्षति" अपाकर्तुमिच्छतीति दूरीकरोति ।

[ 131 ] 5 "नवशारदवादलैः" नवीनशरदर्तुसम्भवमेघैः । 6 "स्फटकैतवतः" फणाव्याजात् । 7 "०शम्बरम्" वारि, "नीरक्षीराम्बु शम्बरम्" इत्यमरः [ अमर० कां० १ श्लो०२३८ ] ।

[ 134 ] 8 "उत्सृष्टविषः" त्यक्तविषः ।

[ 135 ] 9 "दिविषज्जिवहम्" देवसमूहम् । 10 "अधश्चिकीर्षति" तिरस्करोति । 11 "मणिरोचिःखचितः" मणिदीप्तियुक्तः । 12 "फणीशिता" भुजङ्गाधिपतिः ।

[ 137 ] 13 "अन्तरम्" हृदयम् ।

[ 138 ] 14 "द्युमणिः" सूर्यः ।

भुवनैकरविः कविद्विपैर्वसुधायां बहुधा सुधाशनैः ।
महसा ह्यभिभूयतेऽन्वहं वितथा नैव तथाऽप्यदःकथाः ॥ १४० ॥
कतिचिद्गुणभावनाऽप्यसौ तनुते भागवतीह पावना ।
स्मरणाऽऽदरणार्थधारणैर्भविनामीहितवस्तु वस्तुतः ॥ १४१ ॥
श्रीशङ्खेश्वरपार्श्वशाश्वतरवेः सर्वाङ्गशोभाभरः
प्राणम्रत्रिदशेन्द्रसान्द्रमुकुटज्योतिर्भिरभ्यर्हितः ।
दृष्टः स्पष्टतयाऽनुरक्तमनसा ध्यातः प्रभातप्रियां
ध्येयाद् ध्येयमहोदयश्रियमहो ! श्रीजैनभक्तिस्पृशाम् ॥ १४२ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
श्रीशिवपुरीस्थितश्रीशङ्खेश्वरपार्श्ववर्णनो
नामाष्टमः सर्गः ।



[ १४० ] १ "वितथा नैव" सत्या एव । २ "अदःकथाः" अमुष्य वार्ता ।

[ १४२ ] ३ "ध्येयमहोदयश्रियम्" ध्येयो यो महोदयो मोक्षः पक्षे ध्येयः स्वामीष्टस्तस्य महोदयस्य प्राप्तिः सैव संपत् ।

## नवमः सर्गः ।

अथोपदेशादनुदेशजाग्रन् महामहानन्दमयं गणेन्दुः ।
लेभेऽत्र लाभात् सुकृतस्य सत्यं सत्याकृतिः सा शिवपूर्वसत्याः ॥ १ ॥
परञ्जनो यत्र वसन् प्रचेताः सौधर्मभर्त्तुः प्रणयत्युपास्तिम् ।
रजत्यजस्रं न मनः प्रतीच्यामस्यां मुनीन्द्रस्य कथं विहस्य ॥ २ ॥
चित्रं प्रतीच्यामपि सौरभासां महोदयश्रीर्विजयिन्यसक्तम् ।
न किं द्वितीयादिवसे सुधांशोः कलावलात् स्यादुदयप्रभाऽस्याम् ॥ ३ ॥
सौरप्रभाऽस्यामपि सर्वदिक्षु प्रबोधबीजं सुतरां तथापि ।
सुदूरभावादिव पूर्वभागे वैवर्ण्यमाविर्भवति स्म किञ्चित् ॥ ४ ॥
दोषाकरस्य द्विजनायकस्य मन्दस्य भासा बहुलक्षणेषु ।
क्रमेण रुच्या कमनो मनोऽथ व्यामोहजन्मा सुदृशा रुरोध ॥ ५ ॥
जनार्दनस्य प्रियताऽनृतानां वृत्त्या विताने पिशिताऽशिता च ।
लोकस्य रौद्रं प्रणिधानमासीन्मोहेन साऽब्रह्मनिषेवणाऽपि ॥ ६ ॥
श्रीपार्श्वभास्वानुदियाय यस्यामाभाति या देवपुरीवयस्या ।
शुद्धाऽपि रुद्धा शतमन्युबुद्ध्या सा तीर्थपृथ्वीषु पुरीधुरीणा ॥ ७ ॥

[१] १ "महामहानन्दमयम्" महानन्दप्राप्तिरेव २ "सत्याकृतिः" सत्याऽऽकृतिः सत्यव्वारो वा निर्णयः; सतीवाऽऽकृतिः "आकृतिस्तु जातौ रूपे वपुष्यपि" इति हैमः [अने० सं० का० ३ श्लो० २६२]। ३ "सा" इयं शिवपुरी एव। ४ "शिवपूर्वसत्याः" शिवपुरिनिवासस्य।
[२] ५ "परञ्जनः" वरुणः; "जलकान्तारः स्यात् परञ्जनः" इति हैमः [अभि० चिं० का० २ श्लो० १०२] ६ "प्रचेताः" पण्डितोऽपि। ७ सौधर्मभर्त्तुः" सुधर्मणो भावः सौधर्म तद्वारकस्य सौधर्मेन्द्रस्य। ८ "उपास्तिम्" सेवाम्।
[३] ९ "कलाबलात्" "कला स्यात् काल-शिल्पयोः"।
[४] १० "वैवर्ण्यम्" कालिकाः विरुद्धवर्णता ब्राह्मणादिव्यवस्थाहानिर्मांसाशनादिना।
[५] ११ "दोषाकरस्य" रागद्वेषमोहानामाकरस्य रात्रिपतेर्वा। १२ "मन्दस्य" जडस्य पक्षे क्षीणस्य। १३ "भासा" कान्त्या दीप्त्या वा। १४ बहुलक्षणेषु बहुषु क्षणेषु लक्षणशास्त्रेषु व्याकरणादिषु पक्षेऽसितपक्षसमयेषु। १५ "रुच्या" इच्छया दीप्त्या वा। १६ "कमनः" ब्रह्मा स्मरश्च। १७ "व्यामोहजन्मा" अज्ञानजन्यः। १८ "सुदृशाम्" सम्यग्दर्शवतां स्त्रीणां वा।
[६] १९ "जनार्दनस्य" जनपीडनस्य हिंसायाः कृष्णस्य वा। २० "अनृतानाम्" कर्षणानामलीकानां वा "अनृतं कर्षणेऽलीके" इति हैमः [अने० सं० का० ३ श्लो० २५०] २१ "विताने" यज्ञे जनानां विस्तारे वा "वितानं क्रतुके यज्ञे विस्तारे क्रतुकर्मणि, तुच्छे मन्दे वृत्तशून्ये शून्यावसथयोरपि" ॥ इति हैमः [अने० सं० का० ३ श्लो० ४४१–४२]। २२ "पिशिताऽशिता" मांसभक्षणम्, "पिशितं मांसवाचकं पिशिता मांसिका" इति हैमः [अने० सं० का० ३ श्लो० २९८–९९]। २३ "रौद्रम्" प्राणातिपातादि रुद्रसम्बन्धि वा। २४ "मोहेन" अज्ञानेन। २५ "अब्रह्मनिषेवणा" अब्रह्म मैथुनं तत्सेवा 'ब्रह्मसेवा' इति पदविभागे ब्रह्मणः सेवा वा।
[७] २६ "श्रीपार्श्वभास्वान्" श्रीः पार्श्वे यस्य स सूर्यः। २७ "देवपुरीवयस्या" देवपुर्या वयस्या सखी इन्द्रवासात्। २८ "शुद्धा" निर्मला। २९ "रुद्धा शतमन्युबुद्ध्या" शतमन्योरिन्द्रस्य बुद्ध्या रुद्धाऽपि मदीयेयमिति धिया चन्द्रः स्यात्स्वीति, शतमुपलक्षणात् सहस्रं वा वर्षमागा ये मन्यवो यज्ञास्ते मनीषया रुद्धा। ३० "सा" यद्विरेव भाग्यमाशा दिक् पक्षे सा वाराणसी। ३१ "तीर्थपृथ्वीषु पुरीधुरीणा" तीर्थभूमिषु पुरीधुरीणा पुरीभिर्नगरीभिर्धुरीणा धुर्या, मुख्या पुरीत्यर्थः।

"तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः।
ऋषिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि ॥
योनौ पात्रे दर्शनेषु" इति हैमः [अने० सं० का० २ श्लो० २१९–२०] ॥

[1] 1 "गणेन्दुः" गणेष्विन्दुरिव श्रीविजयप्रभसूरिः। 2 "सुकृतस्य" पुण्यस्य।
[3] 2 "सौरभासाम्" सूर्यदीप्तीनाम्।

पराणि तीर्थानि परःशतानि प्राच्याः प्रदेशे जलधेः सदेशे ।
सरित्प्रवेशे पुरसन्निवेशे तादात्म्यमीयुर्द्विजराजरुच्या ॥ ८ ॥
अर्हद्विहाराश्रयजा विहाराः सुरासुरेन्द्रैर्विहितोपहाराः ।
विनिन्यिरेऽदृश्यदृशां द्विजेशप्रवेशजाग्रन्महसाऽत्र सद्यः ॥ ९ ॥
महानुभावा मुनयः स्वभावात् सिद्धाः प्रसिद्धाः खलु यत्र देशे ।
रौद्रस्वरूपं विनिधाय मौल्या वृत्त्यातिदौर्गत्यमधायि तत्र ॥ १० ॥
पुमान् पुराणोऽपि गृहानुरागाद् विश्वं चकाराऽऽत्तकामचारः ।
स्वयं महाभोगधरं सुरादेरादेशतो ब्रह्मनियोजनेन ॥ ११ ॥
स सोमसिन्धुः सुधयैव पूर्णां दिवं भुवं वा विदधत् समन्तात् ।
तमोविनाशेन जगज्जनानां जज्ञे कलाकेलिसमुद्भवाय ॥ १२ ॥
सुदर्शनेऽस्यैव महोपयोगः सद्यः प्रसादः सुदृशां यतः स्यात् ।
पयोधिजाया अपि नर्मकर्म प्रत्येयमस्मिन् समयं विभाव्य ॥ १३ ॥
प्रपेदिरे ब्रह्म परे प्रपञ्चं मायामयं तत्पुरतो निवेद्य ।
कादम्बरीवृत्तिमुपादधाना वामानुवृत्त्याऽऽत्तसुखास्तिमन्ये ॥ १४ ॥
रसानुभावात् प्रियबुद्धवाचि सान्निध्यमापुर्न रराज योऽन्यः ।
अनित्यतां तत्समयेऽधिगत्य व्यवायलीलासु निरन्तरायम् ॥ १५ ॥

---

[८] १ "द्विजराजरुच्या" चन्द्रकान्त्या; एकीकृतानि धवलितानि पक्षे ब्राह्मणानां मान्यानि तीर्थानीतीच्छया जगन्नाथवत् यत्र हि श्रीऋषभमूर्त्तिरपि संप्रति द्विजराजैरधिष्ठितं तीर्थम् ॥

[९] २ "अदृश्यदृशाम्" अर्हन्तं अपि न जैनतीर्थदर्शनं पक्षे चक्षुष्येण न दृश्यानि ॥

[१०] ३ "रौद्रस्वरूपम्" त्रिवलिकम् । ४ "मौल्या वृत्त्या" चन्द्ररूपभूतानामियं मौली वृत्तिस्तया पक्षे रात्रेः प्रवृत्त्या । ५ "दौर्गत्यम्" दुर्गतेर्भावो दौर्गत्यं पक्षे दुर्दुःखेन गतं गमनं यत्र तद्दुर्गतं तद्भावो दौर्गत्यम् ॥

[११] ६ "पुराणोऽपि" वृद्धोऽपि । ७ "गृहानुरागात्" स्त्रीजनेऽनुरागात् । ८ "आत्तकामचारः" आत्तः स्वीकृतः कामचारो संभोगो येन सः पक्षे कृष्णः स्वेच्छः । ९ "महाभोगधरम्" अत्यन्तं भोगधरं विश्वं भुवनं चकार पक्षे विस्तारधरम्, अयमपि तथा मनुजवासस्तत्र कोऽप्यर्कं पूर्णो वार्तो । १० "सुरादेरादेशतो ब्रह्मनियोजनेन" अकारप्रश्लेषेण, अब्रह्मनियोजनेन सुरादेर्मद्यादेराज्ञया पक्षे सुरादेर्देवादेरादेशतः विकल्पाग्वरात्, ब्रह्मनियोजनेन ब्रह्मणो विधेर्योजनेन प्रेरणेन; केचित् कृष्णः स्वयं विश्वं कृतवानित्याहुः, केचिदवतारं समाश्रित्येति विकल्पद्वयम् ॥

[१२] ११ "सोमसिन्धुः" चन्द्ररूपः समुद्रः पक्षे कृष्णः । १२ "सुधयैव पूर्णां दिवं भुवं वा विदधत्" अमृतेन देवान् मनुष्यानपि संप्रीणयन् । १३ "तम" तमस्तिमिरं राहुर्वा । १४ "कलाकेलिसमुद्भवाय" कलानां क्रीडाया उत्पत्त्यैकलाभैर्वा क्रीडाकारणं पक्षे स्मरोद्भवाय कामजनकत्वात् ॥

[१३] १५ "सुदर्शनेऽस्यैव महोपयोगः" अस्य चन्द्रस्य सुदर्शने सम्यक्तया दर्शने महोपयोगो महत् कार्यं यतो दृशां निर्मलता स्यात् पक्षे सुदर्शनं चक्रम् । १६ "सुदृशाम्" सुन्दरीणाम् ।

[१४] १७ "प्रपेदिरे" प्रपन्नाः । १८ "ब्रह्म" अब्रह्म इत्यकारप्रश्लेषे मैथुनं पक्षे ब्रह्म ब्रह्माद्वैतवादम् । १९ "प्रपञ्चं मायामयम्" मायामयं ममानुरागस्त्वयि त्वां विना मरिष्यामीति प्रपञ्चम् । २० "तत्पुरतः" तस्याः पुरतः । २१ "कादम्बरीवृत्तिम्" कादम्बर्या मदिराया वृत्तिम्; "अम्बरे व्योमवस्त्रयोः" इति हैमः [अने० सं० का० ३ श्लो० ५५०] कुत्सिताम्बरं शतखण्डकन्थादि । २२ "वामानुवृत्त्या" स्त्रियानुवृत्त्याः वाममार्गेण देव्याराधनेन । जीर्णवस्त्रादिधारकत्वेन दरिद्रा अपि वाममार्गेण सुखभाज इति ॥

[१५] २३ "प्रियबुद्धवाचि" प्रिया या बुद्धस्य देवविशेषस्य वाक् तस्यां पक्षे प्रियो यो भर्त्ता तस्य बुद्धवाक् या स्त्री तस्याम् । २४ "व्यवाय०" विशिष्टो योऽपायो निश्चयज्ञानं मैथुनं वा ।

---

[13] 1 "पयोधिजायाः" लक्ष्म्याः । 2 "नर्मकर्म" क्रीडाकर्मम् ।

• P °दृशाम् ।

प्रभासु जाड्येऽपि महातपोऽभूद् वियोगभाजः प्रकृतेर्विकारात् ।
विधौ विधौतत्विपि कापिलीया प्रवृत्तिरासीत् कुमुदां विबोधे ॥ १६ ॥
महेश्वरस्यापि दिगम्बरत्वं विधोस्तदाऽधो भवनात् कलायाः ।
शिवाऽऽश्रितस्यातिपशुक्रियाभिः प्राकाशि काशिस्थजने न वन्द्यम् ॥ १७ ॥
दृष्टेष्टबाधात् मतयो ह्यगाधाः प्राधान्यतो मोहमहीश्वरस्य ।
सोमागमादेव महो वितेनुर्भवस्य वद्या जनताः समस्ताः ॥ १८ ॥
निशम्य सूरिश्चरितं सचारैराचारचारुश्चरणप्रचारे ।
नियोगसेनान्यमुपादिदेश तदेशतीर्थेशनिदेशसिद्ध्यै ॥ १९ ॥
सेनान्यमाश्रित्य समुन्नतश्रीर्ववर्षन् परं गा मधुराः सुसीमाः ।
सदागमोल्लासविधासु मेघः सज्जत्वमाधात् समुमुक्षुसङ्घः ॥ २० ॥
मिश्रांस्तमिस्राशनशासनेन जनानघः पातयतो विजेतुम् ।
श्रीवीरचर्याऽधिकधैर्यभाजः शिष्यान् विशिष्यानुदिदेश सूरिः ॥ २१ ॥
नियोगराजः श्रमणाधिराजः प्रसादमस्यादरतः प्रपद्य ।
अहो महोत्साह इव प्रशस्तः समस्तमामंस्त शुभं शुभंयुः ॥ २२ ॥
सेनान्ययं धैर्यधनेषु धुर्यः कचिन्न वैधुर्यधियं दधानः ।
प्रधानलोकं प्रतिभानिधानं स्वसंनिधानं विनयान्निनाय ॥ २३ ॥

---

[१६] १ "जाड्येऽपि" कपिलमते बुद्धिर्जडरूपा । २ "महातपः" धूम्रपानादि । ३ "वियोगभाजः" विशेषेण योगवतः । ४ "विधौ" आचारे निर्मलेऽपि । ५ "विधौतत्विषि" विधिर्मह्मविधानयोः, "विधिर्वाक्ये च दैवे च प्रकारे कालकल्पयोः" इति हैमः [ अने० सं० कां० २ श्लो० २५२-५३ ] । ६ "कापिलीया प्रवृत्तिः" पृथिव्यां हर्षाणां प्रकाशो कपिलस्येव ऋषेः प्रवृत्तिः; "प्रवृत्तिर्वृत्तौ वार्तायां प्रवाहे प्राथिते हृते । याचिते शत्रुसंरुद्धे" [ इत्यनेकार्थः ] । ७ "कुमुदां विबोधे" उत्पलविकासे पराग्नैः कपिलत्वमासीत् ।

[१७] ८ "महेश्वरस्यापि" शिवस्य धनिनोऽपि वा । ९ "दिगम्बरत्वम्" नग्नत्वम् । १० "विधोस्तदाऽधो भवनात् कलायाः" चन्द्रकलाया अधो नीचैर्भावात्; "नीचे चन्द्रे दरिद्र एव," पक्षे भवनाद् गृहं कलाया अधोऽर्नागेव; यावच्चन्द्रकला ज्योत्स्नया न गृहं प्राप ततः पुरोऽपि धनिनः पशुक्रियाभिर्दिगम्बरत्वं सुरतायेति शेषः; "विधुश्चन्द्रेऽच्युते वीरुत्सुतायां विटपेऽपि च" इति हैमः [ अने० सं० कां० २ श्लो० २५३ ]; "कला स्यादंशशिल्पयोः कलने मूलवृद्धौ षोडशांशे विधोरपि" इति हैमः [ अने० सं० कां० २ श्लो० ४८८-८९ ] । ११ "शिवाऽऽश्रितस्य" शिवया भवन्याऽऽश्रितस्य; पक्षे शिवं मोक्षमर्थात् सन्मार्गमाश्रितस्य योगिनोऽपि । १२ "अतिपशुक्रियाभिः" पशुपतित्वात् मद्युक्तं तद्विषयक्रियाभिः । १३ "प्राकाशि" प्रकटीकृतम् । १४ "काशिस्थजने न वन्द्यम्" काशिस्थजने न पाण्डित्यप्रणमेतत्; काशिस्थजनेऽनवद्यं निष्पापं स हि मैथुने न दोषमाह "न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानाम्" इति स्तुवेदाक्यात्; वन्द्यं स्तवनीयं नमस्करणीयं वा ॥

[१८] १५ "दृष्टेष्टबाधात्" दृष्टं प्रत्यक्षमिष्टमनुमानादि तद्बाधात् । १६ "सोमागमाद्" सोमागमः कापालिकमतं चन्द्रोदयो वा । १७ "भवस्य" संसारस्य रुद्रस्य वा स्वधर्मस्य वा; "भवः सत्ताप्तिजन्मसु रुद्रे श्रेयसि संसारे" इति हैमः [ अने० सं० कां० २ श्लो० ५४५ ]–इति चन्द्रोदयवर्णनेन नानामतवर्णनम् ॥

[२०] १८ "गाः" वचांसि जलानि वा । १९ "सुसीमाः" शीता समर्यादाः; "सुषीमः शिशिरे रम्ये" इति हैमः [ अने० सं० कां० ३ श्लो० ५०५ ] । २० "सदागमो०" आगमाः सिद्धान्ता वृक्षाश्च; "आगमस्त्वागतौ शास्त्रे" इति हैमः [ अने० सं० कां० ३ श्लो० ४९१ ] । २१ "समुमुक्षुसङ्घः" सप्रतीतो यतिमण्डलः पक्षे यतिमण्डलयुक्तः ॥

[२१] २२ "मिश्रान्" मिश्र जातिविशिष्टांस्तान्; उभयपक्षाश्रयान् वा । २३ "तमिस्राशनशासनेन" रात्रिभोजनाऽऽज्ञया । २४ "अघः" नरके नीचैर्वा । २५ "श्रीवीरचर्याऽधिकधैर्यभाजः" श्रीमहावीरचरित्रेष्वधिकपाण्डित्यवतः; शूरचरित्रेषु शमनशीला वा ॥

[२२] २६ "अहः" दिनम् । २७ "शुभंयुः" शुभसंयुक्तः ॥

तत्साहसिक्यं गुणधृत्तिशिक्यं सकर्णकैर्वर्णयितुमशक्यम् ।
व्यामोहभेदाय महोद्यमेऽपि व्यामोहमाधत्त जनस्य चित्रम् ॥ २४ ॥
स्वाध्यायनान्दीनिनदः पुरोऽस्य जगर्ज गर्जद्धनिवद् गभीरः ।
प्रतिध्वनेरस्य विरस्य जग्मुर्लोभादयः क्षोभमिवैत्य देशात् ॥ २५ ॥
नत्वाऽथ तत्त्वाध्यवसायधीरः श्रीमारुदेवाजिन-शान्तितीर्थम् ।
पार्श्वं तमोभूरुहभेदिपार्श्वं तत्रैव शङ्खेश्वरनामधेयम् ॥ २६ ॥
गणाधिभर्तुश्चरणारविन्दं स्पृशन् स पश्चाद्धनतिप्रतीत्या ।
तद्गौरवेण द्विगुणीकृताङ्गः पुरः प्रतिष्ठासुरभूत् तदानीम् ॥ २७ ॥
श्राद्धाङ्गनानां धवलागशब्दैरापूर्यमाणाः ककुभः प्रयाणे ।
मिश्रेण तूर्यध्वनिनेव क्षुप्ता नियोगराजो विजयं शशंसुः ॥ २८ ॥
कृपाकृपाणाऽऽपणमेव पाणिं कुर्वन् जयार्हं समयं विचार्य ।
अङ्गैरुपाङ्गैः सुभगं सुबोधद्विपं नियोगप्रभुराररोह ॥ २९ ॥
नयद्वयं प्रोन्नयतः प्रजासु शक्तित्रयीं भावयतः स्वचित्ते ।
शुद्धैरुपायैर्नितरां चतुर्भिस्तस्यार्थसिद्धिः सकला करस्था ॥ ३० ॥
‡अस्तेऽश्ववारे पुरुषोत्तमेऽस्य नृसिंहरूपे नरकुञ्जरे वा ।
रुचिर्यथार्थाऽर्हति दार्ढ्यमाप्तानुरागिणी दिग्विजये त्रिसायम् ॥ ३१ ॥

[२४] १ "°शिक्यम्" काचः "काचः शिक्यं तदालम्बः" इति हैमः [अभि० चिं० कां० ३ श्लो० २८]। २ "व्यामोहम्" विस्मयम् ॥

[३१] ३ "अस्ते" परे । ४ "अश्ववारे" स्वकीये । ५ "पुरुषोत्तमे नृसिंहरूपे" शौर्यातिशयशालिनि । ६ "नरकुञ्जरे" महतिगभीरे । ७ "रुचिः" इच्छा दार्ढ्यमर्हति; रुचिः जिने दृढत्वं प्राप्ता । ८ "यथार्था" सत्या यथायोग्या वा । ९ "आप्तानुरागिणी" आप्तोऽत्र चारः, "अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्तः" इति वादिदेवसूरिः [प्रमाणनयतत्त्वालोके परि० ४ सू० ४] आप्तस्वरूपानुरागिणी प्रणयिनी । १० "त्रिसायम्" त्रिसन्ध्यम् ।

[25] 1 "°नान्दीनिनदः" नान्दी पूर्वरङ्गार्थं तस्य निनदो घोषः । 2 "विरस्य" शब्दं कृत्वा ।

[26] 3 "तत्त्वाध्यवसायधीरः" जीवादितत्त्वचिन्तनपरायणः । 2 "तमोभूरुहभेदिपार्श्वम्" तिमिरवृक्षोन्मूलनपरशुम् ।

[28] 4 "श्राद्धाङ्गनानाम्" श्राविकाणाम् । 5 "धवलागशब्दैः" श्रेष्ठमेघाऽऽरवैः । 6 "क्षुप्ताः" क्षिप्ताः "क्षुप्तनुत्तास्तनिष्ठ्यूतान्याविद्धं क्षिप्तमीरितम्" इति हैमः [अभि० चिं० कां० ६ श्लो० ११८]।

[29] 7 "कृपाकृपाणाऽऽपणम्" दयाखड्गहट्टम् । 8 "समयम्" सिद्धान्तं कालं वा "समयः शपथे भाषासम्पदोः कालसंविदोः, सिद्धान्ताऽऽचारसङ्केतनियमावसरेषु च; क्रियाकारे च निर्देशे" इति हैमः [अने० सं० कां० ३ श्लो० ५४१] । 9 "अङ्गैः" आचाराङ्गाद्यैः शरीरावयवैर्वा । 10 "उपाङ्गैः" औपपातिकादिभिरङ्गुल्याद्यैर्वा । 11 "सुबोधद्विपम्" ज्ञानगजम् ।

[30] 12 "नयद्वयम्" नयद्वितयम् "नीयते येन श्रुताऽऽख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः, स प्रतिपत्तुरभिप्रायविशेषो नयः" इति वादिदेवसूरिः [प्रमाणनयतत्त्वालोके परि० ७ सू० १]; "स व्याससमासाभ्यां द्विप्रकारः" [७-२] "व्यासतोऽनेकविकल्पः" [७-४]; "समासस्तु द्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च" [७-५] ॥ 13 "प्रोन्नयतः" उपदिशतः । 14 "शक्तित्रयीम्" मोक्षमार्गसाधिकां सम्यग्ज्ञान-दर्शन-चारित्रात्मिकां गुणत्रयीम्; पदार्थस्य वा, उत्पाद-व्यय-ध्रौव्यात्मिकां गुणत्रयीम् । 15 "उपायैः—चतुर्भिः" धर्मार्थ-काम-मोक्षस्वरूपोपायचतुष्कैः । 16 "अर्थसिद्धिम्" हेतुसिद्धिम् ।

* P न । † A °नाय° । ‡ P अस्ते ।

याात्रासु यात्राऽऽशु परत्रसिद्ध्यै संप्रार्थ्यते पत्ररथाङ्गचर्या ।
सर्वाङ्गयोग्या समुपस्थिता सा प्रयाणके पुण्यवशाद् वरेण्या ॥ ३२ ॥
शङ्खाः प्रणेदुः पटहा जगर्जुरध्वर्युवाचोऽध्वनि दध्वनुश्च ।
हेषाविशेषः कृतभूषणेऽश्वे बभूव भूवल्लभदुर्लभोऽपि ॥ ३३ ॥
कन्याऽप्यलङ्कारभरेण धन्या प्रदक्षिणाऽऽशीर्षु विचक्षणाऽगात् ।
चापादिभाषा फलिता सुशाखाखासीत् प्रवासी हितकार्यसिद्ध्यै ॥ ३४ ॥
पुरस्सरद्भिः कृतहस्तलोकैरभिक्रमस्तस्य पराक्रमार्हैः ।
स्तुतिव्रतैस्तीव्रतया प्रशस्यः कौशल्यतः शल्यमभूद् रिपूणाम् ॥ ३५ ॥
पुरः पुरोऽस्याः वृषभा निरीयुस्तेऽत्रस्थितेर्हन्त ! भरं वहन्तः ।
सङ्घस्य योग्याः कृतसाधुरथ्यारम्भाः परं भाविकसद्धिमूल्यै ॥ ३६ ॥
नदन् मदच्छेदकृते परेषां गवां स दैवानुगतोऽर्जुनीनाम् ।
धनेन तुल्यां स्वयशःप्रशस्तिं प्रकाशयन् भद्रगणे व्यहार्षीत् ॥ ३७ ॥
मरुप्रियाणां पथि मौनभाजां महाङ्गयोग्यं भरमाश्रितानाम् ।
राजी जगामाग्रत एव देवप्रयुक्तयुक्तस्थितये जनानाम् ॥ ३८ ॥

---

[३२] १ "पत्ररथाङ्गचर्या" शकुनचेष्टा; पत्रं यानं रथः प्रसिद्धस्तयोरङ्गानां चेष्टा ॥

[३५] २ "कृतहस्त०" कृतहस्तो बाणयुक्तः पण्डितो वा । ३ "स्तुतिव्रतैः" मङ्गलैः ॥

[३६] ४ "वृषभाः" गणचिन्तका मुनयः । ५ "तत्र०" तत्रं कटकं परिवारो वा ॥

"तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दप्रधानयोः ।
अगदे कुटुम्बकृत्ये तन्तुवाये परिच्छदे ॥
श्रुतिशाखान्तरे शास्त्रे करणे ग्रर्थसाधके ।

इतिकर्तव्यतावन्त्वयोः" इति हैमः [ अने० सं० का० २ श्लो० ४३५-३६-३७ ] । ६ "कृतसाधुरथ्याऽऽरम्भाः" कृतः साधुः श्रेष्ठो हितो वा रथ्यासु रम्भाः पथिषु कदम्बः कृतः साधुमार्गोऽऽरम्भो वा । ७ "भाविकसद्धिमूल्यै" भाविनी कल्याणी विभूतिर्धर्मीचररूपं महत्त्वं सती विभूतिकाले वा ॥

[३७] ८ "परेषाम्" मतान्तरीयाणां शत्रूणां वा । ९ "गवाम्" वाचाम् । १० "सः" प्रसिद्धः । ११ "दैवानुगतः" दैवेन युक्तः; सदैव नित्यमिति पदविभागे । १२ "अर्जुनीनां धनेन" अर्जुनीनां सुरभीणां धनेन व्रजेन "व्रजं गोकुलं गोधनं धनम्" इति हैमः [ अभि० चिं० का० ४ श्लो० ३३९ ]; यद्वाऽर्जुनीनां गवामनुगतः । १३ "तुल्यां स्वयशःप्रशस्तिम्" धनानुसारियशोवृत्तिम् । १४ "भद्रगणे" साधुगणे "भद्रं तु मङ्गले, मुस्तश्रेष्ठयोः साधौ काञ्चने करणान्तरे; भद्रो रामचरे हस्तिजातौ मेरुकदम्बके, पथि शम्भौ" इति हैमः [ अने० सं० का० २ श्लो० ४५४-५५ ] ॥

[३८] १५ "मरुप्रियाणाम्" मरुप्रिया उष्ट्राश्चेषाम् "मरुः पर्वतदेशयोः" इति हैमः [ अने० सं० का० २ श्लो० ४५८ ] स देशः प्रियो येषो पर्वतो वा योगमायाभ्यास् । १६ "महाङ्गयोग्यम्" महाङ्ग उष्ट्रविशेषः, महाश्च याम्यहाम्यचारादीनि तद्योग्यम् । १७ "देवप्रयुक्त०" देवेन राज्ञा "देवानु भूपतौ तोयदे सुरे" इति हैमः [ अने० सं० का० २ श्लो० ५३८ ] ॥

---

[32] 1 "परत्रसिद्ध्यै" परलोकगमनार्थे । [illegible] "यौष्ट्र" उष्ट्रा । [33] 3 "पटहाः" दुन्दुभयः "भेरी दुन्दुभिरानकः पटहः" इति हैमः [ अभि० चिं० कां० २ श्लो० २०८ ] । 4 "अध्वर्युवाचः" अध्वर्युर्यजुर्विद् तस्य वाचः मन्त्रानि । 5 "हेषाविशेषः" अश्वानां शब्दविशेषः, "हेषा हेषा तुरङ्गाणाम्" इति हैमः [ अभि० चिं० कां० ६ श्लो० ४१ ] ।

[35] 6 "अभिक्रमः" "अभिक्रमो रणे यानमभीतस्य रिपून् प्रति" इति हैमः [ अभि० चिं० कां० ३ श्लो० ४५५ ] ।

श्रेणीमयानां हि यथाप्रवृत्ताऽनिवृत्तिरूपां सुगतिं गतानाम् ।
पुरोहितानां चतुरोहितानां बलात् कलाकौशलमांसलाऽऽभात् ॥ ३९ ॥
अवेक्ष्य तत्रावसरे सरेखश्रियाऽऽशुपत्राणि जनप्रियाणि ।
मुखाम्बुजे घोषकला न कस्य प्रादुर्बभूव ध्रुवधैर्यभाजः ॥ ४० ॥
मनोरथानां गतिराचकर्ष महात्मनः शुद्धपथं निवेद्य ।
निष्कण्टके भूवलये विहृत्याऽसौ धर्मशोभानुभवेऽतिलोभात् ॥ ४१ ॥
उच्चैरथाङ्गाध्ययनेन मार्गवैषम्यमाच्छिद्य जगाम सद्यः ।
नियोगराजो ह्यनुयायितन्त्रं मन्त्रं विनिश्चित्य हृदि स्वतन्त्रम् ॥ ४२ ॥
सेनान्यधीशानुगमागमानां वेत्ता विधाता समितिक्रियाणाम् ।
त्राता बहुन्यायविदां मुनीनां सङ्घोऽनतीचारतया चचार ॥ ४३ ॥
पञ्चाङ्गिकायामतिसारणेन यद्यो यभूवास्य कुशासनोऽपि ।
मार्गे मिलद्वाडवबर्ग एव नियोगराजस्तपसां समाजः ॥ ४४ ॥
स वारणानां घटनाभिरेच्छत् कुमार्गमुन्मथ्य पथः पटुत्वम् ।
गन्धर्ववृन्दैरनुगम्यमानश्चक्रीव सम्यग् नयचक्रगत्या ॥ ४५ ॥
शिक्षासु दक्षो बहुधा रणानां सहास्तिकानां विभवेन सेव्यः ।
बलन्नियोगाधिपतिर्विरेजेऽनेकान्तकान्ताऽऽतपवारणेन ॥ ४६ ॥

---

[ ३९ ] १ "श्रेणीमयानाम्" मयानां श्रेणीति पदविभागे मयानामुष्ट्रविशेषाणां श्रेणी पङ्क्तिः; पदाविभागे श्रेणीमयानां कारसंहतिप्राधान्यवताम् । २ "चतुरोहितानाम्" उष्ट्राकर्षकाणाम् । ३ "कलाकौशलमांसला" कला विज्ञानमुपकरणपटूकरणे चातुर्यपुष्टाऽभात् ॥

[ ४० ] ४ "°पत्राणि" यानानि शिबिका सुखासनादीनि; पत्राणि पुस्तकरूपाण्यवेक्ष्य वा । ५ "मुखाम्बुजे घोषकला" मुखप्रसन्नता; मुखे ज्ञानकला वा । ६ "°धैर्यभाजः" धैर्यं शौर्यं पाण्डित्यं वा ॥

[ ४१ ] ७ "मनोरथानां गतिः" मनोरथा यत्र चलन्ति तेषां मार्गः "गतिर्वैहद्गे ज्ञाने योन्नोपायदशाध्वसु" इति हैमः [ अने० सं० कां० २ श्लो० १६८ ] पक्षे रथानां गतिर्महात्मनो मन आचकर्ष । ८ "आचकर्ष" वशीचकार । ९ "महात्मनः" उदारलोकान् । १० "विहृत्य" विहारेण शोभानुभवे । ११ "असौ" सेनानीः ॥

[ ४२ ] १२ "उच्चैरथाङ्गाध्ययनेन" उच्चैः अथ अङ्गाध्ययनेन इति पदविभागे अङ्गाध्ययनेनाऽऽचाराङ्गादीनां पठनेन; उच्चैः रथाङ्गाध्ययनेन इति पदविभागे रथाङ्गाध्ययनेन रथाङ्गं रथपादोऽस्याध्ययनेन बहुगमनेन । १३ "मन्त्रम्" गुप्तवादम् "मन्त्रो देवादिसाधने, वेदांशे गुप्तवादे च" इति हैमः [ अने० सं० कां० २ श्लो० ४५७ ] ॥

[ ४३ ] १४ "°अनुगमागमानाम्" अनुगमोऽनुसारः, सूत्रार्थानुगमो वाऽनुयोगद्वारम् । १५ "समितिक्रियाणाम्" ईर्यादिक्रियाणाम् "समितिर्युधि सङ्गमे, साम्ये समायामीर्यादौ" इति हैमः [ अने० सं० कां० ३ श्लो० ३३२-३३३ ] ॥

[ ४४ ] १६ "पञ्चाङ्गिकायाम्" पञ्चाङ्गान्यवयवा यस्याः पञ्चाङ्गी खलीनं तस्याम् "कवी खलीनं कविका कवियं मुखयन्त्रणं पञ्चाङ्गी" इति हैमः [ अभि० चिं० कां० ४ श्लो० ३१६-१७ ] अतिसारणेन; पञ्चाङ्गिकायाः सूत्र-निर्युक्ति-भाष्य-चूर्णि-वृत्तिरूपायामतिसारणेन वा । १७ "कुशासनः" कुज्ञानामशनं यस्य कुत्सितशासनो वा । १८ "वाडवबर्गः" ब्राह्मणसमूहोऽश्वसमूहो वा ॥

[ ४५ ] १९ "वारणानाम्" हस्तिनाम्; स्मारणा-वारणानां स्वमार्गपरमार्गविधिनिषेधानाम् । २० "गन्धर्ववृन्दैः" गायनलोकैरश्ववृन्दैर्वा ॥

[ ४६ ] २१ "बहुधारणानाम्" बहुधा रणानामिति पदविभागे बहुधा युद्धानाम्; बहुधारणानामिति पदाविभागे धीगुणविशेषाणां वा । २२ "सहास्तिकानाम्" सः हास्तिकानामिति पदविभागे 'सः' प्रतीतः, हास्तिकानां हस्तिसमूहानाम्; सह आस्तिकानामिति पदविभागे सह युगपद् आस्तिकानाम् ।

सनिश्चयोऽयं व्यवहार्यमेवमनेन वालव्यजनद्वयेन ।
उन्नीयमानप्रभुताद्भुतश्रीरादेशभूभृज्जयसम्पदाऽऽगात् ॥ ४७ ॥
आचारयोगादधिगत्य लोके भावं स्वकीयं यदि वान्यदीयम् ।
विमर्शयन् द्रव्यगुणोपपत्तिं रराज निर्व्याजतया स राजा ॥ ४८ ॥
यथास्थलं भावनया नयानां संभावयञ्शुद्धदृशा भृशार्थम् ।
सार्धं पट्टकृत्य महोदयार्थमादेशदेशाधिपतिः प्रतस्थे ॥ ४९ ॥
आप्तोपहारानभिमन्यमानः सुखानुयोगप्रतिदानवृत्त्या ।
स्थिरीचकार स्वजनान् जिनानां नानाङ्गवाचा रुचिवर्द्धनेन ॥ ५० ॥
अनेकपानां बहुदानवृत्तिं प्रोद्भावयन् बोधितरौ नियम्य ।
सांधोरणस्मारणमुक्तियुक्त्या ररञ्ज चेतांसि महात्मनां सः ॥ ५१ ॥
तत्रैऽस्य कोदण्डगुणाधिरोपलक्षेपु दक्षो न रसे नयार्च्यः ।
सर्वो जनः क्षेत्रविभागवेदी नेदीयसीं सिद्धिमिवान्वमंस्त ॥ ५२ ॥
मुक्तेष्वमुक्तेपु यथार्थसंज्ञां प्रज्ञापयन् शुद्धदृशा नियोज्ये ।
कृत्वाऽपराद्धेपु जुगुप्सनानि स सज्जनानां पटुतां व्यधत्त ॥ ५३ ॥
मत्वा प्रचक्रं विषयेपु चक्रं शक्रं पराकर्तुमिवात्तवक्रम् ।
आधाय वाचंयमरूपमेप गुरोः पुरोऽस्या वहिराजगाम ॥ ५४ ॥
स निष्कुटान्तः पटचारुकुट्यां स्थित्वा गुरूदिष्टविधौ पटिष्ठः ।
आलोचयन्मन्त्रममात्यधैर्यैः रात्रिं व्यतीयाय महोत्सवेन ॥ ५५ ॥*
श्रेणी विरेजे नवकेणिकानां वेणीव लोलोर्मि सरिद्वरायाः ।
प्रमोदयन्ती नवराजहंसान् सचक्रवालस्थितिकौशलेन ॥ ५६ ॥

[४८] १ "आचारयोगाद्" चाराणां गूढपुरुषाणां सम्बन्धात् । २ "द्रव्यगुणोपपत्तिः" द्रव्यस्य गुणानां उपपत्तिः प्राप्तिः ॥

[५०] ३ "आप्तोपहारान्" आप्तः प्राप्त उपहारो येभ्यस्तान् जिनानां पूजा येषां ते आप्ता वा । ४ "सुखानुयोगप्रतिदानवृत्त्या" सुखप्रश्ननिक्षेपप्रतिदानविधिना । ५ "नानाऽङ्गवाचा" अङ्गानां राज्याङ्गानां स्वाम्यादीनां वाचा, आचाराङ्गयुक्त्या वा । ६ "रुचिवर्द्धनेन" रुचेर्मदेच्छाया वर्द्धनेन, निसर्गरुच्यादेर्वा ।

[५१] ७ "अनेकपानाम्" अनेकान् पान्तीत्यनेकपा महात्मानो हस्तिनो वा तेपाम् । ८ "बोधितरौ" पिप्पले, सम्यक्त्वरूपे वा । ९ "नियम्य" नियन्त्र्य नियमं कारयित्वा वा । १० "साधोरणस्मारणमुक्तियुक्त्या" सा आधोरणस्मारणमुक्तियुक्त्येति पदविभागे, आधोरणा हस्तिपालास्तेषां स्मारणेन युक्त्या वा मुक्तिर्बन्धनान्मोक्षस्तद्योजनेन, साधोः अणस्मारणमुक्तियुक्त्येति पदविभागे साधोः सज्जनस्याणे सुज्ञादिशब्दे स्मारणं तन्मुक्तिर्मौनं तयोर्योगेन वा ॥

[५२] ११ 'कोदण्ड" कोदण्डं धनुः । १२ 'गुण" गुणः प्रत्यञ्चा जीवा । १३ 'लक्षेपु दक्षः न' लक्षं संख्याविशेषस्तेपु न दक्षः, लक्ष्यं वेध्यं वा । अस्य तत्रे दण्डो व्यूहादिः गुणवृद्धिः । लक्षं कपटं तेपु को न दक्षः । "लक्षं व्याजशरव्ययोः संख्यायामपि च" । १४ 'रसे' वीर्ये 'रसः स्वादे जले वीर्ये शृङ्गारादौ विपे द्रवे । बोले रागे देहे धातौ तिक्तादौ पारदेऽपि च ॥ १५ 'नयार्च्यः' नीत्या पूज्यः, न स्वकीयोऽयमिति बुद्ध्या ॥

[५३] १६ 'मुक्तेष्वमुक्तेपु' सिद्धेपु असिद्धेपु मुक्तममुक्तं शास्त्रभेदस्तेपु । १७ 'अपराद्धेपु' अपराद्धो विराधकः च्युतेपुर्वा । १८ 'सज्जनानाम्' सज्जनं तुपरक्षणं तेपाम् । १९ 'पटुताम्' पाण्डित्यं पाटवं वा ।

[५४] २० 'प्रचक्रम्' चलितं चक्रम् । २१ 'विपयेपु' मोहजन्येपु । २२ 'वक्रम्' प्रतिकूलम् । २३ 'आधाय वाचंयमरूपमेप गुरोः' गुरोः वाचंयमरूपमाधाय यद्वाऽयमरूपं प्रचक्रं मत्वा गुरोर्वाचमाधाय ॥

[५५] २४ "केणिकानाम्' केणिका पटकुटी तासाम् । २५ 'नवराजहंसान्' नृपमुख्यान् । २६ 'सचक्रवालस्थितिकौशलेन' सता चक्रवालं समुदायस्तस्य, सन् यः चक्रस्य चक्रवाकस्य वाऽऽः ॥

* पद्पञ्चाशत्तमश्लोकदेकनवतितमश्लोकपर्यन्तस्यैकं पत्रं A प्रतौ विनष्टमतोऽत्र P प्रतेरुद्धृतम् ।

अहर्निशाभ्रभ्रमखेदभाजां विश्राममूमीव शरदुर्घनानाम् ।
वाटी प्रपाटीपयसः किलाटी वाऽऽटीकते साद्भुतया तयाऽसौ ॥ ५७ ॥
पुर्या महेभ्यालयशुभ्रभासा वनद्युतिर्न्यक्क्रियते स्म नीला ।
तद्वैरभावादिव केणिकाभिः सा निर्जितात्यूर्जितया तयापि ॥ ५८ ॥
तत्रानुयाताऽऽर्हतसंघमध्ये भृशं प्रवृत्तेर्हयहेषितानाम् ।
विमिश्रितानां गजबृंहितेन न्यवेदि मेघाभ्युदयस्तदानीम् ॥ ५९ ॥
अथ प्रभाते प्रसृतेऽवदाते प्रसन्नवाते विकचाम्बुजाते ।
वियत्तरौ जीर्णतयेव जाते नक्षत्रपत्रव्रजसंनिपाते ॥ ६० ॥
सहस्ररश्मेरुदयाय धाता सर्वाधिकं धाम निधित्सुरस्मिन् ।
नक्षत्रलोकादिव संजहार तेजः समग्रं युगपत् प्रभाते ॥ ६१ ॥
भानोर्विभाऽस्तंगमने विकीर्णा नक्षत्रमूर्त्या शुशुभेऽन्तरिक्षे ।
महोदये स्वे पुनरुग्रधाम्ना ततः समाकृष्य कृताऽऽत्मसात् सा ॥ ६२ ॥
वियद्वनान्तर्विचिशुलुं पत्युर्वियोगदुःखाद् रुचयोऽभ्रदम्भात् ।
तद्दूरदेशादधिपेऽभ्युपेते समं ययुस्ता इव संप्रयोगम् ॥ ६३ ॥
विभा विभान्ति स्म नभोविभागे नक्षत्रलोके ननु तावदेव ।
अहर्पतिः क्षत्रतया प्रतीतः साम्राज्यभारं न बभार यावत् ॥ ६४ ॥
द्वीपेऽवनीपाद्विजनैः प्रदीपाः प्रकाशिताः खे त्रिदशैश्च ताराः ।
वैयर्थ्यमर्कादुभयस्य तस्मात् प्रभातवातादिव तद्वियातः ॥ ६५ ॥
साक्षात् कटाक्षा इव दिग्वधूनां द्विजाधिपे वैभवसंनियुक्ते ।
नक्षत्रलक्षाद् दिवसेऽथ सर्वे किं संहृतास्तत् क्षयवीक्षणेन ॥ ६६ ॥
रात्रौ नभःश्रीर्विधृताङ्गरीला तस्थौ तदीयाऽऽभरणान्युडूनि ।
शोणांशुकेन त्रपितेव शूरे रागात् प्रगे तानि पुनोऽप्यधत्त ॥ ६७ ॥
दिशां बलिं यद् विदधे द्विजेशः स्वस्याधिपत्यार्थमुडुप्रसूनैः ।
सहस्ररश्मिस्तु करैः स्वकीयै रोषादिवामूनि पराचकार ॥ ६८ ॥
विश्रीयिता यौस्तमसेव लिप्ता तारास्वरूपाश्निशयेशभक्त्यै ।
साम्राज्यमासेदुपि पद्मिनीशे शापात् तदुन्मृष्टमिवाम्बुजिन्या ॥ ६९ ॥
यद्रोपना दिग्वनिताभिरिन्दोरकारि नक्षत्रधियाक्षतौघैः ।
तद्वारुणीसंगमनादिवैतान् वाताद् विनिन्ये विधिरेव दूरे ॥ ७० ॥
पत्युः प्रसादान्निशयाऽप्यलम्भि तारावतारायहुरूप्यऋद्धिः ।
निस्सार्य लोकादिव तां सनाथां सैवापजह्रेऽम्बुजिनीवरेण ॥ ७१ ॥
प्रकाशभावः कमलाकराणामाच्छिद्य राज्या भगणे न्यवेशि ।
तद्वैपरीत्यं दिवसश्रियाऽपि न विस्मयः स्यात् समयक्षयेऽस्मिन् ॥ ७२ ॥
काले कराले तमसान्तराले लोकस्य तेजो भगणांशुमात्रम् ।
तेजोनिधेरभ्युदये तमोऽपि दोषाकराङ्के शितिमावशेषम् ॥ ७३ ॥

[ ५७ ] १ 'किलाटी' दुग्धविकारविशेषः ।

निशीव पत्युर्विरहान्नभःश्रीर्हृदि स्फुटं छिद्रवतीव धिष्ण्यैः ।
रविप्रदत्तद्युतिशोणवासाः प्रसद्य सद्यः प्रगुणेव जज्ञे ॥ ७४ ॥
द्विजेशराज्ये ग्रहसंग्रहेण वराटिकानां गणनेव संपत् ।
सहस्रधाम्ना वसुधा सुवर्णमया च बालाऽऽतपतः प्रचक्रे ॥ ७५ ॥
जग्ध्वा मृगाङ्कं क्रमतः प्रतीच्याः पत्या जिघत्सातिशयोपपत्त्या ।
नक्षत्ररूपाखिलशालिपुञ्जः पलादवृत्त्या बुभुजे क्षणेन ॥ ७६ ॥
भुक्त्वा तमःसूपयुतोडुशालिपिण्डान् सचण्डद्युतिरुद्यतोऽपि ।
ताम्बूलरागं वदने न्यधत्त कायेऽरुणस्तेन परं प्रमत्तः ॥ ७७ ॥
यत्प्राणनाथेन मदङ्गनानां हृतेन्दुना श्रीरिह पद्मिनीनाम् ।
तस्या हि राज्ञेरुडुमौक्तिकस्रक् छिन्नेऽतिरोषाद्रविणेव मत्वा ॥ ७८ ॥
पत्युस्तदास्तंगमने हिमांशोस्ताराः स्त्रियस्तद्विरहेण दूनाः ।
प्रभातसन्ध्यारुणिमाऽनलान्तः सत्यो हि सत्यं विविशुर्विशुद्धाः ॥ ७९ ॥
कुमुद्वतीभिर्मधुपा विलेसुस्ताराराची रागधरे ग्रहेशे ।
न्यवीविशद् दुःखभरादितीव द्विजाधिपः श्यामरुचिः पयोधौ ॥ ८० ॥
धृपाज-मीनाद्युपभोगदोषो दोषाकरस्याभ्युचितो द्विजेशः ।
मा भून्ममेतीव विमृज्य ताराः सहस्रधामाऽभ्युदियाय शुद्धः ॥ ८१ ॥
प्रियाः प्रियाश्चन्द्रमसो हि ताराः स्पर्शो न तासामकलङ्किनोऽर्हः ।
एताः परामृज्य पुरः प्रभाभिः शूरः सुवृत्तः समुदेति तेन ॥ ८२ ॥
सहस्रभानावुदिते नभःश्रीस्तारासुमैर्न्युञ्छनकानि कृत्वा ।
निदर्शयन्ती नवरागमाधादामोदमालीष्विव पद्मिनीषु ॥ ८३ ॥
तपोधनानां बहुयोधनानां योगान्नियोगाधिपतिर्धरित्रीम् ।
तदा पवित्रीकुरुते स्म लोके वृत्तिं यथासूत्रतया प्रयोज्य ॥ ८४ ॥
तैः सावधानैः प्रतिभानिधानैर्वशीकृता वाडवजातिरग्रे ।
चित्राणि धृत्वा सुखयन्त्रकाणि चचार मार्गे कृतरश्मियोगा ॥ ८५ ॥
चिन्वन् यशोनिर्जितपुष्पधन्वा तमोविभेदे नवशार्ङ्गधन्वा ।
धुन्वन् मनःसंशयमङ्गभाजां नियोगराड् धन्वनि स व्यहार्षीत् ॥ ८६ ॥
स प्राप सौवर्णगिरिं गरीयः शृङ्गैरभङ्गैर्दिवमालिहन्तम् ।
जिनेन्द्रचैत्योज्ज्वलमौलिलक्ष्म्या शैलाधिपत्यश्रियमुद्वहन्तम् ॥ ८७ ॥

[ ७६ ] १ 'मृगाङ्कः' चन्द्रो भेषजविशेषो वा ।
[ ८० ] २ 'ताराराचिः' ताराणां रुचिरिच्छा । ३ 'ग्रहेशे' सूर्येऽभूदिति शेषः ।
[ ८४ ] ४ 'वृत्तिं यथासूत्रतया प्रयोज्य' वृत्तिमाजीविकां प्रयोज्य, यथासूत्रं व्यवस्थानतिक्रमेण "सूत्रं तन्तुव्यवस्थयोः" यथासूत्रं वृत्तिं टीकामनुयोगे प्रयोज्य ।
[ ८५ ] ५ 'तैः' तपोधनैः । ६ 'सुखयन्त्रकाणि' खलीनानि यद्वा सुखभूमिसमासार्थेत्यादि सिद्धयन्त्रकाणि । ७ 'कृतरश्मियोगा' कृतः रश्मेर्वल्गाया योगो यस्याः सा रश्मिर्दीसियां ।
[ ८६ ] ८ 'तमः' "तमो राहौ गुणे पापे ध्वान्ते" ।

विशालसाले कपिशीर्षराज्या राज्याश्रयं स्वर्गपतेर्जहास ।
गर्जन्निवाद्रिर्नरसिंहनादैस्संतर्जयन् वा कुलशैललक्ष्मीम् ॥ ८८ ॥
कुलाचलैः सप्तभिरस्य शोभा लीलाभिरेकेऽपि मनाग् न धार्या ।
यस्याभिधारूपविधानिधानं मित्रं पवित्रं सुरशैल एव ॥ ८९ ॥
द्वीपस्य जम्बूपपदस्य राज्यं लघोरपि द्वीपकुले यदस्मात् ।
सुवर्णशैलाद् भरतेऽपि तत्त्वं प्रतीयतां वर्षकुलेऽपि किं नो ॥ ९० ॥
परः शतैरुन्नतशृङ्गभागैर्नभोविभागस्य कृतावलम्बः ।
शिलोच्चयः स्वामभिधां यथार्थां समर्थयामास सुवर्णधाम्ना ॥ ९१ ॥
शूरा द्विजेशाः कवयो बुधा वा यत्संनिधाने निवसन्त्यनेके ।
तन्मङ्गलाऽऽढ्या खलु रत्नसानुं किं नातिशेतामिदमीयलक्ष्मीः ॥ ९२ ॥
लघुर्गुरुर्वेति न चिन्तनीयं शंसन्ति सन्तो गुरुतां गुणेन ।
द्विधा सुवर्णाश्रयणान्महीयानयं विदेहे तु गिरिर्लघीयान् ॥ ९३ ॥
विद्याधराणां रमणीभिरद्रिर्धत्ते नितान्तं रमणीयभावम् ।
मणीभिरुद्भासितदिग्विभागे यत्कन्दरे सुन्दरमन्दिरश्रीः ॥ ९४ ॥
चैत्यादिवैतं नितमां तमांसि स्पृशन्ति नाद्रिं बहिरन्तरे वा ।
दिवा दिवाकृत्करसंनियुक्तं कान्त्यौषधीनां निशि चानुरक्तम् ॥ ९५ ॥
व्यालः शृगालं न युवाऽपि बालं महर्तुमीष्टेऽत्र कदाऽपि रुष्टः ।
जिनेन्द्रबिम्बातिशयाच्छयालुं पार्श्वेऽप्यजं नैव मतङ्गजारिः ॥ ९६ ॥
राशिर्मणीनामिव तोयराशेराकृष्य तुष्यद्भिरकारि देवैः ।
क्रीडापदं संपदमाश्रितानां समुन्नयन्नेष गिरिर्गरीयान् ॥ ९७ ॥
पुरी सुरीणामिव विस्मयेत् का रसाऽऽतुरीभावमिवोन्नयन्ती ।
रेजे तदुत्सङ्गपदेऽङ्गनेव जालन्धराऽऽख्यातिधरा धरायाम् ॥ ९८ ॥
यस्यां विहाराः विविधोपहारा हारावलीभिर्मणिमौक्तिकानाम् ।
दिव्याङ्गनानां नवगानशब्दैर्वितेनिरेऽमानविमानलक्ष्मीम् ॥ ९९ ॥
पाञ्चालिकानामथ बालिकानां चैत्यस्थचित्रेक्षणविस्मितानाम् ।
नेत्राम्बुजानामनिमेषवृत्त्या कः श्रद्दधाति स्म न देवलोकम् ॥ १०० ॥
चैत्येषु नित्याऽऽर्हतपूजनासु हल्लीसकैर्या जनरञ्जनाऽऽसीत् ।
तया दिदृक्षाऽऽगतदेवतानां व्यधायि तादात्म्यनिदानहेतुः ॥ १०१ ॥
देवीषु रूपातिशयो न पुण्यं लावण्यमङ्गे कमितुः सुखाय ।
तद्वैपरीत्यं भुजगाङ्गनासु वधूजनेऽस्यामुभयी प्रसिद्धिः ॥ १०२ ॥
कुलाङ्गनानां सकला कलाऽपि वैफल्यमाधास्यत चेज्जिनानाम् ।
पुरः स्फुरन्नर्तनगानवृत्तौ नैवाभविष्यत् सुरलोकमोहः ॥ १०३ ॥
सौभाग्यशोभाविभवेन यस्यां वधूः सुरीणामवधूतगर्वा ।
अस्मत्प्रियाणां प्रियताऽत्र माऽभूदितीव नैवाक्षिनिमेषभाजाम् ॥ १०४ ॥

यासां सदाऽऽसां प्रबभूव धीरः कामः समग्रावयवेषु देहे ।
हरक्रियाशुद्धिमिवाचिकीर्षुस्तासां मुखं किं जडजेन जेयम् ॥ १०५ ॥
अनक्षरेणाम्बुरुहाननानां न साक्षराणामुपमाप्रमाणम् ।
अस्मिन्नये सा श्रुतिरेव साक्षात् साक्षीबभूवाक्षयसंनिधानात् ॥ १०६ ॥
सुधाऽधरेऽधारि यथार्हवृत्त्या धीरेण धात्राम्बुजलोचनानाम् ।
तदाऽऽत्मकत्वेन सुधा सुधांशुः प्रांशुर्न तासां वदनोपमासौ ॥ १०७ ॥
रोपात् प्रकोपारुणतः स्ववृत्त्यै यश्चाऽददे वासवभैक्षमिन्दुः ।
महेभ्यकान्तावदनप्रभाभिः सनाभिरुच्चैर्भविता कथं सः ॥ १०८ ॥
स्मरस्य सख्यस्मरणान्निकामकामान्धलोकैरुपमा व्यलोकि ।
छायाभृति स्त्रीवदनस्य तस्याः प्रामाण्यसाक्षी न हि साक्षरः स्यात् ॥ १०९ ॥
वधूजनानां शयने द्विजेशो प्रकाशतां वासवरूपलक्ष्मीः ।
प्रातस्तदास्यद्युतिवैभवस्य दास्येऽपि नास्याऽऽस्य विपाण्डुरस्य ॥ ११० ॥
लघूभवन्निन्दुरलीकबिन्दुश्रियाऽश्रयत् स्त्रीजनवक्त्रमेव ।
स्पर्द्धाऽपि वर्द्धापनहेतवेऽस्य प्राप्तस्य दुःप्रापमुखप्रसङ्गम् ॥ १११ ॥
मतिभ्रमाद् विभ्रमभूमिकान्तामुखे विधेया शशिनोऽपि शङ्का ।
प्रकाशमात्रादवकाशमाप्य क्षणादनङ्के क्षणतः समाप्त्या ॥ ११२ ॥
तुलाकृतैकत्रवधूमुखेन गुणैः प्रसिद्धेन जगद्विधात्रा ।
परत्र चन्द्रेण विनाङ्कभारमन्ये स्फुटं लाघवमुन्नमेन ॥ ११३ ॥
माधुर्यमासां वचनेषु धुर्यं वैधुर्यविच्छेदिसुधाशनादेः ।
सुधाकरेणेव मुखप्रसत्त्यै सुधानिधानादुपदाऽप्यदायि ॥ ११४ ॥
वचो विपञ्ची क्वणितेषु तासां माधुर्यमाधात् स्वभृतेषु किञ्चित् ।
तत्तुल्यता चेत् परपुष्टवाचः काचः समः किं न मणेर्गणो यः ॥ ११५ ॥
निनंसया तीर्थकृतां नितान्तमुपेयुषीभिर्विबुधाङ्गनाभिः ।
मिथः परावृत्तिविधिर्वधूनां भवत्यलङ्कारपरम्परायाः ॥ ११६ ॥
ध्रुवं सुवर्णाचलसंनिधानाद् धनेश्वरानश्वरतां वदद्भिः ।
ध्वजैरजेयत्वगुणः पुरोऽस्या व्रजैर्बुधानां मनसाऽभिधार्यः ॥ ११७ ॥
प्रविश्य तस्यां पुरि पौरलोकैः प्रस्तूयमानः स नियोगराजः ।
समाजमानन्दयदार्हतानां गवां विलासेन जयश्रियाऽऽढ्यः ॥ ११८ ॥
जेता स्मरादेश्वरणप्रवृत्त्या धर्मं दृढीकृत्य पुरश्चचाल ।
अयं प्रसादाद् गणनायकस्यास्खलद्गतिस्तत्तिसमितिप्रतिष्ठः ॥ ११९ ॥
उद्भेदिनी स्वर्णपयोजराजी निवेदिनी सौरमहोदयस्य ।
पुष्णाति यस्यां कमलाविलासं तां मेदिनीपूर्वपुरीं ययौ सः ॥ १२० ॥
हंसावतंसा विबुधप्रशंसास्थानानि यत्राप्सरसां प्रदेशाः ।
उदीरयन्ते सुरसार्थलीलां सौधर्मलोकाभिगमप्रतीत्या ॥ १२१ ॥

जनः सहस्राक्ष इवातिदक्षः शुद्धार्थवृत्त्या शतकोटिधारी ।
रुच्यो विराजज्जयवाहिनीनां सुपर्वभिर्यत्र विनोदशाली ॥ १२२ ॥
सहस्रशो यत्र वसन्ति शूराः कलाभृतः सौम्यदशां प्रपन्नाः ।
मनीषया गौरवमावहन्तः काव्यानुमाव्यक्रिययाऽनुपक्ताः ॥ १२३ ॥
यद्वाटिकानां परिपाटिकाभिरामोदसारेण वशीकृतानि ।
सदा रमन्ते मिथुनानि दिव्यान्यामुच्य कल्पद्रुमसौरभाशाम् ॥ १२४ ॥
रम्भागृहाण्यद्भुतसंप्रयोगारम्भाद् विरम्भाधिकरूपसंपत् ।
कान्तानुरागात् समुपेत्य कान्ता याथार्थ्यमेषां कुरुते द्विधाऽपि ॥ १२५ ॥
जातिः परेषां वपुषाविशेषादामोदमुत्पादयतीति युक्तम् ।
सुखाय नृणां क्रकचच्छदोऽपि तस्याः प्रसङ्गादिव वाटिकायाम् ॥ १२६ ॥
फुल्लन्महामल्लिविसन्धगन्धाऽऽकृष्टा निकृष्टा अपि भृङ्गराज्यः ।
उद्गायन्ते करवाललीलां स्मरस्य नश्यद्भिरहार्त्तहत्यै ॥ १२७ ॥
गन्धैरनूनैः करुणप्रसूनैराकीर्यमाणोऽनुदिशं परागः ।
नरस्य वश्यंकरणं स्मरस्य दीक्षापरीक्षाविषये बभूव ॥ १२८ ॥
उन्निद्रपुष्पेक्षणवीक्षणेन व्यामोहयन्तीव लताश्रितास्याः ।
परिस्फुरत्पल्लवसंज्ञयैवाऽऽजुहोति विश्रान्तिकृते वनान्तः ॥ १२९ ॥
यन्दाकचारुद्युतिदम्पतीनां हासैः परं पायितपुष्पमासा ।
तद्भवप्रसौरभ्यभरस्य चौरैर्वातैर्विधृत्ताऽपि लता धृतैव ॥ १३० ॥
जिनार्चनार्थं कुसुमोच्चिचीषां हर्षाद् वधूक्षिप्तकरैरजस्रम् ।
लतानिकुञ्जे मृदुलप्रवालश्रीः शाश्वतीवास्य वनस्य जज्ञे ॥ १३१ ॥
आरुह्य पुष्पावचयेऽङ्गवर्णसवर्णताऽऽलिङ्गितचम्पकान्तः ।
गुप्ताऽपि कान्ताऽऽभरणप्रभाभी रराज काचिद् वनदेवतेव ॥ १३२ ॥
पुष्पाण्यवाकीर्य तरोः शिरस्था बाला सशालान्तरमारुरुक्षुः ।
मूलस्थितालीक्षितहेतुरासीत् सौभाग्यशोभाऽनुभवस्य लोभात् ॥ १३३ ॥
स्रजामजस्रं रचनेन काचित् साचिव्यमाप स्वजने वनेऽस्मिन् ।
प्रियैः प्रियैस्तैर्वचसां प्रयोगैरामोच्यमाना रमणीसमाना ॥ १३४ ॥
हासप्रकाशप्रसरन्महोभिः पुष्पानवाप्तावपि लक्ष्मणे ।
व्यापार्यमाणा करमम्बुजाक्षी सर्वां परं सेरमुर्वीं चकार ॥ १३५ ॥
जिनार्चनार्थमशेषमन्या प्रसूनवृन्दं निजशेखरेषु ।
निवेशयन्ती हृदयेश्वराणां विवाहवेलास्मृतिरन्वकार्षीत् ॥ १३६ ॥

---

[१२२] १ 'शुद्धार्थवृत्त्या' शुद्धाऽनुद्धतया यथार्थस्य द्रव्यस्य वृत्तितया । २ 'शतकोटिधारी' शतानां कोटिं धरति, शतकोटिर्वज्रं वा । ३ 'रुच्यः' स्वामी अभिलषणीयो वा । ४ 'जयवाहिनी' जयोपलक्षिता वाहिनी सेना वा । ५ 'सुपर्वभिः' देवैः सोमसोम्यैः ।

[१२३] ६ 'काव्यानुमाव्यक्रियया' काव्यैरनुमाव्या या क्रिया तया युक्ताः । शु वितर्के । काव्याः शुक्राः ।

[१२६] ७ 'क्रकचच्छदः' "क्रकचः करपत्रे स्याद् ग्रन्थिलावल्लरावपि" । "छदः पत्रे पक्षे ग्रन्थिपर्णतमालयोः" । क्रकच एव छदः पत्रोऽस्येति वर्धकिः सूत्रधारः ।

अर्चोऽनुशिष्टा दयितैर्विसृष्टाः कृष्टाः सखीभिः कुसुमस्रजोऽन्याः ।
स्वं सौमनस्यं सह सौरभेण न्यधुर्मधुव्याप्ततया वधूषु ॥ १३७ ॥
तस्मिन् वनेऽर्हद्भवनेन रम्ये श्रीआश्वसेनिर्भगवान् चकास्ति ।
यन्नामवर्णामृतपानमुच्चैः करोति लोकेष्वजरामरत्वम् ॥ १३८ ॥
वन्येभ-सिंहाग्नि-भुजङ्गजन्येऽजन्येऽरिराजन्यकृतेऽप्यजन्ये ।
जन्येत चेतःस्खलना न भीत्या यन्नाममन्त्रस्मरणप्रतीत्या ॥ १३९ ॥
नाम्नाऽस्य साम्ना नृपतिः स्वधाम्ना समानमानन्दयती हितार्थैः ।
नरं जयन्तं युधि रञ्जयन्तं सैन्यानदैन्याँस्तरसा रसाऽऽढ्यम् ॥ १४० ॥
कलाकलापः सकलातिशायी स्फुरत्यमुष्य त्रिजगत्सु मुख्यः ।
सभाजनानां रसभाजनानां सभाजनं नाम जयेज्जनो यः ॥ १४१ ॥
तन्त्रैः स्वतन्त्रैरपि नैव मन्त्रैर्मित्रैः पवित्रैरपि यद्विचित्रैः ।
साध्यं प्रसाध्यं तदिहार्थपात्रैराराध्यमुद्भावयतेऽस्य नाम ॥ १४२ ॥
न नाम कामः समुपाजगाम कः सिद्धिमुद्बुद्धिभृतोऽस्य नाम्नि ।
चिन्तामणौ सत्यपि सत्यचिन्ता फलेग्रहिः स्यान्नहि का विकाशात् ॥ १४३ ॥
नाम्नाऽऽस्यदाम्ना च हृदो विभूषा यस्यास्ति वश्या मरुतो वयस्याः ।
विश्वे यशःसौरभमेतदीयं तन्वन्ति रुद्धैव महोऽन्यदीयम् ॥ १४४ ॥
नाम्नामिहाऽऽम्नायविदां जिनस्य विनश्यदापत्परितापवृत्त्या ।
नृत्यानि नित्यं कमलाविलासात् पुरः सुरस्त्रीनिवहस्तनोति ॥ १४५ ॥
नाम्नाऽस्य धाम्नां निधिनेव देवैरसह्यतेजः प्रसरीसरीति ।
सिद्ध्यङ्गनाऽप्यङ्क ! वरीवरीति कीर्तिस्त्रिलोकीं प्रपरीभरीति ॥ १४६ ॥
नाम्नि स्फुरद्धाम्नि जिनेश्वरस्य जागर्त्ति कोऽपि प्रबलः प्रभावः ।
समुन्नयन् वैभवमङ्गभाजां लघूकरोति स्म भवानुभावम् ॥ १४७ ॥
ध्येयं परं तत्सुदृशां विधेयं देवाभिधेयं कमलाद्युपेयम् ।
प्रसाधयन्ती सुरसार्थगेयं पटूकरोत्येव यशोऽधिपेयम् ॥ १४८ ॥
अवश्यमेतस्य पदौ नमस्यन्नस्यन् विमोहस्य बलं विहस्य ।
तस्मिन् पुरेऽसौ कतिचिद् दिनानि निन्ये नियोगाधिपतिर्जयेन ॥ १४९ ॥
ग्रामादनुग्रामविहारतोऽयं त्यजन्नजस्रं निगमप्रदेशम् ।
मोहस्य तत्तद्विषयेऽतिचारं कुर्वन् न्यपेत्सीद् विषयेऽतिचारम् ॥ १५० ॥
स नासीरं धीरस्तपगणसुनासीरतपसा निरस्यन् मोहस्याचनिजजनितजैनप्रभुनया ।
नयस्थित्या लोके कृतकरणचातुर्यविजयो नियोगेशः श्रीमानुदयमदधाद् धार्मिकविधेः ॥१५१

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
प्रस्थानवर्णनो नाम नवमः सर्गः ॥

[ १३९ ] १ 'अजन्ये' अजन्ये उत्पाते युद्धे च ।

[ १४८ ] २ 'विधेयम्' कार्यम् । ३ 'देवाभिधेयम्' इयं देवाभिधा सुदृशां सम्यक्त्ववतां ध्येयम् ।

[ १५० ] ४ 'निगमप्रदेशम्' निगमो मार्गः, निगमानां वणिजां स्थानम् । "निगमाः पूर्वदिग्भेदनिश्चयाध्वनगिरूपथाः" ।

[ १५१ ] ५ 'नासीरम्' अग्रयानं मोहस्य । ६ 'कृतकरणचातुर्यविजयः' कृतः करणानां चातुर्येण विजयो येन सः । "अकृतक" इति पदविभागे अकृत्रिमकरणे चातुर्येण विजयो यस्य ॥

## दशमः सर्गः ।

अब्जबन्धुरथ बन्धुरथ्यान् नोदयन् पथि यथेच्छमनन्ते ।
तत्पिपासुरिव वार्द्धियियासुः पश्चिमां भृशमुपास्पृशदाशाम् ॥ १ ॥
वारुणीमधिगतं द्विजराजं वीक्ष्य दुर्णयपदं विनिनीषुः ।
शेषकोप इव शोषकृतेऽर्कः प्राप पश्चिमदिगम्बरदेशम् ॥ २ ॥
पूर्वगोत्रविशदीकरणेन प्राप्तदिग्वरवधूपरिभोगः ।
ध्वस्तदुस्तमतमोभरपापक्षालनाय रविरब्धिमियाय ॥ ३ ॥
हंस एष गगनामरसिन्धौ संतरन्निव कराऽऽयतपाशैः ।
पाशिना भुवमनीयत तीरं स्वाङ्गनागतिकलाऽध्ययनाय ॥ ४ ॥
प्रोल्लसत्सितपटैर्गगनाब्धौ यानपात्रमिव मित्रचरित्रम् ।
तेजसा निभृतमर्णवसद्माभ्यानयन्नयरुचिर्निजपार्श्वम् ॥ ५ ॥
फेनपिण्ड इव मण्डलमेतच्चण्डगोर्नु विधिना वियदब्धौ ।
प्रस्फुरन् वरुणलोकशिशूनां नर्मणेऽभिचकृपे सतृपेव ॥ ६ ॥
प्राग्धृतस्त्रिदशराजवधूभिरात्मदर्श इह भानुविमर्शः ।
तत्प्रतीपवरुणाम्बुजदृग्भिः स्पर्द्धया निजगृहे जगृहेऽसौ ॥ ७ ॥
प्रावृतः सितपटैः किमु पूर्वाधीशितुः रविमिषेण शताङ्गः ।
आसदद् वरुणराज्यजिघृक्षोर्मायया ऽपरदिशोऽपि सदेशम् ॥ ८ ॥
यज्जलानि महसा खलु शुष्यत्येष शोषसमयात् सविशेषम् ।
तत्पतिर्वरुणराड्वरुणस्य सिन्धुपातवत्पातकमाधात् ॥ ९ ॥
उद्यतस्य गगनाम्बुधितारारत्नराशिहरणादरुणस्य ।
पश्यतोहरकलार्णवरत्नान्याशुमस्तगिरिगुप्तिमधत्त ॥ १० ॥
वैरिणीभिरवदातविधीनां स्वैरिणीभिरिव वारुणलोके ।
चुम्बनेऽस्य विहितेऽधररागाच्छोणतामभृणुतारुणबिम्बम् ॥ ११ ॥
अस्तभूधरशिलासु विभिन्नः शातकुम्भनवकुम्भ इवार्कः ।
तत्कणैर्ग्रहगणैरिव कीर्णं व्योम सोममहसा सहसाऽऽप्यम् ॥ १२ ॥
भानुरस्तगिरिगैरिकयोगाद् योगवानिव कषायितवासाः ।
दूरतो निजपरिग्रहमौज्झद् रूप्यका ग्रहगणास्त इमे खे ॥ १३ ॥
प्रविवेश जलधौ जलधौतं स्वं विधातुमरुणामरहस्ती ।
उच्छलद्भिरिव तस्य कपोलाद् व्यानशे नु तिमिरैर्भ्रमरैः खम् ॥ १४ ॥
दूरदेशमभिजग्मुषि पत्यौ पद्मिनीभिरचिराद् विरहार्त्या ।
विश्लथा विदधिरेऽलिकचर्यैस्तत्कचैरिव तमोभिरुदीये ॥ १५ ॥
शूरदूरगमनान्मदपूराद् यन्निशाचरगणेन दिदीपे ।
माऽस्तु दर्शनमशुद्धममीषां पद्मिनीभिरिति मङ्क्षु निदद्रे ॥ १६ ॥

स्त्रीजनैर्निदधिरे मणिमुक्ता दिग्भिरुन्मुखतया निशि ताराः ।
स्पर्द्धया वसुधया विषमेषोर्मार्गणा इव लसद्रुचिदीपाः ॥ १७ ॥
स्नेहमुचशिखगेहमणीषु गेहिनी निदधती गुणवृत्त्या ।
कामिनां मनसि चापलतेवाऽऽकुञ्चिता मनसिजस्य बभासे ॥ १८ ॥
भूषणैर्वपुषि वेषविशेषैर्विभ्रमैरभिनवैर्विनतभ्रूः ।
मोहनेन मनसः खलु पुम्भिः काप्यपूर्ववनितेव निषेवे ॥ १९ ॥
लम्भितः स्फुटरमां चरमाद्रिमूर्ध्नि खण्डतनुचण्डरुचोच्चैः ।
दाववह्निजनितामिदमीयैर्व्यापि भूर्ननु तमस्तनुधूमैः ॥ २० ॥
साक्षिणारुणकृशानुभरेण संव्यवाह्य तनुना विजयश्रीः ।
तत्कृता ग्रहगणाक्षतवर्गैर्विस्तृता नभसि कुङ्कुमकान्तिः ॥ २१ ॥
निश्चिते भुविजये विजयेऽस्मिन् मूर्त्तधर्म इव धर्म्यमुहूर्त्ते ।
श्रीनिदेशान्नृपतिर्विशति स्म पातिसाहिपुरमुद्धुरधामा ॥ २२ ॥
यत्र चित्ररमणीजनभोग्या वाटिका वलयिताः परितस्त्रिः ।
शाटिका इव लसत्सुमनोभिर्व्यक्तभक्तिनिभृताः पुरवध्वाः ॥ २३ ॥
पाटिका इव मनोभवराजः शासनस्य सुमनोऽक्षरलक्ष्याः ।
घाटिकाः सुमनसामभिगम्या स्फाटिकाश्मघटितालिघटाभिः ॥ २४ ॥
आकुला द्विजकुलैर्बहुधाऽऽर्यबालकैः सुमधुरा मधुमत्तैः ।
शुद्धजातिसुमनःकमनीया राजधान्य इव ताः स्म रराज ॥ २५ ॥
झिल्लिकारणरणत्कृतिवेल्लद्वल्लिपल्लवनिकुञ्जपदैस्ताः ।
प्रोल्लसत्कुसुमतारकरूपाज्जज्ञिरे निवसतिर्वसतीनाम् ॥ २६ ॥
मल्लिकासुमनसां कलिकाभिर्वेश्म विस्मयदकन्दलिकाभिः ।
दम्पतीसुरतकर्मणि तासामानुकूल्यमिव शाश्वतमासीत् ॥ २७ ॥
*शाखिनां घनतयाऽनलताऽऽशु पस्पृशे दिनकृता करयोगात् ।*
पल्लवैः प्रकटितेऽपि च रागेऽस्याः विमृश्य रजसः समयं नु ॥ २८ ॥
चुम्बितां मधुकरैर्विटपेनाऽऽश्लेषमेव सविशेषमिवेक्ष्य ।
वल्लिमुल्लसितपल्लवहस्तामालिलिङ्ग दिनकृत्न करेण ॥ २९ ॥
उच्छलत्परिमलस्थलगुच्छः स्वच्छतीव्रकरमण्डललीलाम् ।
उत्परागपरभागपिशङ्गीभूतभूतलतयाऽप्यनुजह्रे ॥ ३० ॥
निर्गलन्मधुभरैर्घनवृष्टिः क्वापि नीरजरजोभिरदोऽन्तः ।
दीर्घिकाचपलवीचिसमीरैः क्वापि शीतमविनीतममूषु ॥ ३१ ॥
उच्छ्वसत् कुसुमगन्धभरेणाप्यासु भासुरतरा सुरभिश्रीः ।
सौहृदादिव दिवस्पतिजेतुर्विस्मयो न रमणे स्मरराजः ॥ ३२ ॥
योगिनां निवसतां वनदेशे लीनमात्मनि परे हृदयं स्म् ।
आचकर्ष सुमनःशरधारावर्षणान्मनसिजो विजयाय ॥ ३३ ॥

* P सा° ।

एत्य यत्सुरजनी रजनीषु मण्डपे सुमनसां सुमनोभिः ।
स्वीचकार सुरतं शुकवाचाऽमूषु तन्मिथुनान्यधिजग्मुः ॥ ३४ ॥
तालिकावलिचलाचलपत्रैर्मूर्च्छिता ह्युपवनात् पवनाऽऽली ।
पद्मिनी प्रणुदिताऽऽसु वधूनां द्राक् चकार रतखेदविभेदम् ॥ ३५ ॥

[इति वाटिकावर्णनम्]

उन्नमद्भिरभितस्तरुराज्या वाटिका सुविटपैरविलोक्या ।
सा विशालतरसालवरेण पर्यवेष्ट्यत पुरी गिरिणेव ॥ ३६ ॥
तत्पुरीशकृतभूतलभूयोवैरिराजधृतदुर्गविभङ्गात् ।
तुङ्गतां स नु गतः कपिशीर्षैरभ्रदुर्गकवलीकृतिमैच्छत् ॥ ३७ ॥
द्वेषिबुद्धिविषयाऽऽवरणेन भूतलाभरणवद् वरणोऽयम् ।
शीतगोः परिधिना कृतसख्यं शेषकुण्डलिकलाग्रहणाय ॥ ३८ ॥
शेष एष खलु शीर्षसहस्रं भूमिभारधरणाय बभार ।
तद्दिवोभरसहे वरणेऽस्याः शीर्षकोटिरपि साम्प्रतमेव ॥ ३९ ॥
कुण्डलीकरणकौशलवृत्त्या नागराज इह युक्तमधःस्थः ।
देवराजमपि किं नु विधित्सुस्तद्ददुन्नततरतां स जगाम ॥ ४० ॥
खातिकाऽऽकृतियलाञ्जलजन्यं पौरुषाऽऽवलिमिषाद्गलु वन्यम् ।
सालमुचपधिया स्थलवर्ग्यं किं त्रिधा भजति दुर्गमिहैवम् ॥ ४१ ॥
वप्रविप्रमतिलुब्धतयैव सर्वतोऽवति दिगम्बरभागान् ।
तं जिघृक्षुमरुणद् वरुणः किं खातिकापदभृताम्बुधिनेव ॥ ४२ ॥
आलवालजलमध्यनिरुद्धं सालमेधयति किं न विशालम् ।
खातिकाजलनिरर्गलसेकाद् वप्रवृद्धिरुचिरत्ताम्बरसीमा ॥ ४३ ॥
जन्मनैव हि निरावरणोऽयमम्बराय किमु धावति वप्रः ।
इत्यवेत्य विधिना ह्यनुकूलं निर्ममेऽस्य परिखाङ्कदुकूलम् ॥ ४४ ॥
पातिसाहिमहसा सहसाऽयं निर्गलन्निव जलैः परिखायाम् ।
भेजिवान् महिमवान् हिमवान् किं संनिधाय वरणावरणेन ॥ ४५ ॥
मस्फुरद्भिरभितः कपिशीर्षैर्बद्धमौलिरिव सालनृपालः ।
वह्निशस्त्रजनितध्वनिसारैर्वारयन्नरिजनानिव रेजे ॥ ४६ ॥

[इति प्राकारवर्णनम्]

राजवर्त्म विरराज नगर्याः सर्वदिक्षु विपणिस्थललक्ष्यैः ।
खेलनाय किल मण्डललक्ष्म्याऽधायि शारिफलमस्य मिषेण ॥ ४७ ॥
सर्वतो मुखमिदं सविशेषं विस्तृतं कनकरत्नगणाऽऽढ्यम् ।
विश्वमण्डलसमापतदुद्यत्सिन्धुजाभिगमजातरुचीव ॥ ४८ ॥
तोरणीभवदुदुप्रतिबिम्बा धोरणीह शुशुभे विपणीनाम् ।
पङ्क्तियुक्तिधृतमानविमानस्वर्जयाय विहितोन्नतमौलिः ॥ ४९ ॥

वाससां क्वचन शुक्लतमानां तेजसा सुरधुनीव पुनीते ।
दर्शनोत्सुकनृणां नयनानि सोल्लसत्तुरगतुङ्गतरङ्गा ॥ ५० ॥
व्यक्तरक्तवसनास्तरणेन शोणतामधिगता क्वचनेयम् ।
वाहिनीं नु विधिना जनितां सा जेतुमुद्यततया ध्वनिमाधात् ॥ ५१ ॥
आपतद् गजघटाऽऽकुलभावाद् राशिभिर्मृगमदस्य तथोच्चैः ।
क्वापि सूर्यदुहितुर्द्युतिगर्वं सङ्कुलः सकलमप्यपजह्ने ॥ ५२ ॥
साधयन्तु चतुरः पुरुषार्थानत्र चित्ररुचयश्चतुरेभाः ।
सर्वतोमुखतया विपणीनां श्रेणयो बभुरितीव चतस्रः ॥ ५३ ॥
दूरतः प्रययुरापणराज्या, आकृतिद्युतिभरैरनया द्राक् ।
निर्जिता इव हरिन्नृपतीनां लज्जया क्वचन राजनगर्यः ॥ ५४ ॥
आभिमुख्यजनितप्रतिबिम्बाद् रत्नभूमिषु पदार्थगणस्य ।
क्रायको भ्रमवशादितरस्मिन्नापणेऽत्र गमनेऽपि फलाढ्यः ॥ ५५ ॥
स्वर्णरूप्यमयपुञ्जितमुद्राव्याजतः किमिह राजसविश्रोः ।
रश्मयः सततविस्मयवृत्त्या सुस्थिता रुरुचिरे चिरमस्याम् ॥ ५६ ॥
सङ्कुलेऽतिविपुलेऽपि जनौघात् सङ्कुले किल मिथः परिमर्दात् ।
भूषणात् प्रपतयाल्लुमणीनां वृष्टिरेव निकरैर्निरधारि ॥ ५७ ॥
भूभुजामपि भुजार्जितवित्तैर्विस्मयाय वणिजो विपणिस्थाः ।
रेजिरे पुरि वरीतुमिवाप्तास्ते स्वयंवररमाः परमार्थात् ॥ ५८ ॥
श्रेणयः किमु परस्परशोभादर्शवन्मणिमया विपणीनाम् ।
तुल्यरूपविभवाद् भ्रमहेतुर्ग्राम्यविभ्रमवतीषु बभूवुः ॥ ५९ ॥
विस्तृता इव भुजाः पुरलक्ष्म्याः सर्वतोमुखतया जनरथ्याः ।
यत्र तत्र निदिशन्ति विमर्श्य नागरं विविधवास्तववृत्त्या ॥ ६० ॥
दक्षिणादिशि दशास्यपुरीयं सुप्रभाऽपि नगरोत्तरदेशे ।
पूर्वतः स्फुरति पर्वतभेत्तुर्वारुणं पुरमिहापरभागे ॥ ६१ ॥
वर्णितं न कविना भविना वा केन नाश्रितमिदं पुररत्नम् ।
एवमाह सकलास्वपि दिक्षु विस्तरन्निह चतुष्पथघोषः ॥ ६२ ॥

[ इति श्रीजिहांनाबादनगरचतुष्पथवर्णनम् ]

यत्र चित्रकृतचित्रपवित्रराजसौधधवलद्युतिवृन्दैः ।
निर्मलीकृतपयास्तनयार्कस्योन्मुखीभवति नामरसिन्धोः ॥ ६३ ॥
राजसौधशिखरैर्ननु हैमैस्तर्जितः सुरगिरिर्नु निनङ्क्षुः ।
शूरराजधिषणप्रमुखैः किं रुध्यतेऽस्य परितो भ्रमभङ्ग्या ॥ ६४ ॥
रत्नराशिरचितैर्नृपसौधैः प्रेक्षको हृतमना इव सर्वः ।
रोहणाचलरुचिं विमुमोच शोचते न लघुमभ्यधिकाप्तौ ॥ ६५ ॥

उच्चतां नरपतेर्निलयास्ते शूरराजवसुसंपदमग्रे ।
संग्रहीतुमिव केतुकरैः स्वैर्भेजिरेऽजिरमणीरमणीयाः ॥ ६६ ॥
पातिसाहिसदनेष्वनुरूपं रूपमद्भुततयाऽप्रतिरूपम् ।
किं विमृद्य रविजातिगभीरा वीक्षते शफरिकापरिवर्तैः ॥ ६७ ॥
राजराजधृतराजतपट्टवेश्मविस्मयकरद्युतिपुञ्जैः ।
तर्जितो हिमगिरिर्गलतीव पूज्यतामुपगतोऽपि पुरारेः ॥ ६८ ॥
भूपसद्मनिवहः स्वसुरूपं न न्यरूपयदयं भुवनेऽपि ।
तद्दिदृक्षुरिव मङ्क्षु कलिन्दकन्यकापयसि बिम्बमधत्त ॥ ६९ ॥
सार्वभौमरविमुख्यगृहस्य छत्रतां कलयतेऽम्बुजबन्धुः ।
पूर्णिमा हिमकरद्युतिसाधुमाधुरी भजति चामरवृत्तिम् ॥ ७० ॥
पूर्वयोदयगिरिः परयाऽऽस्तभूभृदुत्तरदिशा हिमशैलः ।
आदधे मलय एवमपाच्या राजसौधमिति मध्यमुवाऽपि ॥ ७१ ॥
आगमेऽभ्युदयभूधरशृङ्गे ज्योतिषामहिमगुप्रभृतीनाम् ।
मङ्गलं भवति दर्पणरूपे पातिसाहिसदने स्वविलोकात् ॥ ७२ ॥
विस्तृतत्रिभुवनक्षितिभर्तुर्यद् यशः सुरतरुगरिमाढ्यः ।
तस्य मूलमनुकूलतयैतद् भासतां सदनमप्यलघीयः ॥ ७३ ॥

[ इति श्रीपातिसाहिगृहवर्णनम् ]

श्रेष्ठिनां सदनसंततिरस्यां भूपसौधपरिवारतयैव ।
रामणीयकमधाद् बहुधा तु धातुमुख्यमणिजन्ममयूखैः ॥ ७४ ॥
अस्ति यत्र विबुधः सकलोऽपि दिव्यरूपवसनाभरणेन ।
नेह गेहरचनासु विमानशोभया भजति कश्चन चित्रम् ॥ ७५ ॥
पर्वतैः किमिव पर्वतभेत्तुः सर्वतः सपदि शङ्कितचित्तैः ।
स्थापितानि शिखराणि विमृद्य निर्भयस्थलमिदं गृहरूपात् ॥ ७६ ॥
तुङ्गतामधिगताः स्वविभूनां जाति-धर्म-धन-भाग्यमहत्त्वैः ।
उज्ज्वला इव तदध्यवसाये रेजिरेऽत्र निलयाध्यवसायैः ॥ ७७ ॥
कामकेलिललितेष्वयलानां साहसाद्भुतरसेन निवासाः ।
स्थैर्यमभ्युपगता इव गुञ्जन्मर्दलध्वनिभिरेव विनेदुः ॥ ७८ ॥
दह्यमानबहलागरुधूपादुद्भवद्वलयसत्कलयेव ।
छत्रिणः स्फुटचलाचलकेतुचामरैर्यमुरमी नृपतुल्याः ॥ ७९ ॥
चान्द्रसान्द्रजलनिर्झरणेन क्षीरसागरतरङ्गनिषक्ताः ।
आलयाः कमलया सहयोगस्तेषु युक्ततर एव नरस्य ॥ ८० ॥
कामरागवशतः सुमनोभिः कामरा विदधुरालयलीलाम् ।
पामरा इव तदीक्षणलुब्धा नामरा विदधते दिवि वासम् ॥ ८१ ॥

सद्मनां शिखरवृद्धिविशेषैरम्बरेऽम्बरमणिर्दिनमध्ये ।
दृष्टनष्ट इव याति वधूनां भोगभङ्गभवशापभियेव ॥ ८२ ॥
आतपे प्रसृमरेऽपि गृहाणामुन्नतेर्भवति धार्मिकलोके ।
दीर्घिकाकमलकोमलकोशोद्घट्टनादिव दिवाकरबोधः ॥ ८३ ॥
पातिसाहिमहसामिव तैक्ष्ण्याद् भीतभीत इव शीतविनोदी ।
भास्करो न कुरुते करपातं भूतले सदनमूर्द्धनि रुद्धः ॥ ८४ ॥
सद्मनां कनकरत्नविभूतेर्द्रष्टृदृग्जनितदोषविघातः ।
बाललालनकपोतकपोतैर्न्युञ्छनप्रमिभरेण विधेयः ॥ ८५ ॥

[ इति व्यवहारिगृहवर्णनम् ]

तस्थिवानिह निदेशनरेशस्तेजसाऽऽहृतसुखाभिनिवेशः ।
कारयन् नयपथप्रथिमानं वारयन् जगति दुर्णयवृत्तिम् ॥ ८६ ॥
श्रीजिनेश्वरदिनेश्वररोचिःसंचयाद् धवलिताम्बररुच्या ।
वर्जिता जनदिगम्बरवृत्तिः स्त्रीविमोक्षसुमतिः प्रससार ॥ ८७ ॥
व्याहृतौ हि किल केवलभाजां निश्चयः प्रववृते श्रुतियोगात् ।
सर्वतः सुमनसां प्रतिबोधे सङ्गतैव मधुपायिनि वृत्तिः ॥ ८८ ॥
नोपरागविंदशा कमलानामाकरेषु घनवत्सु रसेन ।
नो जडात्मनि रुचिर्द्विजराजे नो पलादनमनःप्रतिचारः ॥ ८९ ॥
तत्र रात्रिभुजि कर्मविरामे प्रौढशीतलरुचेरपि रागः ।
साधुतोपकरणाऽऽश्रयभाजां सन्नयानयविवेकमधत्त ॥ ९० ॥
कामचारविरतिर्जनतायास्तन्निमित्ततमसां विलयेन ।
सङ्गमे सवयसां हि विभापावेदिनां समभवद्धितबोधः ॥ ९१ ॥
पापकर्मणि परं बहुलाभे भाविताऽऽत्मसुधियो विनिवृत्ताः ।
ब्रह्मणो ह्युपनयान्निजशीले दार्ढ्यमेव स मधुर्मधुराङ्गाः ॥ ९२ ॥
सद्गुरोश्चरणभारविवोढुः पावनं विदधिरे स्ववराङ्गम् ।
प्रत्यहं भजन-वन्दनकृत्यैः श्रद्धयैव सुदृशोऽङ्कुशरागाः ॥ ९३ ॥
आचकर्ष समयप्रतिपत्तेरङ्गचालनपटुः परमार्थम् ।
गोरसान्मथनिकामतिरस्यैस्तत्क्षणेन गुरुदर्शनचारुः ॥ ९४ ॥
स्पष्टमार्गमधिगत्य घनस्य पुष्टयेऽस्यभवनेऽथ वने वा ।
रक्षकोऽपि निवसन्नसुभाजोऽपालयत् खलमुदस्य दयार्द्रः ॥ ९५ ॥
सर्वथाऽप्यशिवबुद्धिनिषेधः स्वीयधर्मविविधव्यवसायैः ।
आदृतः पुरजनेन दयायाः स्वोदयाय हृदयेऽभिनिवेशात् ॥ ९६ ॥
रेजुरुन्नतकरा नगरान्तःसंचरिष्णुवरदानि महेभाः ।
गर्जितैः प्रसृमरैरदसीयैस्तर्ज्यते जलधरोऽप्यतिधीरैः ॥ ९७ ॥

---

* P °दिशा ।

आतपः प्रचघृते शुभकार्यमात्मनां समुपदेष्टुमिवेष्टम् ।
सिद्धसाधनधियः पुरलोकास्तदृव्रताय परमोद्यममीयुः ॥ ९८ ॥
काललब्धिवशतः परमार्थप्राप्तिरित्यलसदेहिमतार्थम् ।
सज्जनास्तमवमत्य कृतार्थं स्वं व्यधुर्जपतपोव्रतयोगैः ॥ ९९ ॥
देहिनां प्रतिहतं भुवि जाड्यं स्वार्थसाधनमहोद्यमयुक्त्या ।
व्याहृतेन किल बोधिकराणां स्वाप पापचरितं विनिवृत्तम् ॥ १०० ॥
सौरगौरमहसि प्रतिपन्ने गौरवं स नगरे प्रचकार ।
देशरूपमतिदेशसरूपः श्रीगुरोरिति निदेशनरेशः ॥ १०१ ॥
[ इति प्रातःकालविधेयधर्माचरणयोर्द्वयर्थतया वर्णनम् ]
तत्र सोत्सवतया चतुरोऽयं तान् व्यतीत्य चतुरोऽपि च मासान् ।
पूर्वदिग्विजयसाध्यनियुक्तस्तत्पुरोऽथ पुरतः प्रचचाल ॥ १०२ ॥
अध्वनि ध्वनितजैनविधानः कापथप्रमथनप्रणिधानः ।
भव्यचेतसि महोदयदायि नन्दयन् सुकृतधाम जगाम ॥ १०३ ॥
उग्रसेनपुरमुग्रमहिम्ना तस्य दर्शनसमुत्सुकलोकम् ।
आगमश्रुतिरसाद् धृतरागमुल्ललास कमलाऽऽकरयुक्त्या ॥ १०४ ॥
अर्गलापुरमनर्गलतेजोनिस्सपत्नबहुरत्नसमूहैः ।
स्वर्गराजनगरस्य यवार्त्तास्वर्गलाकरणमेव विभाति ॥ १०५ ॥
सर्वतो जनपदैर्निजसारं प्रेष्यते शकटपूरणयाऽस्मिन् ।
प्रेष्यकानिव विशिष्य विभुपा काञ्चनैश्च परिभर्त्ति पुरं तान् ॥ १०६ ॥
मण्डनं सकलदिग्युवतीनां स्वःपुरस्य दृढसौहृदपात्रम् ।
संगमस्थलमिदं कमलानां सर्वदेवनगरं प्रतिभाति ॥ १०७ ॥
राजराजनगरं नगरन्ध्राण्यध्युवास कृतकिन्नरवासम् ।
शोभया जितमनेन पुरेणाऽष्टापदैः प्रतिपदं निभृतेन ॥ १०८ ॥
या दशास्यनगरस्य पुराणां द्वापरे परिणते सुषमाऽऽसीत् ।
यादसाऽस्य नगरस्य पुराणामंशुजालजलधेः सदृशी सा ॥ १०९ ॥
यन्महे सकलभादिविशेषः प्रेक्ष्यते स तु न भोगिनगर्याम् ।
यन्महेशकलभादिविशेषस्तन्निमित्तमधिपः स हि तस्याः ॥ ११० ॥
द्रव्यभावघनवासनयार्थैः श्रावकैः परिचितं पुरमेतत् ।
द्रव्यभावघनवासनयार्थैस्तत्सतो न हृदतो विरमेत ॥ १११ ॥
आस्तिकाः सुकृतिकृत्यविविक्ताः सेविताः स्वसुरताशयभावैः ।
आस्तिकासुकृतिकृत्यविविक्ता सेविता स्वसुरताशयभावैः ॥ ११२ ॥
पूर्ववर्णितपुरं हि यदीया वर्णिकेव हृदि भाति कवीनाम् ।
तत्पुरस्य तु चिरस्य सदस्यः कः प्रपद्यति न वृत्तविशेषम् ॥ ११३ ॥
यत्पुरन्दरपुरं वपुरन्तः पुष्करं करकरम्बितमाघात् ।
तत्पुरस्त्रपितमेव पुरोऽस्याः सौष्ठवभ्रममिवाचितुमेव ॥ ११४ ॥

सुन्दरं यदि पुरन्दरधाम स्यादितस्तदिह शून्यपदे किम् ।
तत्प्रजा अपि च मन्दरभूभृत्कन्दरेषु कृतमन्दिररागाः ॥ ११५ ॥
विभ्रमादिव पुरेक्षणजन्यान्निश्चला हि सकलावयवेषु ।
पुत्रिकाकपटतोऽप्सरसस्तन्निर्निमेषनयना इह तस्थुः ॥ ११६ ॥
राजधाम्नि भुवनेऽपि महत्त्वं तत्त्वतः प्रभवति स्म कुतस्त्यम् ।
शङ्कयेऽतिविगतं नगरेऽस्मिन् वीक्षणेन नृपवासवधाम्नाम् ॥ १०७ ॥
कौशिकः स खलु कौशिक एव यन्नृपस्य महसा सहसाऽऽसीत् ।
प्राप्य जीवति कथञ्चन भिक्षुर्दक्षिणां प्रतिदिनं यमराजः ॥ ११८ ॥
तन्निवासनगरस्य मयूखारोपमर्हति कदाऽपि न पूषा ।
स्पर्द्धते किमु सुराशनयूपा गोपयःप्रभृतिपेयविभूषा ॥ ११९ ॥

[ इति आगरानगरवर्णनम् ]

दर्शयन्ति फलदा इह बीजं मार्गणानुपवने पुरयाद्याः ।
शिक्षिताः पुरजनादिव दानं गौरवाय सुलघोरपि वक्तुम् ॥ १२० ॥
दद्यहे लघुफलानि गुरुत्वे लाघवेऽपि भवतां गुरुदानम् ।
उन्नमय्य विनमन्ति तटस्थान् पादपा इति धिया किमु पौरान् ॥ १२१ ॥
वीरुधस्तनुतरा अपि दद्युः काञ्चनान्यतिमहान्ति फलानि ।
तद्गुणेन शिरसाऽपि रसालास्ताः परं निदधते फलभाजः ॥ १२२ ॥
शिक्षिताः क्षितिरुहः पुरलोकाद् दानधर्ममिव याश्चवनस्थाः ।
उद्यतां ययुरतः सुमनोभिः शोभिताः परिवृता गुरुपात्रैः ॥ १२३ ॥
दानशौण्डचरिते किल पत्रालम्बनं विदधते वनतालाः ।
सर्वतोऽप्युपवनं क्षितिजानां तन्महोच्चशिरसो रसपूर्णाः ॥ १२४ ॥
पक्षिणामिव स्तेन घनालीरक्षिणां सबहुमानमनूय ।
दक्षिणां प्रददते फलपुष्पैः पक्षिणां कृतमुदस्तरवस्ते ॥ १२५ ॥
उज्झिता इव दिवस्तरुवर्गं जेतुमीहितफलार्पणशक्त्या ।
शाखिनोऽर्थिनिवहे स्फुटरागाः पल्लवैरुपवनेषु विरेजुः ॥ १२६ ॥
ते द्रुमा अपि च विद्रुमभासः पल्लवैर्धृतविपल्लवभावाः ।
नीरसं पदमिताः सरसत्वान्मोदमादधुरतो मधुयोगे ॥ १२७ ॥
भोजनेषु सुहृदां विपिनान्तस्ते जनेषु मिलितेषु यथेच्छम् ।
मोदकार्पणकलामुपलभ्य शाखिनोऽपि वव्रुः फलराजिम् ॥ १२८ ॥

[ इति उपवनवर्णनम् ]

भूरुहामुपवनेषु महत्त्वं पात्रसंगतिरसे बहुशाखाः ।
वीक्ष्य दानरुचिरुन्नतयैव स्पर्द्धयेव ववृधे धनभाजाम् ॥ १२९ ॥
यत्र सौधशिखरेषु खरांशोर्वाजिनः स्खलनशङ्कितयोच्चैः ।
उत्प्लुतिव्यसनिनः प्रशटान्तर्लङ्घयन्ति ससुखं शुचि मासे ॥ १३० ॥

उद्गिलद्गिरिपुरिव स्वरथस्य चक्रमेकममरोदहिमांशुः ।
वाजिसप्तकमुदीर्य्य बलेन यानमुष्य नगरस्य समीपे ॥ १३१ ॥
हर्म्यमूर्ध्नि विरहार्त्तवधूभी राज्ञि राहुरुचिसंस्करणाय ।
उज्झितो मृगमदस्य विलेपस्तेन नीलवपुषोऽर्कतुरङ्गाः ॥ १३२ ॥
यत्र तुङ्गगृहशृङ्गनिविष्टसुन्दरीक्षणभवस्मरतापात् ।
याति दक्षिणदिशं मलये चुरुत्तरां(?) हिमगिरिस्थितयेऽर्कः ॥ १३३ ॥
यत्र वाहनमृगान् मृगनाभेराग्रहाय कृतगीतवधूभ्यः ।
रक्षितुं कथमपीह तमिन्दुर्धृत्तवान् द्विजप इत्यभिधां स्वाम् ॥ १३४ ॥
आलया ध्वजपटोद्धटनेनामन्त्रयन्ति जलदानिव दूरात् ।
उद्यते बहुजने वितरीतुं यत्र दानकरणाध्ययनाय ॥ १३५ ॥
दातृभिर्जलधरा इव धारायन्त्रवेश्मसुकृताः सुकृताऽऽढ्यैः ।
नर्मदा इव सदा जलमार्गैस्संनिपत्य विलुलन्ति पुरस्तात् ॥ १३६ ॥
चान्द्ररत्नविगलज्जलवेण्या यत्र पौरनिलया घनरूपाः ।
प्रस्फुरन्ति चपलाश्चपलाक्ष्यस्तेषु सांप्रतमितो घनरूपाः ॥ १३७ ॥
यत्र वेश्ममणिघोरणिभासा पीनतामुपनतां परियन्ति ।
ज्योतिषां वसतयो भ्रमिभावस्पष्टनष्टरुचयोऽपि तथैव ॥ १३८ ॥
निःसपत्नरथिरत्नगणेभ्यो निस्सरद्धनधनञ्जययोगात् ।
जाड्यमीषदपि नात्र नराणां तेन तेजसि न संशयलेशः ॥ १३९ ॥

[ इति आगरानगरनागरभवनवर्णनम् ]

निर्जिता जलमुचः शुचिदानाभ्यासतः शतश एव महेभ्यैः ।
विद्युतां द्युतिभरस्य वधूनां तर्जनेऽङ्गमहसो न विकल्पः ॥ १४० ॥
निश्चयः प्रतिगृहं कमलायाः सर्वतोऽपि पुरुषोत्तमलाभः ।
चित्रमत्र मधुमित्रनिवासे नो मनागपि रतिप्रतिपत्त्या ॥ १४१ ॥
उल्लसत्सुमनसामिह वृन्दैः सौरभातिशयकार्यनियुक्तैः ।
पोषशालिभिरनुस्थलवृत्त्या धर्मकामविभवः परिभाव्यः ॥ १४२ ॥
मण्डलं जयति रत्नकराणां यत्र निस्तुलकलापरिपूर्णम् ।
मार्गसंगमधृतामृतयोगं पुष्टयेऽङ्गजमहोदयलक्ष्म्याः ॥ १४३ ॥
यत्र वैश्रमणसन्निधिभाजां शुद्धपुण्यजनमण्डलराजाम् ।
प्राक्तनपूर्वदुरितं चरितं द्राग् दिव्यमोहमुपगीतमधत्त ॥ १४४ ॥
भोगिनः प्रतिपदं विलसन्त्यन्योऽन्यसौहृदजुषो विबुधास्ते ।
भूषणं परमपौरुषभाजां तन्नगत्रयमयं पुरमेतत् ॥ १४५ ॥
ईश्वरा वसुनि कामविकल्पैः पार्वतीं निदधते दृढवृत्तिम् ।
या पिनाकरुपमाविषमा सा तैः श्रिता प्रतिदिनं गुणयोगात् ॥ १४६ ॥
लक्ष्मणा बलभृतश्च सुमित्रानन्दना विनयिनः सहरामाः ।
सज्जना हि निवसन्ति ततोऽस्यां नो कलिः कल्पते किल वृत्तिम् ॥ १४७ ॥

आस्तिकाय सुविमर्शनदक्षा आस्तिका यतिकुलस्यसपक्षाः ।
नास्तिकानपि रयाद् विजयन्ते नास्तिका नयरुचिस्तदमीषाम् ॥ १४८ ॥
सौरभावनिचितैर्बहुशाखा विस्तृतैर्विविधपात्रसरागैः ।
आगमेषु विदितैर्बहुसद्भिर्यत्र भान्ति भवनानि वनानि ॥ १४९ ॥

रम्भाभिः परिशीलितं मृगदृशां दम्भाचिरं भावना-
हेतुः केतुशतैः शतक्रतुपुरं जेतुं श्रियाऽभ्युद्यतम् ।
वीक्ष्यैतन्नगरप्रपातजलधौ लङ्काकलङ्कासवद्
लीना किं नगरन्ध्रमध्यमलका माधुर्यवैधुर्यतः ॥ १५० ॥

सूरेः शासनपाकशासनमिह प्राप्तं विमृश्याऽऽदरात्
पौरा गौरवहेतवे समुदिताः सर्वेऽभिजग्मुस्तदा ।
तेन श्रीजयवाहिनीव समभूदुत्साहिनी भूपतै-
राजद्वाजिगजेन्द्रराजिविबुधश्रेणैः प्रसादोदयात् ॥ १५१ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
नगरवर्णनो नाम दशमः सर्गः ॥

॥ श्रीरस्तु प्रस्तुते वस्तुवः ॥



## एकादशः सर्गः ।

अथ जिनपथं तथ्यैः पथ्यैर्वचोभिरिहोन्नयन्
कथमपि नृणां मिथ्यामोहं विमथ्य समर्थधीः ।
सपदि सुदृशां द्वेधा चक्रे महोदयसाधन-
मयमतिशये सौरस्फारप्रभावविभावसोः ॥ १ ॥
असमतमसां नाशादाशाम्बरस्थितिरुज्झिता
ग्रहकरगणैः पद्मिन्योऽपि प्रबोधसुधामधुः ।
सदसि रसिकश्चक्रे वक्रेतरः समयक्रियां
रुचितमुचितं विश्वस्यान्तःसितच्छदमण्डलम् ॥ २ ॥
भणितमभवद् व्याहारस्य प्रियं त्रिजगत्प्रभोः
सहृदयजनोन्निद्रीभावः सुमागधभाषया ।
भवपरिणताज्ञात्यप्राकट्यतः स्वत एव सा
जगति जनता वृत्तिं मत्वा विरागदशामगात् ॥ ३ ॥
ललितगतयो मुक्त्वा स्थाणुं घना भवनाङ्गणे
प्रययुरमलं पातुं तीर्थेश्वरेरितगोसुधाम् ।
प्रकटितमहाकपोत् तपोद् युता वरसौरभे-
स्तपसि महिषीरूपा नार्यः प्रपीनपयोधराः ॥ ४ ॥
भवमुपनते श्रित्वा मार्गं कलाधरमण्डले
द्विशमवसरज्ञानां मुक्त्यै परं जनवल्लभाम् ।
अनियततमां मत्वा तत्त्वाद् वसुप्रसुतां जना
इह सुमनसः सर्वे दानोद्यता रतिमूहिरे ॥ ५ ॥
उदयिनि गवां भारे स्फारे प्रभाकरसूचिते
भुवनवलये मार्गामार्गप्रकाशमुपेयुषि ।
सुकृतपटुतां सभ्या लभ्यां गुरोः परिचर्यया
समयनिपुणाः कारंकारं गुणाऽऽश्रयतां ययुः ॥ ६ ॥
मनसिजरसं सर्वं मत्वाऽवमल इहव्रता
मनसिजरसं भव्या विश्वेऽनुभाव्य सदाऽनुगाम् ।
कमलसदृशां चेनोवृत्तिं विधाय वियोगिनीम्
कमलसदृशां सङ्गं मुक्त्वा न धर्ममशिश्रियन् ॥ ७ ॥
धरणिवलये सौरज्योतिर्भरैर्दरागता
भृशमुदयिनी जज्ञे प्राज्ञे ततो जिनपूजने ।
विषममगमच्छोषं दोषाकरस्य विजृम्भितं
निविडजडताहेतुर्मारिप्रचारनिवारणात् ॥ ८ ॥

कतिपयदिनस्थित्याऽऽदेशप्रभुः सुमनःप्रियः
क्षणकरणतः सर्वानीर्ति व्युदस्य सदस्यतः।
जिनमतमतः शिक्षाकल्पादिनाद्भुतमुन्नयन्
विनयिनयनाऽऽनन्दी बन्दीडितः शुशुभेतमाम् ॥ ९ ॥

[ इति आगरानगरविजयवर्णनम् ]

मधु मधुरिमप्रागल्भ्येन भ्रमद्भिरलिव्रजै-
र्विजयसमयप्रज्ञप्त्येवाभिनीतजयाऽऽरवैः।
स विभुरचलन्नुन्नः पुर्या जयश्रियमुद्वहन्
विविधनिनदद्वाद्यैः सद्यः समं कृतमङ्गलः ॥ १० ॥
अवसरवशात् प्राप्तं सौरं महः समहामह-
महमहमिकावेशादेशादिवेक्ष्य रवेः सुता।
चपलकलिकाहस्तैः शीर्षे विवोढुमिवोल्लसद्
वहनमुचितं तस्यादेशप्रभोः पुरतो ददौ ॥ ११ ॥
पुरजनवधूस्नानैः पानैः परोपकृतौ पटोः
कथमिव गतिर्नीचैर्नूनं ममेति पुरो गुरोः।
तरणितनया प्रष्टुं पादप्रसादमवाप्य किं
नमनमनसा भक्तेस्तवोल्ललास विलासिनी ॥ १२ ॥
जडपरिचयाज्जाग्रत्तेजोनिधेर्दुहितुर्मम
द्विजजनघनस्नानोद्भूतान्मलादिव कालिमा।
भवतु सहसा पूरे दूरे क्षमाम्बुजसंगमा-
दिति रसभराद् वीचीहस्तैर्ननर्त्त पुरोऽस्य सा ॥ १३ ॥
हरिरिह पुरा गम्यां रम्यां चिरं चकमे रसाद्
विषयविवशस्तद्देहस्य द्युतिः स्तुतिभाजनम्।
दृढतरबहुप्रीत्याऽस्यापि व्यमोचि न साऽनया
तदयमुदयत्यन्तर्नीरं परं नवनीलिमा ॥ १४ ॥
सुरपुररिपू कामं कामोदयेन सरिद्वरा-
मभिललषतुस्ताभ्यां रेमेऽनयांऽह्रिशिरःस्थया।
उपपतिसदृग् वेषाद् द्वेधाऽभिसारिकया ततो
द्वितयमभवत् कालन्येकाऽपरा हरशेखरा ॥ १५ ॥
गुणपरिणता वेणी वैणीदृशो वसुधाकृते-
स्तपनतनया हंसोत्तंसप्रसूनविदर्भिता।
रमणविषयप्रावीण्यं किं न दीपयति स्म सा
पुलिनजघनद्वैतं वेगक्रमात् स्पृशती सती ॥ १६ ॥

उभयतटयोर्हंसश्रेणी गरुच्चलचामरै-
र्जनितविभुताऽस्तोकैः कोकैरलङ्करणान्विताः ।
मिलदलिपयोजन्मप्रेक्षाविचक्षणचक्षुषी
विबुधमनसां व्यामोहायोद्यतेव रवेः सुता ॥ १७ ॥
तटपरिसरस्नानक्रीडापराम्बुजलोचना
चलनकटकाऽऽरावैर्वादे जिता वरटाङ्गजाः ।
तृणमिव बिसं भोज्यव्याजान्मुदा दधते मुखे
कृतवसतयोऽमुष्यां चर्यां स्त्रिया इव शिक्षितुम् ॥ १८ ॥
मधुकललसद्रामा कामाशयालुगपक्षिणां
बिशकवलनैः संभोगार्थं कृतोद्वलनैः शनैः ।
रसपरिणतिस्तस्यां वश्यां करोति मृगीदृशं
सपदि पदिकाः पार्श्वं तेन त्यजन्ति न कामुकाः ॥ १९ ॥
विहगमिथुनक्रीडावीक्षावशादिव सत्वरा-
न्तरपरिगतान् शैलान् मुञ्चत्यगम्यधिया रयात् ।
जलनिधिमधिप्राप्तुं स्मेरस्मराऽऽशयनोदिता
दिनकरसुता यान्ती लोकैर्व्यलोकि रसोद्धुरा ॥ २० ॥

[ इति यमुनानदीवर्णनम् ]

स्वयमपि तदादेशाधीशोऽप्यरुक्षदरुक्षधी-
र्वहनमचिरात् प्राप्तुं पारं जयी विजयान्वितः ।
ललितयुवतीगीतैः सूरेर्यशो भरदर्भितै-
र्निगदितमहामाङ्गल्यश्रीः सरित्तरितोन्मनाः ॥ २१ ॥
सरसनयनप्रेक्षापादप्रसादतटस्थता-
हृदयधरणैः संभाव्यैनां हसत्कमलाननाम् ।
पुरमथ पुरः प्रादक्षिण्यात् प्रविश्य यथेप्सितं
विजयविधिनाऽऽदेशाध्यक्षस्तदा मुमुदेतराम् ॥ २२ ॥
परिकरयुतः प्राप्तं पारं विलोक्य तमञ्जसा
गगनजलधेः पारं लेभे सहस्ररुचिः समम् ।
विमलमनसां नैव न्याय्या निशाचरता सता-
मिति धृतमतिः स्वस्मिंस्तस्मिन् विमृश्य सुवृत्तताम् ॥ २३ ॥
मदननृपतिः सज्जीचक्रेऽश्विनीप्रभवद्युतिं
मदपरिणतेः पुन्नागानां वशायलमग्रतः ।
द्विजपतिपुरस्कारादू दोषाशनैर्ध्रुववारुणी
रुचिपरिचयो नृणामासीत् ततः सुदृशां मतः ॥ २४ ॥

गतवति रथे भानोस्तस्मिन् क्षणे विशारुणां
स्खलनकरणाद् वारुण्याशाधिपानवशाद् गिरौ ।
समुचितमतो लोके जज्ञे रथाङ्गविघट्टनं
कलकलरवस्तद्दुःखेनाऽऽकुले नु वयःकुले ॥ २५ ॥
सपदि विरहभ्रान्त्या स्त्रीभिः समं तरुमाश्रिते
द्विजवरगणे तत्स्पर्शोत्थाद् रसान्मिलितेक्षणे ।
द्विजपतिरपि छायान् पायान्मदारुणदीधितिः
स्मरपरवशो दिग्नारीषु ध्रुवं करमक्षिपत् ॥ २६ ॥
स्मरविलसितं राजन्येवं विमृश्य रसादिव
समयचतुराः कामिन्योऽपि प्रियाऽऽलयमाययुः ।
प्रकटितरसाऽऽश्लेषं वेषं विधाय मनोभुवो
भुवनवलये राज्यस्यैकातपत्रबलोदयात् ॥ २७ ॥
उपहितमिव द्वन्द्वाधानं विचिन्त्य मनस्विनाऽ-
भ्रियत हृदये प्रोत्साहश्रीस्तदा सुरताशये ।
करसरसिजप्राप्तां रम्भामिवाम्बुजलोचनां
समुदितरसोल्लासात् सद्योऽनुकूलयितुं धिया ॥ २८ ॥
मतिमनुनयन्नूनं प्राणप्रिया चरणाग्रहे
सरसवचनोद्गारं धीरः पिबन्नधरामृतम् ।
हृदयनिहितं मानं चूर्णीचकार स कञ्चुके
दृढतरकरक्षेपाद् भूमीपरिग्रहमण्डले ॥ २९ ॥
ललितवपुषैकान्ते कान्ते स्वकाननचुम्बिनि
पुलककलिकोन्मेषाऽऽश्लेषाद्विवैक्यमुपेयुषी ।
स्मरशरभरोद्भेदान्मूर्च्छाश्लथावयवा निशि
चतुररमणी कस्यावश्यं न वश्यमधान्मनः ? ॥ ३० ॥
चिरविरहजं दुःखं प्रत्यादिदेश निदेशकृद्
विविधवचनन्यासैर्हासैर्विलासकरः प्रियः ।
सपदि हृदये तन्वावेष्टुं वधूरवधूतभी-
स्तत इव लघुलग्ना कण्ठे चिरं बुभुजेऽमुना ॥ ३१ ॥
कुसुमशयनादुच्चैर्नीत्वा धृता भुजयोर्युगे
मुदमुदवहद् भार्या विश्वाप्रियैरवलालिता ।
प्रणयविवशा भूषामाल्यादिके विगलत्यपि
न हि गणयति त्यागी रागी कदापि वसुव्ययम् ॥ ३२ ॥

† P "वै रत" ।

दृढतरगुणग्राहेऽन्योऽन्यं जने विषमेषु भू-
समरसहिते विद्धे सिद्धे ततस्त्रिजगज्जये ।
प्रतिगृहमधुर्दीपाद् द्वीपाधिपोत्सवसंभव-
त्तिलकललितं तारास्ताराक्षनाचरणं दिवि ॥ ३३ ॥
जगति स गुणग्रामा रामा प्रसाधितकुन्तला
सजलजलरुण्मालाधाना समाश्रितकौशला ।
रुचितविषया मध्ये क्षामा लसन्मधुराधरा
सहृदयजनद्वन्द्वक्रीडारसे रुरुचे तदा ॥ ३४ ॥
रहसि हसितां सद्यो ब्राह्मीं प्रपद्य तया सह
प्रणयनिपुणः स्मारं स्मारं प्रयाणमनारतम् ।
विविधकरणाभोगाल्लभ्यं स भासुरसाश्रमः
समयविधिनाऽऽदेशस्वामी भजन् बुबुधे सुखम् ॥ ३५ ॥
प्रवचनमहामातृस्थानानुजीविनि वल्लभाऽ-
नयरतसुखैर्दिग्याम्नाये जने विहिताऽऽदरः ।
कतिपयदिनान्यस्मिन् नीत्वा पुरे स पुरोऽचलद्
बलमविरलं पुष्णन् मोहमहारविहारधीः ॥ ३६ ॥

[ इति संप्रयोगमात्रवर्णनम् ]

परिणतगजः साक्षादुच्चैः सुमेरुरहर्निश-
मतिमलघतां नैवोल्लङ्घ्यः समाहितलक्षणः ।
गणपतिमनोऽभीष्टस्तस्य प्रयाणपुरस्सरः
समभवदलं गर्जन् मेघानुगामिरुचिस्ततः ॥ ३७ ॥
भुवि निहितदृग् जीवाघातात् दिगम्बरमण्डले
ध्वनिजनितभीर्दुर्वादानामयं युवराजधीः ।
रविरिव पुरः पूर्वाचारप्रवृत्तिधरो बभौ
बलभरसहः संख्योऽसंख्योपदेशविधौ पटुः ॥ ३८ ॥
क्वचन विषमस्थानं मत्वाऽत्यजद् बहुधा वनं
क्वचन समतारागं नृणां विचार्य बहुस्थितिः ।
क्वचन वचनादेशाद् देशाधिपानपि मोदयन्
विदितसमयो धैर्यान्मेरुर्जगाम पुरःस्फुरन् ॥ ३९ ॥
करपरिगता सौरीयस्य प्रभा विशदस्थिते-
रुपनतगणोत्पत्तिर्भूयःकलाधिकलाऽऽशयः ।
स दिनविषयां शुद्धिं राज्ञो गमागमसंमतां
मनसि विमृशन् स्पष्टीचक्रे समाननसाधनम् ॥ ४० ॥
चरणपटुतायोगाद् देशांस्तदेवमनेकशो
विषयविजयी न्यस्यंस्तत्रं वशीकुरुते स सः ।

मथितकुपथः सर्वां पूर्वाऽवनीमवनीपति-
प्रतिममहसा पुण्यां मार्गोदयादभिनन्दयन् ॥ ४१ ॥
पुरमथ पुरः पौरैर्गौरैर्यशोभिरलोभिभिः
परिसरसरद्गङ्गासंगादिवाऽऽश्रितमध्वनि ।
सुभगमगमन्नाम्ना धाम्ना प्रयागमनुत्तरं
मुदितमनसाऽऽदेशाधीशः प्रभोः प्रभयाऽभयः ॥ ४२ ॥
त्रिदशसरितोदीच्यां चञ्चत्तरङ्गपटाञ्चलैः
प्रणयकलया संभोगान्ते श्रमापगमे कृते ।
पुरि निवसतां यूनां नृत्यात् तरङ्गकरैर्मुदे
भवति तरणेः पुत्री भ्रातुः प्रियां दिशमाश्रिता ॥ ४३ ॥
उभयभुजयोः स्थाने यस्याः पुरः सरितौ लस-
द्वलयकलया वीचीलक्ष्यैः प्रपञ्चितकौशले ।
शिरसि वहते प्राकारोऽपि स्फुरन्मुकुटश्रियं
ननु तनुभृतस्तस्या वश्यात्मनो कुरुते न किम्? ॥ ४४ ॥
अलघुसदनैर्यत्रेभ्यानां कृताम्बरलम्बनै-
रुपगतरवेस्तापान्नैव क्षणं जनतासुखम् ।
इति कृतमतिर्वेधा द्वेधा सरिच्चलितोच्छल-
द्विमलसलिलैः शैत्यं तस्यां विधापयति स्वयम् ॥ ४५ ॥
दिवि सुरपुरं यन्माधुर्याद् विधार्य पराजितं
भुवि नरवपुर्देवैः स्थानं कृतं रुचिराजितम् ।
प्रणयवशतस्तेषामेषाऽन्वगादिव निम्नगा
तदिह तरवः क्रीडोद्याने यमुर्मरुनामगाः ॥ ४६ ॥
सकलहरितां मध्यं मेध्यक्रियाऽध्यवसायतः
समजनि पुरी तीर्थं व्यर्थीकृताखिलपातका ।
ऋषभचरणप्रत्यासत्त्या विवेकपरात्मनां
तुलयति न तद्दिश्या लङ्काऽलकाऽप्यनया नयात् ॥ ४७ ॥
नगरपटले धाम्नां सीम्ना पुरं नृपुरन्दर-
प्रतिममभितो लङ्कातङ्काऽलकादिनिषेवितम् ।
तदिह यमुना-गङ्गे सङ्गे प्रकीर्णकवैभवं
समनुभवतद्च्छत्रे साले विचालमुपस्थिते ॥ ४८ ॥
जिनदिनकरश्रेयस्तेजः प्रसृत्वरमद्भुतं
पुरि सुमनसां हृत्पद्मानां विबोधनतः श्रुतैः ।
परिणमयताऽऽदेशेशेन क्रमात् तटमीयुषा
सुरसरिदपि स्पष्ट्या दिष्ट्याऽचिरादुपतुष्टुवे ॥ ४९ ॥

॥ अथ गङ्गाऽष्टकं यथा–
दीक्षायाः समयेऽभ्यषेचि विबुधाधीशैर्जिनेष्वादिमो
नाभेयो भगवान् पयोभिरमलैर्दुग्धाम्बुधेरुद्धृतैः ।
तद्धारा मधुराऽधरातलमलञ्चक्रेऽथ शक्रेडिता
सा गङ्गा जगतां मलापहृतये विभ्राजतेऽद्याप्यसौ ॥ ५० ॥
ईशानेन्द्रः शिरसि वहते तत्प्रवाहं जिनेन्द्रो-
र्भक्त्या ब्रह्माऽधिपतिरपि च स्वात्मपावित्र्यहेतुम् ।
हस्ते नीराऽऽचमनविलसद्भाजने संनिधत्ते
देवाः सेवारसपरवशा एवमस्याः प्रशस्याः ॥ ५१ ॥
येनास्याः पयसोऽधिपानवशतो राजाऽधिराजो बला-
ज्जेता बाहुबली बभूव भरतं भूवल्लभो वा न कः ? ।
सर्वज्ञेन परं व्रतं निदधता श्रीशम्भुनोर्वैर्धृता
सौभाग्येन सुमङ्गलाप्रणयिना गङ्गा सुनन्दा ततः ॥ ५२ ॥
सिद्धास्त्वज्जलपानतः कति यतिस्त्राभव्यभव्याऽऽशयाः
नो विद्यामनवद्यपद्यललितां प्रापुर्न बुद्धाः कति ? ।
गङ्गे ! शुभ्रतरङ्गसङ्गसुभगे ! श्रीपार्श्वविश्वेशितु-
र्बाल्ये स्नानविधानपावनवने नैर्मल्यमापादय ॥ ५३ ॥
उद्भूताधिकुशस्थलक्षितिभृतः प्राप्ता वरीतुं स्वयं
काशीशाङ्गभुवं रसैः शुचितरैर्नाम्ना प्रभावर्द्धिभा ।
गाङ्गेयैकविभूषणा सुचरितैर्नाना पुनाना जग-
न्नैर्मल्याय सरस्वतीप्रियपदं ब्रह्मक्रियाणामियम् ॥ ५४ ॥
गाङ्गं साङ्गं हरतु दुरितस्तम्भमम्भः समस्तं
न्यस्तं स्वाङ्गे सुभगभगवद्भक्तिभाजां परं नः ।
विद्यानद्याश्रयमतिरयात् पूरयत्वन्तराय-
च्छेदाद् वेदादिव दिवसकृत् तुल्यकैवल्यसिद्ध्यै ॥ ५५ ॥
गङ्गासंगाद् विमलपयसा स्वात्मशुद्धिं विधत्तां
धीरे तीरेऽभ्रमरमणतो यातु मे ध्यातुरंहः ।
स्पष्टश्वेतच्छदपदमदस्तल्लहर्यामहार्य-
ब्रह्मस्थानैर्भवतु कमले राजहंसोचितायाम् ॥ ५६ ॥
त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्ध्यानमाध्यायतः
शुभ्रत्वं तव पश्यतः सुरधुनि ! श्वभ्रात् समुद्धारकम् ।
पङ्कं दर्शनतोऽचिराद् विनयतः स्वात्रेण गात्रेऽर्हतः
संतापं हरतः प्रयान्ति दिवसाः पुण्यात्मनां भास्वतः ॥ ५७ ॥
देवानामभिषिञ्चने तव जलं स्वर्गे सुरैर्नीयते
सारस्यं च मुदेऽभ्युदेति वचसां पानाद् बुधानामपि ।

सिद्धानां तटिनि ! स्फुटं विघटयस्यंहोघटामुत्कटाम्
विश्वायां स्वयमव्ययं सुमनसां दातुं प्रवाहस्त्वयम् ॥ ५८ ॥
राजद्राजमरालपङ्क्तिवलयैस्त्वद्वीचिहस्तैः सदाऽऽ-
श्लेषो मे सरसोऽस्तु चक्रकमला लोके न जाग्रन् मुदः ।
नित्यानन्दनसंपदः प्रतिपदं भूयासुराश्वन्मदैः
कोकानां निनदैः पदैश्च विशदैर्गङ्गेऽनुपङ्के हितैः ॥ ५९ ॥
दर्शनात् स्पर्शनान्नांहो हरसे हर ! सेचति ।
विमलैः कमलैः कस्य गङ्गे ! त्वं गेयवीचिभिः ॥ ६० ॥

[ इति गङ्गाऽष्टकम् ]

गङ्गा महाभोगरसप्रसङ्गात् स्निग्धान्तरङ्गा धृतकान्तरङ्गा ।
सादेशभर्त्रा चलवीचिहस्ताभिनन्दितेवं भुवि वन्दमाना ॥ ६१ ॥
पन्नालिलालित्यमियं पयोजैः प्रकाशयन्ती नवविद्रुमाऽऽढ्या ।
सरस्वतीं सूर्यसुतां सखीं स्वां रयान्मिलन्ती ददृशेऽमुनाऽपि ॥ ६२ ॥

[ अथ त्रिवेण्या अष्टकम् ]

श्रीमन्नाभितनूजवार्षिकतपःपूर्तौ परं पारणा
श्रेयांसेन रसालनिर्मलरसैर्धारा बलात् कारिता ।
सिन्धुः सैव सरस्वती त्रिपथगा दिव्यामृता सारतः
श्रद्धालुप्रमदाश्रुकज्जलजलैस्तत्रार्कजाऽप्यापतत् ॥ ६३ ॥
सेयं त्रिवेणी प्रससार सारं सारस्वतं शाश्वतरूपतेजः ।
त्रिवर्णसंसृष्टिनिसृष्टभावं प्रोद्भावयन्ती भुवने दिदीपे ॥ ६४ ॥
समवसरणयोगे नाभिभूभर्तृसूनोरसुरसुरनराधैरागतैरागतैश्चात् ।
कृतमकृतकभक्त्या पूजनं तत्र नानास्थलजलजलवाहात् प्रादुरासीत् त्रिवेणी ॥ ६५ ॥
प्रकटतरजटाभिर्विसितस्येव लक्ष्म्या जिननिकटवटद्रोर्दुग्धवर्षेण गङ्गा ।
इह घुसृणरसेन प्रसजाऽऽमोदमाद्यद्भ्रमरयुवतिराजी सूर्यजासंनियोगः ॥ ६६ ॥
काली कालन्दिकाऽऽढ्या सलिलवलयितैर्दिव्यगङ्गाप्रसंगा-
न्नैर्मल्यं सानुरागं जगति विदधती मिश्रसारस्वताम्भा ।
पुष्पस्रक्संनियोगाद् धवलिमकलिता रक्तसूत्रानुपक्ता
वेणी वेणीदृशोऽसौ प्रभवतु सुरतानन्दहेतुस्त्रिवेणी ॥ ६७ ॥
कृष्णा कृष्णावताराऽऽश्रमरमणवशाद् देहभासाऽर्कपुत्री
सूत्राच्छक्तिर्व्यनक्ति त्रिभुवनभविनां भावनां वैष्णवीयम् ।
ब्राह्मी शक्तिः सरस्वत्यमलजलभरे शोणभावं दधाना
शैवी शक्तिः सुराणां सरिदरिकरिभीहारिणी वा विवेश ॥ ६८ ॥
सुधा श्रवन्ती वसुधातलेऽसौ सुधाभुजां सिन्धुरिति प्रतीमः ।
रागादिवागाद् भुजगीव पातुं तां नागलोकाद् यमुनाप्रमेण ॥ ६९ ॥

विपं तदीयं किमिवापहर्तुं सरस्वतीयं विधिना नियुक्ता ।
जज्ञे त्रिवेणी त्रितयाऽऽश्रयेण श्रिया जयन्ती सुरवैजयन्तीः ॥ ७० ॥
उत्पत्ति-व्यय-संस्थितित्रयमयी तीर्थेशितुर्वाङ्मयी
भूता गौर्जगतां त्रयीं रसवशादामोदयन्ती ध्रुवम् ।
द्वेधा तापमपाकरोतु भविनां भास्वत्रिवेणीपदाद्
वेदानां त्रितयीव बोधनघवं सा व्यञ्जयन्ती नृणाम् ॥ ७१ ॥

[ इति त्रिवेणीवर्णनम् ]

भङ्गिका विपयदुर्गममार्गं मार्गयन्नथ निसर्गमहौजाः ।
प्राचलत् स गुणरोपयलेन दूरतोऽपहृतकण्टकवर्गः ॥ ७२ ॥
शुद्धतत्त्वमधियास्य समग्रं संपदा प्रतिपदं चतुरङ्गम् ।
श्रीनियोगनृपतिः प्रचचाल कौशले कृतमुखः समितीनाम् ॥ ७३ ॥
अध्वनि ध्वनितदिग्विजयश्रीः प्रध्वरेऽध्वरकृतां स कृतान्तः ।
ईश्वरः स्वरसतः परशक्त्या जग्मिवान् निहतमारविकारः ॥ ७४ ॥
त्रासयन्नसहनान् गहनान्तः क्वापि चापगुणकर्षणधैर्यात् ।
स क्षणेन विपमाऽऽगमवन्यं भेदयन् नयनसौष्ठवमाधात् ॥ ७५ ॥
पूर्वमार्गविशदीकरणेन दुर्णयव्ययकृताऽऽदरणेन ।
उन्नयन् स्वसमयं नयवृत्त्याऽऽदेशराट् सुमनसां स रराज ॥ ७६ ॥
श्रेणिबद्धमणिराशिभासितां चित्रगन्धिशतपत्रवासिताम् ।
चान्द्रनिर्झरणवारिणा सितां स क्रमाच्छिवपुरीमवापताम् ॥ ७७ ॥
अहमहमिकयाऽयं गौरवैः पौरवर्गैरजनि जनितपूजस्तत्र सुत्रामधामा ।
पुरि दुरितविनाशात् पार्श्वसर्वज्ञभास्वज्जननजननवाग्भिस्तुष्टमनाः स्तोतुमेवम् ॥ ७८ ॥

[ अथ श्रीपार्श्वजन्मस्थानवाराणसीतीर्थवर्णनम् ]

पुरी सुरीणामपि माधुरीणामेषा विशेषाद् धुरि वर्णनीया ।
वाणारसी यत्र रसी धनी च जनो निवासी सुदृशां विलासी ॥ ७९ ॥
श्रीपार्श्वभास्वानुदियाय यस्यां प्राच्यामिवान्तस्तमसां विभेदी ।
तथित्तमणापि कविर्बुधश्च कलाधरोऽप्यभ्युदयी समग्रः ॥ ८० ॥
द्विजाधिराजः सकलः कलङ्कं बिभर्त्ति मेषोक्षसपालिभोगात् ।
निमग्नोन्मग्नजनानन्दस्य गङ्गाप्रसङ्गादपि वृद्धिहानी ॥ ८१ ॥
नूनं निवासोऽपि सुरेश्वरस्य पुलोकगयं हरतेऽस्य सर्वम् ।
तद्रङ्गशाला सविशेषपाला प्रतिमल्लं संग्रनि दृश्यतेऽस्याम् ॥ ८२ ॥
महोदयोऽस्यां निवसज्जनस्य प्रतीयते साक्षरसंगमिश्च ।
शिवानुरागोऽर्हति पार्श्वरूपे पुरी तद्रूपा शिवसन्निधाना ॥ ८३ ॥
गाढं पयः सलिलैः यदस्यां पीयूषपूरं कुरुते विदूरम् ।
आपस्य गोगात्रसमापिनाशः परस्य जातोऽप्रिमुग्धासुराम्ने ॥ ८४ ॥

सुधाशनानां जडिमा न याति न लेखशालां यदमी त्यजन्ति ।
किमेवमामृश्य सुपर्वलोकः पुर्याममुष्यां विदधे स्वमोकः ॥ ८५ ॥
श्रीपार्श्वप्रभुणा स्वजन्मनि पुरा प्रेम्णा सुरा भाविता-
स्ते सर्वे किमुपाययुर्भगवतो मत्वाऽवतारं पुरे ।
तेनाऽऽनन्दमयी पुरी समवसद् वाणारसी मङ्गलै-
र्नित्याऽऽलोकविकाशिका शिवपदं नाम्नाऽप्यसौ काशिका ॥ ८६ ॥
यस्यां महेभ्यनिलया दिवि वृद्धिमीयुस्सौवर्णशैलशिखरालिजिगीषयेव ।
पत्रावलम्बनकृतः खलु वैजयन्तीव्याजाम्नवाम्बरमणीरमणीयभासः ॥ ८७ ॥
सर्वे सुपर्वसुहिता विबुधा नगर्यां पर्यायमेत्य नु नृणामनृणं न्यवात्सुः ।
सौधश्रिया तदनुरागवशाद् विमाना मानातिगा सुवमयुर्मयुदर्शनीयाः ॥ ८८ ॥
देवाऽऽगमादनु ननु द्युपुरे कियन्तः शेषा विशेषरुचयो मरुतां विमानाः ।
आलोकितुं किमिति यत्र नृणां निवासा उच्चैर्ययासव इति प्रविशन्ति शृङ्गैः ॥ ८९ ॥
दिव्यां रुचिं निदधिरे दधिरेणुगौरामन्तर्वसज्जनतथारुचिनिश्चयेन ।
इभ्याऽऽलया निजशिरःस्थितकेतुहस्तैरामन्त्रयन्त इव मार्गणवर्गमस्याम् ॥ ९० ॥
यस्यां परं जनसुखं बहुधर्मराज्यं निष्कम्पसंपदपि वैश्रमणानुभावात् ।
ऐन्द्री स्थितिर्धनवतां द्विविधा तदत्र युक्ता दिगीशवरमन्त्रनिमन्त्रणाऽभूत् ॥ ९१ ॥
यत्राऽऽपतन्ति सदनानि सुधाशनानां ज्योतिर्भ्रमादिव दिवः परिवस्तुमैक्ष्य ।
शृङ्गैर्महेभ्यनिलया अपरश्रियां वो नात्रावकाश इति वक्तुमिवोद्व्रजन्ति ॥ ९२ ॥
नैपुण्यपुण्यधनवज्जनरूपसंपद् भूदेवरूपनियताऽऽश्रयणेन यस्याः ।
स्पष्टाष्टचतुष्टयसुवर्णदशाऽवसायात् तुल्याऽलका भवति किंपुरुषाऽऽश्रिता नो ॥ ९३ ॥
उच्चैर्धनानि मनसा सममादधानाः पात्रेषु यत्र पुरुषा विभवप्रधानाः ।
मन्ये तदुच्चगतिसंगतिहेतवे स्वं तेषां गृहाणि पुपुषुर्दिवि वर्द्धमानम् ॥ ९४ ॥
पौरस्त्रियो निशितमस्त्रमिव स्मरस्य नृणां वशीकरणकर्मणि सावधानम् ।
यासां स्वरूपविजयेऽप्सरसां प्रियत्वं युक्तं सुरालयगतस्य सुराधिपस्य ॥ ९५ ॥
जाड्यस्पृशा जलरुहा यदिवेन्दुना नो वक्त्रं सकर्णविधिना तुलयेद् वधूनाम् ।
वैवर्ण्यमभ्युदयते द्वितयेऽप्यमुष्मिन् येन क्षणेन सुधियां स्फुटमीक्षणेन ॥ ९६ ॥
पत्रालिशालिचरितैः परितोऽपि पद्मे साम्यं विधेयमधुना मधुपायिपूर्णे ।
तन्नास्ति वस्तुविधया वनिताऽऽननानां यैर्निर्जिताऽधररुचाऽस्य सुपल्लवश्रीः ॥ ९७ ॥
रामाभिरामवदनैर्मदनैपुणेन स्वीयोपमापदविलोपविधिर्व्यधायि ।
साधर्म्यपङ्क्तिषु ततो नवबिन्दुरिन्दुर्दैवैर्न्यवेशि दिवि शून्यपदेऽरुणोऽपि ॥ ९८ ॥
वर्ण्यः सुराधिपसभासु सभासुरश्रीरिन्दुर्मदक्षतिरमुष्य विशिष्य कार्या ।
नार्याननैरिति गृहैर्ववृधे नगर्यां द्रष्टुं परस्परकृतामिव वादचर्याम् ॥ ९९ ॥
मुक्ता परव्यसनमभ्यसनं नराणां
शास्त्रस्य मृष्टमशनं वसनं यथेष्टम् ।

पुर्यां विमृश्य निलयां घनिनां विमाना-
नुद्यान्ति शंसितुमिव प्रभया समानान् ॥ १०० ॥
उच्चत्वमेषु विषमेषु रसादिवास्यां वश्येषु दिग्युवतिवक्त्रनिरीक्षणेन ।
अन्योऽन्यमुच्चलितकेतुकरेणसंज्ञाप्रज्ञापकेषु भवनेषु विदूरतायाः ॥ १०१ ॥
मुख्यं सुमेरुशिखरैः सममस्ति सख्यं धाम्नां पुरे कुमुदबान्धवसाधुधाम्नाम् ।
निर्णीयते तदिदमद्भुतदानशौण्डकल्पद्रुकल्पपुरुषोत्तमसन्निधानात् ॥ १०२ ॥
नाहष्टहष्टरुगनिष्टगरिष्ठरिष्टदुष्टामरादिजनितः परितापलेशः ।
पुर्यां तदुष्णमहसा विहितोऽपि तापो मा भूदितीव वधृषे जनसौधवृन्दैः ॥ १०३ ॥
सिद्धिर्द्विधाऽपि नगरेऽङ्गभृतां सुसाधा बाधा न काचन वने भवनेऽवने वा ।
विश्वत्रयेऽपि महती महतीह वृद्धिं ख्यातिर्न तद्गृहमहोदयविस्मयः स्यात् ॥ १०४ ॥
दध्रे जनैर्गिरिवरस्य चिरस्य धैर्यं लक्ष्मीः पुनर्विपणिभिर्मणिभिः प्रपूर्णैः ।
गोत्राऽऽश्रयश्च सचिवैरवशेष एव नूनं महेश्वरगृहैः परिवृद्धिवेषः ॥ १०५ ॥
ऊर्ध्वं दिवि स्थितिभृतोऽपि सुरासुरागादागामुका भुवि पुरे सुरभासुरेऽस्मिन् ।
देवालयाः खलु महेभ्यनिवाससूत्र्यां तेषां तथापि स तथोच्चगतिस्वभावः ॥ १०६ ॥
उल्लङ्घ्य खेचरगणान् गगनेऽभ्ययास्यन् नूनं महेश्वरगृहाणि महान्ति शृङ्गैः ।
पादावनम्रशिरसा यदि नागलोकस्तेषां विलम्बकरणं भुवि नाग्रहीष्यत् ॥ १०७ ॥
पुण्यात्मनां परिचयान्नगरी गरीयःपुण्यैर्द्युलोकजयिनी जयनीतिपात्रम् ।
नृणां महोदयविधिं सहसाऽभिधत्तेऽसौ धैर्यधुर्यमणिनिर्मिततुङ्गसौधैः ॥ १०८ ॥
[ इति श्रीवाणारसीनगर-नागर-भवनवर्णनम् । ]
तत्राभिनम्य जिनपार्श्व-सुपार्श्वदेवतीर्थद्वयं सविजयं नमयन्ननम्रान् ।
श्रीजैनशासनजयं नगरे नियोगी शक्त्योदघोषयदयं हृदयं दयायाः ॥ १०९ ॥
अध्वान्तरेऽप्यसुतरां सुतरां तरङ्गैर्गङ्गां व्यतीत्य कृतमार्गबहुप्रयत्नः ।
गच्छन्नतुच्छमुनिगच्छविधेयवृत्त्याऽऽदेशप्रभुर्भुवि वनानि मुदाऽऽलुलोके ॥ ११० ॥
अथ उपवनवर्णनम्, यथा—
उपवनपवनश्रीसौरभानुष्णभावैर्मनसि मनसिजस्य प्रादुरासीद् विकारः ।
तमथ कथमपि स्वं शुद्धमार्गप्रपन्नं समयरसिकवृत्त्याऽऽचेत्य स द्रागरौत्सीत् ॥ १११ ॥
अनवधिविविधबोधान्निर्विरोधप्रबोधात् सहृदयहृदयेऽन्तर्नन्दयन् न्यायधर्मम् ।
अपथमथनकर्मा संकथाभिः सुधर्माऽधिपतिरुपवनान्तः श्रान्तभावेऽप्युवास ॥११२॥
स्फुरति मरुति मन्दे तस्य खेदं बिभेद किशलयवलयानां चालनैः काननाली ।
परभृतभृतकस्तत् साधुवादं जगाद भ्रमरमुखरवन्दिस्तोत्रपाठानुसारी ॥ ११३ ॥
सुरतरव इवामी रेजुरुच्चैर्विशाला बहुदलफलभारैर्नम्रसर्वाङ्गशालाः ।
उपवनसहकाराः स्पष्टपुष्पप्रकाराः परिणतसुरसार्थाऽऽमोदितक्ष्मापसार्थाः ॥ ११४ ॥
कनकघटितमौलिर्मञ्जरीभिर्बभासे प्रसृमरबहुवर्णभ्रामरै रत्नपूर्णः ।
सकलतरुकुलेषु माज्यसाम्राज्यशंसी रुचिररुचिनिसर्गस्यूतचूताकरस्य ॥ ११५ ॥

घनतरतरुशाखाच्छादनात् काननेषु न तरणिकिरणानां कापि संक्लेशलेशः ।
घन इव वनभूमौ संनिविष्टस्तदीयप्रकटकपटवृत्त्या विश्वविश्रान्तिखिन्नः ॥ ११६ ॥
प्रमदवनविशोकाशोकवृक्षेष्वधस्तान्मधुरमधुपदेन्नोद्भिन्नकन्दर्पसेना ।
जगति विजयलब्ध्या गीयमानाऽलिवृन्दैर्युवतिजनमनःस्थं मानभारं जहार ॥ ११७ ॥
भवति पटुरसूर्यंपश्यता राजदारेष्विति चतुरवचोभिः पूर्वभूचञ्चलाक्षी ।
गुरुतरतरुराज्या संवृणोतीव सर्वां तनुमनुपदगङ्गासङ्गमादेव साध्वी ॥ ११८ ॥
त्रिकरणदृढशक्त्या मातुरापन्निवार्या तनयविनयवृत्तिः सद्भिरेवं प्रधार्या ।
व्यपहृत इति भूमेर्भूमिजैः पूर्वगोत्राचरणचणमनोभिः सूर्यजन्योऽभितापः ॥ ११९ ॥

वनमिह बहुरम्भाऽऽरम्भसम्भावनीयं
द्विजनिवहपरीताशोकलोकार्चनीयम् ।
भवनमपि च तादृक् पूर्वदेशे निवेशो
भवति विभवसाम्ये प्रायशः संनियोगः ॥ १२० ॥
बहुसुमनसां स्वैरीभावः पुरेषु यथोत्सवे
प्रभवति वयोयोग्यस्तालाकरः सुधियां मुदे ।
भजति सरसामालीं प्राप्याङ्गनारमणाऽऽदरं
पथि विचरता तेनोद्याने तथा ददृशे स्थितिः ॥ १२१ ॥
ललितमसकृत् क्रीडाऽऽरामे कपेर्न वृषाकपेः
क्वचिदपि न वै तालस्तालः परं धृतगौरवः ।
शुकपरिचयः पाठे नृणां नवांशुकसंचयः
प्रमुदिततयाऽऽदेशेशेन व्यलोकि महौजसा ॥ १२२ ॥
सुरतरुचिता वाटीपाटी स्त्रियाः कचपद्धतेः
सुरतरुचिताऽऽदेशे तस्याद्भुतं समजीजनत् ।
नवकुलरुचिप्रीत्येभ्यानां मिथो जनभोजनं
नवकुलरुचिप्रौढोद्याने पुनर्न महोत्सवम् ॥ १२३ ॥
पुरि भटजनः सर्वो गर्वाङ्कुरो धृतकञ्चुक-
स्तत इव वधूवर्गः पौरः पराकृतकञ्चुकः ।
उपवनगतौ तेनापायि स्फुरत् कलिका लता
क्वचिदुपनता दैवान्नैवावनेः कलिकालता ॥ १२४ ॥
( दृढतरकुचप्रौढत्वेनावरीतुमशक्यतां
प्रथयितुमिव स्पष्टीकुर्वन्न तद्गुणसंगतिम् ॥ १२४ ॥ )
[ इति वा उत्तरार्धपाठः । ]
स वनविपयं स्थाने स्थित्वा यया वसुपायिनां
सवनविपयं स्थाने गृह्णन् मनो वसुपायिनाम् ।
प्रसवकलिकालाऽऽस्यं पश्यन् क्वचिद् भ्रमरोचितं
पथि न कलिकालाऽऽस्यं कश्चिन्नरं भ्रमरोचितम् ॥ १२५ ॥

श्रीफलैरविरलैर्भुवनानि नित्यमुत्सवहितानि वनानि ।
तानि वीक्ष्य कृतसंवननानि तुष्टुवे स जनुभृज्जननानि ॥ १२६ ॥
पूर्वं श्रीजिनवीरधीरचरितं दुर्गोपसर्गादिकं
ध्यायं ध्यायमुपायतः स्थिरतमास्तद्भिसयाऽऽस्वादतः ।
स्वं पुष्पौघमवाकिरन्ति तरवस्तेऽद्यापि तीर्थस्थले
स्मारं स्मारममी समीरकपटात् किं घूर्णयन्तः शिरः ॥ १२७ ॥
क्वचनवननिकुञ्जे प्रत्यथी प्राप्तरूपैः
स्वयमिह समुपेत्याऽऽशिश्रिये देशभूपैः ।
अविकृतकृतहस्तैर्नीयमानः पुरस्तात्
समितिसहितवाचाऽऽदेशराजः प्रगल्भः ॥ १२८ ॥

[ इति पूर्वदेशमार्गयनवर्णनम् । ]

सुवर्णसावर्ण्यरुचिः सरोभुवां गलत्परागैररुणांशुपांशुभिः ।
सेनोल्लह्वेऽथ सुवर्णवालुका सरिद्वरिष्ठैः करिभिः परिस्तुता ॥ १२९ ॥
देवदूष्यशकलं पुराऽर्हतः स्कन्धतः शतमखेन धारितम् ।
संपपात जनपातकच्छिदे तद् दधार जलधारयेव सा ॥ १३० ॥
तमसि तरणिकल्पः कल्पविघ्निर्विकल्पः कृतसुकृतविनोदः प्राप्ततीर्थप्रमोदः ।
मनसि निहितवीरस्तीरमस्याः प्रपेदे पटुवहनबलेनोत्तीर्य वेणीं सवीर्यः ॥ १३१ ॥
क्वचनवचनभङ्ग्याऽऽरोग्ययोग्यप्रयत्नः करणकरनियुक्तान् बोधयन् योधलोकान् ।
विदितविपयशुद्धिस्तेजसाऽऽदेशराजः प्रमुदितनृपचक्रः शक्रलक्ष्म्या रराज ॥ १३२ ॥
कतिपयविपयाणां निग्रहं विग्रहेण विदधदधिकबोधिस्सोऽधिकारेऽधिरूढः ।
पतिनृपतिरपापावापजापोदयश्रीरपिरिव दिवसाऽऽस्थे पत्तनं पूर्वभूम्याः ॥ १३३ ॥
मत्या तत्त्वविदस्तदागममिह श्रद्धाघनाः साधना-
न्यानीयोचतुरङ्गपुङ्गवगजादीनि स्वयं तैः समम् ।
प्रौढाऽडम्बरपूर्वमभ्ययुरतिप्रीता विनीताऽऽशयाः
पूर्वापत्तनवासिनः प्रवामिनः श्रीचित्रभानूदये ॥ १३४ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते
उदयश्रीकलिते पूर्वदिक्प्रयागवन-भवन-नगरमार्गवर्णनो
नाम एकादशः सर्गः ॥

॥ श्रीः ॥ छः ॥ कल्याणपद्धतिः पल्लवयती भवतु ॥



## द्वादशः सर्गः ।

आनन्दमेदुरतया दुरितैर्दुरन्तैर्मुक्तेन तेन गुरुणा गुरुणाऽऽदरेण ।
संयुज्य पूज्यविधिना सुदृशस्तदेभ्या अन्तःपुरं तमथ निन्युरमन्युमान्यम् ॥ १ ॥
गर्जत्सु वाद्यनिवहेषु चलन् समित्याऽऽदेशप्रभुः प्रभुतयाऽन्वितपार्श्वनाथम् ।
चैत्ये समेत्य सह सङ्घजनेन वृत्तैस्तुष्टाव तुष्टमनसा परपुष्टभावात् ॥ २ ॥
स्वस्तिश्रियः प्रणयपात्रममात्रशक्तिश्चिन्तामणिर्दिनमणिर्जिनपार्श्वरूपः ।
यस्यां सदाऽभ्युदयवान् भुवनावभासी सा पूर्वदिग् विजयतां जयताण्डवेन ॥ ३ ॥
फुल्लत्फणीश्वरफणामणिशोणरोचिरुचीयमानमसमानममानमाह ।
यस्य प्रभोः शिरसि सेवकसेव्यभूतेर्नित्यं महोदयमिह द्विविधं प्रसह्य ॥ ४ ॥
प्राच्यामिवाभ्युदयिनो जिनपार्श्वमूर्त्तौ भक्त्यैव वश्यमनसः शशिमुख्यखेटाः ।
वक्त्रं शशीधरफणामणिकैतवेन भौमादयो दिनकरः कनकातपत्रम् ॥ ५ ॥
येन प्रबोधविभवः कमलाकराणामुत्पाद्यते द्युतिभरेण तमो विभिद्य ।
स्फूर्जत्फणामणिरुचाऽरुणिमाऽनुभावश्चिन्तामणिर्दिनमणिस्तदयं प्रतीतः ॥ ६ ॥
सच्चक्रवालमपि मोदयति स्वभासाऽभ्यासात् करोति भुवने जडताविनाशम् ।
नास्तं प्रयाति सुमनस्सु कृतावबोधस्तेनेश ! एव विजयी भुवने दिनेशः ॥ ७ ॥
यः पूर्वगोत्रविशदीकरणे पटीयान् राज्ञे हितं वसु ददाति सदाऽतिशायी ।
कर्त्ता प्रभावविभवेन जगत्प्रभाऽऽढ्यं पार्श्वात् ततो न हि परः परमार्थभास्वान् ॥ ८ ॥
ख्यातिं यतः समभजद् भुवनेऽश्वसेनाह्वानः क्षमापतिरतिस्पृहणीयतेजाः ।
यद्वा मयाऽप्यधिगता सुगुणैः प्रशंसा प्राच्या स किं न सविता सविता विमूल्याः ॥९॥

पूर्वाहरिज्जननतः सकलादितेय-
ध्येया बभूव नवभूवरवर्णनीया ।
काश्या प्रकाश्य निजरूपमतः स भास्वान्
पार्श्वाऽऽख्यया विजयते जयतेजसाऽर्च्यः ॥ १० ॥

यस्य प्रभा प्रियतमाऽऽयतमानसस्य राजन्यजन्यमहिताऽवहितानुरागे ।
मुक्त्वा परं जनपदं सहचारचारुस्तस्मिन्निहार्हति किमर्हति नार्करूपम् ॥ ११ ॥
भोगीन्द्रनिर्मितसहस्रफणामणीनां रोचिश्चयैर्धवलयन् वलयं धरण्याः ।
क्षुद्रग्रहादिललितं हरते समग्रं तस्मिन् सहस्ररुचितानुचिता कथं स्यात् ॥ १२ ॥
यस्योत्तरायनमपि प्रकटं भुजङ्गच्छत्राऽऽश्रये प्रतपतस्तपसाऽऽतपेन ।
तद्दक्षिणायनमहो कलिकुण्डतीर्थे साम्योदधेस्तरणिसाम्यममुष्य मुख्यम् ॥ १३ ॥
सूर्यः पुपोष जनने सति मासि पौषे धाम्नां सहस्रमधिकृत्य जिनस्य सेवाम् ।
नूनं तदूनमभवन्न कदाऽपि तस्य युक्तस्ततो भुवि सहस्ररुचिर्जिनोऽपि ॥ १४ ॥

दोषाकृतिर्विनिहता वपुपांशुपोपात् शोषाय वा प्रकटितं भुवि पङ्कराशेः ।
पद्मोदयं प्रणयता प्रणयेन येन चित्रं न तत्र वरतेजसि चित्रभानोः ॥ १५ ॥
पूर्वोदयं निदधता विधिनाऽधिमित्रं मित्रं विधाय ससृजे भुवनोपकारः ।
पार्श्वेन विश्वविभुना कमठप्रतिष्ठा प्रान्तं प्रकाश्य धरणीधरसंनियोगम् ॥ १६ ॥
यः पद्मिनीहृदयमध्यगतोऽपि कान्त्या तत्याज राजमहितो न सुवृत्तभावम् ।
कृत्वाऽऽतपप्रकटनं घटयन्नवन्यां पादप्रसादमुदितं भरतप्रदेशम् ॥ १७ ॥
पार्श्वं न मुञ्चति कदाऽपि कविर्यदीयं प्रीत्या पुरस्सरतया जनदर्शनीयः ।
तद्वद् बुधोऽप्यनुगतावपि तौ प्रभावात् प्राप्तोदयाविव ततः शुचिसंचयेन ॥ १८ ॥
उच्चैर्गिरः स्तुतिपदं जगदुर्न भोगा यस्याऽऽगमे भुवि सपक्षतयाऽतिदक्षाः ।
गावः पुनर्दिशि दिशि प्रसृता रसौघतुल्या प्रियाः सुमनसां रुचिवर्द्धनेन ॥ १९ ॥
सर्वस्य वश्यकरणे निपुणा गुणाढ्याः प्रादुर्बभूवुरिह बोधिकरस्य वाचः ।
उज्जागरः सकलनागरनागलोको यद्दर्शने स्फुरति साधयति स्वमर्थम् ॥ २० ॥
यस्याङ्गकान्तिविभवेन विसर्पतैव दर्पोऽपि कौशिककृतः परिसर्पति स्म ।
निद्राणतामनुबभूव परं कुवेलास्थानं सरोऽभिगमनीयमभूज्जनानाम् ॥ २१ ॥
विश्वप्रभाविह विवेश विधेर्निदेशात् सूरप्रभाऽरुणतयाऽभ्युदयप्रसक्ता ।
तेनाऽधरो धरति रागधुरं विशिष्य शेषः प्रभाकृति ततः सित एव वेषः ॥ २२ ॥
सौम्या रुचिर्मुखसरोरुहितीर्थभर्तुर्वप्रातपत्ररचनासु महेन्द्रलक्ष्मीः ।
मुक्तालतासु नवधिष्ण्यकलाविलासः शीर्षे फणामणिगणे तरणिप्रकाशः ॥ २३ ॥
सिंहासने समुपविश्य गवां विलासैर्विश्वं विभासयति विश्वविभौ जिनेशे ।
व्यर्थीभवँस्तदिह निर्मलधर्मचक्रमूर्त्या पुरः स्फुरति भृत्य इवोष्णकान्तिः ॥ २४ ॥
नैकः प्रकाशनपटुस्तरणिस्त्रिलोक्या न द्वादशापि विधिनावधिनाऽवगत्य ।
चक्रेऽस्य मूर्ध्नि फणिसप्तकमुत्फणासु पार्श्वस्य सप्तभुवनप्रतिभासनाय ॥ २५ ॥
ज्योतिर्भरे प्रसृमरे भगवान् स सूर्यद्वीपाधिपप्रतिकृतिः कृतिनां विभाति ।
जातिः सहस्रमहसां मणिभित्तिबिम्बश्रीचुम्बनेन कुरुते गुरुपादसेवाम् ॥ २६ ॥

रविद्वीपाधीशः प्रभुरिह विनिर्णीयत इतः
शतस्तोमैः स्तुत्यः प्रतिदिनमयं नाम शतशः ।
जिनः पार्श्वश्चिन्तामणिरिति मनोऽभीष्टकरणाद्
भुवि ख्यातः प्रातर्मम विपयतां यातु स नतेः ॥ २७ ॥

स्तुत्येति पार्श्वतरणिं तरणिं भवाब्धेर्योग्याम्भसुरद्रुकरणिं सरणिं शिवस्य ।
धर्माश्रये स्थितिमधाद्यतुरोऽपि मासानासाद्य पुण्यसमयं भगवधियोगी ॥ २८ ॥
उच्चैःसभामिव दिवः प्रसरत्सुधर्माऽऽख्यातां स साधुवसतेः शिखरे प्रपद्य ।
तत्प्रेक्षणाऽखिलपुरः सुषमां स्वभासाऽऽदेशप्रभुस्त्रिभुवनेऽपि निदर्शनीयाम् ॥ २९ ॥

यत्रोत्तुङ्गविहारहारिललितैर्मानाद् विमाना दिवः
प्रच्युत्य प्रतिपत्तये घनपतां सौधश्रिया शिश्रियुः ।

तच्चिह्नं तु गवाक्षलक्षविलसद्रम्भानुरूपाङ्गना-
प्रेक्षाभिः सहसाऽनिमेषनयना देवा इवामी जनाः ॥ ३० ॥
यत्रोच्चैस्तरचैत्यकेतुचलनैस्त्रस्ता इवेतस्ततो
भ्राम्यन्तोऽपि मृगादयः प्रियतमा राज्ञः श्रमं नेयति ।
नक्षत्राण्यत एव ता ग्रहगणग्राहेण रात्रिंचरा
मेषोक्षायतराशिभिर्दृढतरं बद्धा सुधारश्मिना ॥ ३१ ॥
यस्मिन्निभ्यजनालयैर्नु विजिता देवालया व्योमनि
भ्राम्यन्ति स्म सविस्मयास्तदनुगाः सूरादिखेटा अपि ।
स्वर्णं स्वर्णगिरेर्जिघृक्षव इवोच्चीय स्वकीयान् करान्
क्षीणाक्षीणतयैव राज्ञि विदितं दारिद्र्यमेषां ततः ॥ ३२ ॥
सौधानां किरणैः पराजिततयाऽप्यावश्यकाभ्यागमा-
न्नक्षत्राणि समागतान्यपि समुत्तम्भ्य स्वहस्तं मदात् ।
न स्थातुं प्रभवन्ति तेन पुरतोऽश्विन्याः प्रचारे निशि
राज्ञः सार्धमपि त्यजन्ति न मनाक् शून्यस्थलस्थान्यहो ! ॥ ३३ ॥
मुख्यं सौख्यममुष्य सौधवसने मत्वा सुरैरुज्झिताः
किं तेषां निलयाः परिभ्रममधुर्निस्सारयोगादिव ।
निःश्रीका इव नीरसायनरता नित्यं तमःसंगता
नक्षत्रोपधिना क्वचिन्मृगशिरःस्थानेन शून्यास्ततः ॥ ३४ ॥
यत्रोत्तुङ्गनिवासशृङ्गनिवहव्यासङ्गसङ्घर्षत-
स्ताराणां सकलाऽप्यहारि सुषमा रौद्राकृतिस्तास्ततः ।
उद्धृत्तैव हि कृत्तिकाशतभिषक्सङ्गेऽपि तल्लोहिता-
ङ्गस्याहर्निशविक्रियापरिणतिर्व्याहन्यते नान्यतः ॥ ३५ ॥
सेवायै जिनराजराजतलसच्चैत्यव्रजस्यानिशं
देवा यत्र पुरे सुरेशमहिते पौरच्छलादाययुः ।
तच्छेषः प्रतिभासते निशि कविः काणः कलङ्की शशी
वक्रः पङ्गुरथोऽशनिः स नियतं स्वर्गे निवासी जनः ॥ ३६ ॥
यद्गेहालिमहामहोभिरभितो विस्तारिभिस्तारका-
धीशः पाण्डुरितः कलङ्कविकलश्चिराय यावद् भवेत् ।
तावत् तुङ्गगवाक्षसङ्गतवधूरास्योपमासंभ्रम-
च्छेदायेव सुखेन तं वितनुते नूनं तथैवाञ्जनात् ॥ ३७ ॥
प्रातर्भानुरयं तथाद्युतिभरैरग्रेन विभ्राजते
श्रीरत्नाकरतोऽप्युपेत्य विवसुः कोपारुणः स्वात्मनि ।
संस्थाने करचालनादिह नृणां स्पष्टान् मणीनां गणान्
मन्ये प्राप्तरुचिः करोति भुवनप्रोद्भासनं सोऽचिरात् ॥ ३८ ॥

यस्मिन्निर्व्यसनः परं सुवसनः श्रद्धाऽतिशायी जनः
सौधर्मस्थितिलक्षणं समुचितं तस्मिन्नहो ! पत्तने ॥ ५५ ॥
विश्वाऽऽखण्डलमण्डलीमनुनयन् शोभाघनैः साधनै-
र्निःसामान्यवदान्यतादिसुगुणैर्यत्राऽऽस्तिकानां गणः ।
तत्रैश्वर्यकथां सदाऽप्यवितथां गङ्गाऽऽश्रयात् कुर्वति
सत्यः श्रीनगरेऽस्ति वर्णनविधिर्दिव्योऽभिनव्यश्रिया ॥ ५६ ॥
तत्र व्यतीत्य चतुरश्चतुरोऽपि मासानुद्बोधियोधिनि जने जिनधर्मदार्ढ्यम् ।
कुर्वन् विमोहमलमुच्छलितच्छलेन येगाज्जिगाय मुनियोगिनियोगिनागः ॥ ५७ ॥
प्रास्थापयद् विदिशि हव्यभुजो भुजौजाः पादातिचारबलमस्खलितं खलैः सः ।
सम्यग् मुहूर्त्तसमये समये प्रसिद्धं सम्मेततीर्थमथ नन्तुमना वनान्तः ॥ ५८ ॥
शुद्धाऽऽशयः स्वयमपि क्रमतश्चचाल वाचालयन् जयरवैर्दशदिक्कदम्बम् ।
निर्यासयन् जनपदादनघप्रवृत्तिं कृत्वोपदेशविनिवेशविधेः प्रयन्थम् ॥ ५९ ॥
सैवानुरागपरभक्तिरनेन धार्या स्मार्या स्मृतिश्च मनसा गुरुगौतमीया ।
शालेयसंवरपरिक्रमणेन मार्गमभ्यस्यता भुवि कृतोऽविकृतः प्रयत्नः ॥ ६० ॥
कृत्वा विशिष्य समितिं वचसा ररञ्ज स प्राकृतप्रतिपदस्थितिमादधानम् ।
भूपालवर्गमपवर्गनिसर्गरागाच्चर्यापरीषहसुहृः सहसाऽध्वचारी ॥ ६१ ॥
अर्हद्विहारभवनाद् विविधोपहारभास्वां विहारनगरीं क्रमतो जगाम ।
सद्ग्रामसाधुचरितैर्भुवि गीयमानैरादेशभूपतिरतिप्रतिपन्नधैर्यः ॥ ६२ ॥
तत्रापि चैत्यनमनाग्र मनाग् विपण्णः स्तोतुं स्वतः प्रववृते जिनभास्वतोऽर्घाम् ।
प्रत्यक्षतः क्षततमस्तमपार्श्वनाम्नः सर्वार्थसाधनविधेर्जिततीव्रधाम्नः ॥ ६३ ॥
स्वस्तिश्रियां नियसनस्थलमाननाब्जमब्जं जिगाय कलयैव सदोदयेन ।
यस्य प्रभोः कमठदर्पहरस्य कामं कामप्रथाभरहरस्य मनोहरस्य ॥ ६४ ॥
स्वस्तिश्रियः सुभगसंगतशोणवासस्तुल्याः स्फुरन्ति परितः खलु यस्य भासः ।
उद्यत्करुणामणिभुवः किल भूर्भुवःस्वःस्वामी स कामितमुदे शिवधामगामी ॥ ६५ ॥
स्वस्तिश्रियां करणमाभरणं त्रिलोक्या अर्हञ्जिनेन्द्रभगवत्प्रभुनामधेयः ।
ज्ञातार्थजातपटुबोधमहावदानस्तातः स सातविषयेऽस्तु सतां कृपातः ॥ ६६ ॥
स्वस्तिश्रियां समुदयोऽभ्युदयेन यस्य प्रादुर्भवत्यखिलदुर्भयसंनिरोद्धुः ।
अभ्यमतो विदधतः प्रकटोपदेशाव्यास्पा मोहेन्द्रद्विशमाश्रयतः प्रभाभिः ॥ ६७ ॥
यद्दर्शने भुवि विनश्यति चौर्यचर्या तस्यानि पद्यपनि परिग्रहमोक्षपक्षे ।
लोकः श्रियाय नमति प्रतिपद्यचेताश्चिन्तामणिर्दिनमणिप्रकृतिस्स जीयात् ॥ ६८ ॥
पार्श्वमलेऽस्य नियतः कमलानुषङ्गः पादोपयोगजनितत्रिजगत्प्रकाशः ।
पार्श्वस्य तस्य सममाऽभिमताऽहिमांशोरत्यद्भुतं यदिह देहभृतां न तापः ॥ ६९ ॥
अर्हन्महः स्यादृश्येऽभ्युदयेन रम्यं सन्मानसाऽम्बुजविपोषकरं निदधः ।
प्रोद्दामकामतमसां हि विरामहेतुर्वामाम्बसेनन्दनमिनिभाऽभ्यनन्दि ॥ ७० ॥

स्युः संपदः प्रतिपदं विपदं निहत्य राज्यं विराजिगजवाजिशताङ्गराजि ।
सत्संगतिर्गतिरपि द्युसदां महेज्या यस्य प्रभाव-विभवानुभवाञ्जनानाम् ॥ ७१ ॥
नूनं सहस्रगुसहस्रमहः प्रसह्य संपिण्ड्य शुद्धविधिना विधिना व्यधायि ।
तेजोभरः सकलपातकसंनिपातव्याघातहृज्जिनपतेः परमाश्वसेनेः ॥ ७२ ॥
यो वारुणीं न चकमे न तथोत्तराशां तद्वन्न दण्डधरदिग्गमनं कदाचित् ।
सोऽपूर्वभानुरिव पूर्वदिशं प्रपन्नः पार्श्वः सदाऽभ्युदयवानिति नात्र चित्रम् ॥ ७३ ॥
यस्य प्रभा सहचरी गिरिसानुरागा बालातपप्रकरणान्महिला महीशैः ।
दूरीचकार भुवने जडिमाऽभिमानं त्यक्त्वा पराश्रयतयाऽङ्गभृतां नितान्तम् ॥ ७४ ॥

त्रयी येनोद्गीर्णा समवसरणे यस्य पुरतोऽ-
हयः श्रेणीरम्या वियति दधते नृत्यललितम् ।
यतः पद्मोल्लासो भवति नियतस्तं धनकरं
नमामः श्रीपूर्वोदयिनमथ पार्श्वं दिनकरम् ॥ ७५ ॥

स्तुत्वा जिनं प्रतिजनं विहिताऽतिभक्त्याऽऽदेशप्रभुर्नगरमैक्षत शास्त्रदक्षः ।
साक्षात् तदीयसुषमा सुखमानिनाय चेतस्ततः स्तुतिमिमामचिरादुवाच ॥ ७६ ॥
यत्र चित्ररचना वचनानां गोचरात् पटुधियामतिशेते ।
वेश्मनां धनवतां सुरलोके लाघवं विदधतां विभवेन ॥ ७७ ॥
मानवाऽऽश्रयभवाच्छिवसिद्धिर्जायते दिवमतीत्य समस्ताम् ।
इत्यवेत्य किमु पौरगृहाणि तुङ्गतामधिगतानि विशिष्य ॥ ७८ ॥
अत्र कायमपहाय विवस्त्री भोगभाग् भवति वस्त्रमिवाङ्गी ।
यावतः सहतनुर्मनुजन्मेऽतीव यत्र भवनेष्वतिवृद्धिः ॥ ७९ ॥
भास्करोपलदलैर्जनिताग्नेस्तापतो न जडिमा शिशिरेऽपि ।
स्पर्द्धया शशिमणिक्षरदम्भः संभवान्नहि शुचावपि तापः ॥ ८० ॥
उद्यतद्युतिमता हिमधृत्तिर्नाश्यते भुवनमत्र विकाश्य ।
सौधपङ्क्तिरदसीयशरण्या जायते तपसि चान्द्रपयोभिः ॥ ८१ ॥
सान्द्रचान्द्रविगलज्जलधारा धौतशुद्धकलधौतसवर्णा ।
साङ्गगाङ्गपयसा ह्यभिषिक्तं पुण्यमेव कुरुते परलोकम् ॥ ८२ ॥
निर्दहद्भिरगुरुद्रुमसारैर्वान्तधूमकृतमण्डलयोगात् ।
आतपत्रमिव यत्र बभासे राजतां प्रकटयन् नगराणाम् ॥ ८३ ॥
यत्नबद्धशशिरत्नपयोभिर्जन्यते यदभिषेकविवेकः ।
बालसूर्यमहसा सहसा स्यात् सांप्रतं बहलचन्दनचर्चा ॥ ८४ ॥
केतनैर्धनिनिकेतनलक्ष्मीचेतनैः पुरपुरन्दरमूर्त्तेः ।
सा प्रकीर्णककला सकलाऽपि दृश्यतेऽपवनभूपवनेन ॥ ८५ ॥
भूभृतां भवनपङ्क्तिनिवेशः पेशलश्रियमधादिह मौलेः ।
तत्र रत्नभुवि बिम्बिततारामालया भवति मौक्तिकमाला ॥ ८६ ॥

सौधादङ्कुरितैः करव्यतिकरैः स्वस्वामिनां कामिनी-
लोकस्याऽऽननसौहृदेन शशिनः कार्ष्ण्यं निहन्तुं रयात् ।
यावन्निर्मलता क्रियेत सुचिरं तावत् तदीयाऽऽनना-
म्भोजप्रेक्षणलज्जयेव स पुनः स्पष्टं कलङ्की विधुः ॥ ३९ ॥
उच्चैस्त्वेन महौकसां घनवतां ग्रीष्मेऽपि यत् केतनै-
र्यायुव्यञ्जनयाऽक्रियन्त हरयस्तीक्ष्णद्युतेः सुस्थिताः ।
तेनामी हरितत्विषाऽत्र परितः स्वर्णाचलं भ्रामुका
विस्मेरस्मरतोऽश्विनीमनुगता धावन्ति तत्कामुकाः ॥ ४० ॥
नक्षत्राणि कथं व्रजन्ति परमं पारं वियन्नीरधेः
प्राप्यं पादसहस्रधारिहरिणा वेगेन सप्तावेताम् ।
पुर्यामिभ्यमहौकसां पथि न चेदालम्बनं सुन्दरं
हासाभ्यासविलासलालसवधूप्रेमाभिलापेक्षणैः ॥ ४१ ॥
प्रोधैर्गन्तुमिवोत्सुकैर्जनगृहैर्या जेतुकामैर्दिवोऽ-
भ्याहूतेव किमश्विनी प्रतिपदं रत्नाङ्गणे बिम्बिता ।
भीतस्तच्चरिताद् विशिष्य सकलः स्वर्लोक एवापतद्
ज्योतिः संक्रमणच्छलेन पदयोस्तेषां स्फुरत्तेजसाम् ॥ ४२ ॥
स्वर्लोकं प्रभयाऽधरं विदधता नक्षत्रबिम्बोपधे-
स्तेनोदस्त इव ध्वजव्रजततुर्हस्तः प्रशस्तः श्रिया ।
सौधानां निवहेन शुद्धरुचिना तत्रेन्दुसूर्यद्वयं
क्रीडाकन्दुकचारुचित्रचरितं धत्तेऽप्रमत्तेङ्गितैः ॥ ४३ ॥
स्फीतिं सातिशयां विसृज्य हरिणा यत्रेभ्यलोकौकसां
नित्यं स्वर्गविघातिनीं प्रविदधे विज्ञाय तारास्थितिः ।
तेषामुच्छ्रितकेतनैः प्रचलितैः संघृष्य दूरीकृता-
स्ता अस्ताचलगण्डशैललुलिता गच्छन्ति विच्छायताम् ॥ ४४ ॥
सौधानामभिवर्द्धनेऽन्तरगतास्तारावतारा अपि
व्याधूयन्त कृतान्तरायकतया मूर्द्धन्यधन्यध्वजैः ।
तेनामी प्रतिभान्ति चञ्चलतया वार्द्धेस्तरङ्गा इव
नासूयाऽध्यवसायिनामिह भवेत् कुत्राऽपि नित्या स्थितिः ॥ ४५ ॥
सौधानां निकरैर्महोद्यतिधरैर्दण्डैरिहाभ्रंकषै-
रुत्पातादिविपद्रुमा वितरणैः स्पर्द्धिष्णवः स्वाधिपैः ।
तन्मूलं स्फुटमेव दूरपतितं चित्रा-विशाखा तथा
पद्माणि प्रतिभान्ति कान्तिविलसत्तारावतारश्रिया ॥ ४६ ॥

1 A "स्फुरि"

अत्युच्चैस्तरचैत्यमूर्द्धनि लसत् सिंहप्रसङ्गाद्भ्रमः
सिंही सूनुमसूत राहुमसितं प्राहुस्तमन्वीक्षकाः ।
अन्तःसंगतपुत्रिका जनमुखाम्भोजन्मलक्ष्मीभर-
स्पर्द्धिष्णोः शशिनोऽनुवाहनशशन्यादित्सुमस्मिन् पुरे ॥ ४७ ॥
अश्विन्यः प्रतिवेश्म विस्मयपदं ब्राह्मीप्रवृत्तिः परा
चारोऽप्याहितमङ्गलः श्रुतिरुचिः स्पष्टा बुधैः संगतिः ।
सूरः पूर्णकलाधरश्च सकलो लोकः कवित्वाश्रय-
स्तज्ज्योतिर्गणभासुरेऽत्र नगरे न्याय्या गुरोरादृतिः ॥ ४८ ॥
मा द्राक्षीन्नगरीजनः परिजनं रम्भादिकं स्वःपते-
स्तुङ्गत्वेन त्रिजौकसामिति धृतान्तर्जालिका वेधसा ।
ताराणामवतारणेन सहसा तां नागरे जागरे
वायुर्दृष्टिसुखाव्यदृष्टविभवात् प्रातर्विदूरेऽकरोत् ॥ ४९ ॥
अस्माकं सुहृदः क्ष्माधरवरास्तुङ्गश्रिया तान् द्विपन्
इन्द्रः कीदृगितीश्वराश्रयगणं वर्द्धिष्णुमालोकितुम् ।
द्यौर्मत्वाऽतिबलाचलग्रहमिषादुच्चैः श्रुतिश्चाश्वयुग्-
धृत्त्वाऽस्ताद्रिदरीर्विहस्तकलया सद्यो भजत्यन्वहम् ॥ ५० ॥
अत्युच्चैः श्रुतिसंपदामृषिरुचिन्यासङ्गतः प्रस्फुटं
ब्राह्मीनिर्मलताजुषां दृढतया सन्मार्गमासेदुषाम् ।
आदित्यद्युतिशालिनामिह भवेत् किं ज्योतिषां विभ्रमः
पातो वाऽस्तगिरौ गुरोन्नतगृहैः पादाः स्खलेयुर्न चेत् ॥ ५१ ॥
ज्योतिर्हव्यभुजां कुतो दिवि भवेत् चक्रेऽतिचारोऽथवा
गत्या मार्गविमुक्तिरत्र महसां राज्ञः प्रसारेऽप्यहो ! ।
अत्युच्चैस्तरसौधमूर्ध्नि विलसल्लोलेक्षणावेक्षणा-
दस्यां चेन्नहि विभ्रमः प्रसरति द्वेधा प्रभाऽऽच्छादनात् ॥ ५२ ॥
सन्मार्गेण गुरोर्महोदयदशायुक्ताऽऽलयानां जने
क्षेत्रज्ञे बहुधान्यवृद्धिधरणप्रौढिः प्रसिद्धाऽऽगमे ।
सर्वाऽऽशासु फलाऽऽढ्यता क्षितिभृतां सारस्यमावश्यकं
नृणां कामनयाऽऽदरेण फलितं साभोगभोगश्रियाम् ॥ ५३ ॥
इभ्यानां गुरुदैवतं प्रियतरं चित्ते सचेता जनः
सर्वोऽप्यश्वयुगेन साऽऽभरणिता बाहुल्यमोजस्विनाम् ।
नेत्राभीप्सितसंगतिर्द्विजपतिः प्राभाकरीं वा रुचिं
धत्ते तत्र पुरे न चित्रविषये ज्योतिर्महत्त्वं गुरौ ॥ ५४ ॥
कान्तः शान्तविधेर्निशान्तममलस्वान्तः स्वसिद्धान्तविद्
न भ्रान्तः क्वचिदर्थसाधनकृतौ श्रान्तो न सत्कर्मणि ।

यस्मिन्निर्व्यसनः परं सुवसनः श्रद्धाऽतिशायी जनः
सौधर्मस्थितिलक्षणं समुचितं तस्मिन्नहो ! पत्तने ॥ ५५ ॥
विश्वाऽऽखण्डलमण्डलीमनुनयन् शोभाघनैः साधनै-
र्निःसामान्यवदान्यतादिसुगुणैर्यत्राऽऽस्तिकानां गणः ।
तत्रैश्वर्यकथां सदाऽप्यवितथां गङ्गाऽऽश्रयात् कुर्वति
सत्यः श्रीनगरेऽस्ति वर्णनविधिर्दिव्योऽभिनव्यश्रिया ॥ ५६ ॥

तत्र व्यतीत्य चतुरश्चतुरोऽपि मासानुद्बोधिबोधिनि जने जिनधर्मदार्ढ्यम् ।
कुर्वन् विमोहबलमुच्छलितच्छलेन वेगाज्जिगाय मुनियोगिनियोगिनागः ॥ ५७ ॥
प्रास्थापयद् विदिशि हव्यभुजो सुजौजाः पादातिचारबलमस्खलितं खलैः सः ।
सम्यग् मुहूर्त्तसमये समये प्रसिद्धं सम्मेततीर्थमथ नन्तुमना वनान्तः ॥ ५८ ॥
शुद्धाऽऽशयः स्वयमपि क्रमतश्चचाल वाचालयन् जयरवैर्दशदिक्कदम्बम् ।
निर्वासयन् जनपदादनयप्रवृत्तिं कृत्योपदेश-विनिवेशविधेः प्रबन्धम् ॥ ५९ ॥
सैवानुरागपरभक्तिरनेन धार्या सार्या स्मृतिश्च मनसा गुरुगौतमीया ।
शालेयसंवरपरिक्रमणेन मार्गमभ्यस्यता भुवि कृतोऽविकृतः प्रयत्नः ॥ ६० ॥
कृत्वा विशिष्य समितिं वचसा ररञ्ज स प्राकृतप्रतिपदस्थितिमादधानम् ।
भूपालवर्गमपवर्गनिसर्गरागाचर्यापरीपहसुहः सहसाऽध्वचारी ॥ ६१ ॥
अर्हद्विहारभवनाद् विविधोपहारमात्तां विहारनगरीं क्रमतो जगाम ।
सङ्ग्रामसाधुचरितैर्भुवि गीयमानैरादेशभूपतिरतिप्रतिपन्नधैर्यैः ॥ ६२ ॥
तत्रापि चैत्यनमनाय मनाग् विपण्णः स्तोतुं स्वतः प्रववृते जिनभास्वतोऽर्चाम् ।
प्रत्यक्षतः क्षततमस्तमपार्श्वनाम्नः सर्वार्थसाधनविधेर्जिततीव्रधाम्नः ॥ ६३ ॥
स्वस्तिश्रियां नियसनस्थलमाननाब्जमब्जं जिगाय कलयैव सदोदयेन ।
यस्य प्रभोः कमठदर्पहरस्य कामं कामप्रथाभरहरस्य मनोहरस्य ॥ ६४ ॥
स्वस्तिश्रियः सुभगसंगतशोणवासस्तुल्या स्फुरन्ति परितः खलु यस्य भासः ।
उद्यत्फणामणिभुवः किल भूर्भुवःस्वःस्वामी स कामितमुदे शिवधामगामी ॥ ६५ ॥
स्वस्तिश्रियां करणमाभरणं त्रिलोक्या अर्हज्जिनेन्द्रभगवत्प्रभुनामधेयः ।
ज्ञातार्थजातपटुबोधसदावदातस्तातः स सातविधयेऽस्तु सतां कृपातः ॥ ६६ ॥
स्वस्तिश्रियां समुदयोऽभ्युदयेन यस्य प्रादुर्भवत्यखिलदुर्भवसंनिरोद्धुः ।
अप्रमत्तो विदधतः प्रकटोपदेशव्यासपा महेन्द्रदिशमाश्रयतः प्रभाभिः ॥ ६७ ॥
यद्दर्शने भुवि विनश्यति चौर्यचर्या तरथानि पश्यति परिग्रहमोक्षपक्षे ।
लोकः शिवाय नमति प्रतिपद्य चेताश्चिन्तामणिर्दिनमणिप्रकृतिस्स जीयात् ॥ ६८ ॥
पाणेस्तलेऽस्य नियतः कमलानुषङ्गः पादोपयोगजनितस्त्रिजगत्प्रकाशः ।
पार्श्वस्य तस्य समताऽभिमताऽहिमांशोरत्यद्भुतं यदिह देहभृतां न तापः ॥ ६९ ॥
अर्हन्महः स्वहृदयेऽभ्युदयेन रम्यं सन्मानसाऽम्बुजविबोधकरं निदध्मः ।
प्रोद्दामकामतमसां हि विरामहेतुर्यामाश्वसेननृपनिप्रतिभाऽप्यनन्दि ॥ ७० ॥

स्युः संपदः प्रतिपदं विपदं निहत्य राज्यं विराजिगजवाजिशताङ्गराजि ।
सत्संगतिर्गतिरपि द्युसदां महेज्या यस्य प्रभाव-विभवानुभवाज्जनानाम् ॥ ७१ ॥
नूनं सहस्रगुसहस्रमहः प्रसह्य संपिण्ड्य शुद्धविधिना विधिना व्यधायि ।
तेजोभरः सकलपातकसंनिपातव्याघातहृज्जिनपतेः परमाश्वसेनेः ॥ ७२ ॥
यो वारुणीं न चकमे न तथोत्तराशां तद्वन्न दण्डधरदिग्गमनं कदाचित् ।
सोऽपूर्वभानुरिव पूर्वदिशं प्रपन्नः पार्श्वः सदाऽभ्युदयवानिति नात्र चित्रम् ॥ ७३ ॥
यस्य प्रभा सहचरी गिरिसानुरागा बालातपप्रकरणान्महिता महीशैः ।
दूरीचकार भुवने जडिमाऽभिमानं त्यक्त्वा पराश्रयतयाऽङ्गभृतां नितान्तम् ॥ ७४ ॥
त्रयी येनोद्गीर्णा समवसरणे यस्य पुरतोऽ-
ह्यः श्रेणीरम्या वियति दधते नृत्यललितम् ।
यतः पद्मोल्लासो भवति नियतस्तं धनकरं
नमामः श्रीपूर्वोदयिनमथ पार्श्वं दिनकरम् ॥ ७५ ॥

स्तुत्वा जिनं प्रतिजनं विहिताऽतिभक्त्याऽऽदेशप्रभुर्नगरमैक्षत शस्त्रदक्षः ।
साक्षात् तदीयसुषमा सुखमानिनाय चेतस्ततः स्तुतिमिमामचिरादुवाच ॥ ७६ ॥

यत्र चित्ररचना वचनानां गोचरात् पटुधियामतिशेते ।
वेश्मनां धनवतां सुरलोके लाघवं विदधतां विभवेन ॥ ७७ ॥
मानवाऽऽश्रयभवाच्छिवसिद्धिर्जायते दिवमतीत्य समस्ताम् ।
इत्यवेत्य किमु पौरगृहाणि तुङ्गतामधिगतानि विशिष्य ॥ ७८ ॥
अत्र कायमपहाय विवस्त्री भोगभाग् भवति वस्त्रमिवाङ्गी ।
यात्वतः सहतनुर्मनुजन्मेऽतीव यत्र भवनेष्वतिवृद्धिः ॥ ७९ ॥
भास्करोपलदलैर्जनिताग्नेस्तापतो न जडिमा शिशिरेऽपि ।
स्पर्द्धया शशिमणिक्षरदम्भः संभवान्नहि शुचावपि तापः ॥ ८० ॥
उग्रतद्युतिमता हिमवृत्तिर्नाश्यते भुवनमत्र विकाश्य ।
सौधपङ्क्तिरदसीयशरण्या जायते तपसि चान्द्रपयोभिः ॥ ८१ ॥
सान्द्रचान्द्रविगलज्जलधारा धौतशुद्धकलधौतसवर्णा ।
साङ्गगाङ्गपयसा ह्यभिषिक्तं पुण्यमेव कुरुते परलोकम् ॥ ८२ ॥
निर्दहद्भिरगुरुद्रुमसारैर्वान्तधूमकृतमण्डलयोगात् ।
आतपत्रमिव यत्र बभासे राजतां प्रकटयन् नगराणाम् ॥ ८३ ॥
यत्नयद्धशशिरत्नपयोभिर्जन्यते यदभिषेकविवेकः ।
बालसूर्यमहसा सहसा स्यात् सांप्रतं बहलचन्दनचर्चा ॥ ८४ ॥
केतनैर्धनिनिकेतनलक्ष्मीचेतनैः पुरपुरन्दरमूर्त्तेः ।
सा प्रकीर्णककला सकलाऽपि दर्श्यतेऽपवनभूपवनेन ॥ ८५ ॥
भूभृतां भवनपङ्क्तिनिवेशः पेशलश्रियमधादिह मौलेः ।
तत्र रत्नभुवि बिम्बिततारामालया भवति मौक्तिकमाला ॥ ८६ ॥

श्रद्धया परिणतः स्वन एव तत्त्वविद्वचनभावितचेताः ।
अक्षनामिह सदाऽऽर्हतवर्गो दक्षनां वहति तत्त्वविमर्शौ ॥ ८७ ॥
चेतसा वहति कश्चन रत्याऽऽशाम्बरीं स्थितिमलीनविवोधः ।
तस्य न व्यवहृतिष्वनुरागो निश्चितः शिवपदेऽपि निवासः ॥ ८८ ॥
पात्रसंगतिभृतः सुमनोभिः शोभितां दधति काञ्चन वृत्तिम् ।
श्राविका इह लता इव दिव्या मोहनाय खलु वैश्रमणानाम् ॥ ८९ ॥
वर्द्धमानविभुनिर्वृतिधाम्नः सूपदेशरमणाचलनाम्नः ।
संभवन्ति वनितास्तदपापाः केऽपि सन्ति पुरुषा न च पापाः ॥ ९० ॥

प्रायोऽवधयद् धृतविहारविहारकर्मा-
ऽऽदेशाधिपोऽप्ययनता जनताः समस्ताः ।
स्थित्वा दिनानि कतिचिद् विहितोपचाराः
स्फारानुरागवनिता ध्वनितार्थसाराः ॥ ९१ ॥

पुण्यपुण्यकथनैरथ नैःस्वं सज्जनस्य स निरस्य चिरस्य ।
स्पष्टतामुपगते पथि मार्गे प्रातरेव विजहार विहारात् ॥ ९२ ॥
तीर्थराजमभिवन्दितुकामे प्रस्थिते दिनकरोऽभ्युदयेन ।
निस्तमस्त्वमुदयेन सहासिग्राह साहसवतामिह मुख्ये ॥ ९३ ॥
भानुमालिनि समीयुषि नृणां हृत्पयोरुहविकाशिनि पूर्वम् ।
पूर्वदिक्पथविलम्बिनि शैले तारका कुसुमलिप्सुतयैव ॥ ९४ ॥
रत्नपङ्क्तिपतयालु हि रत्नं न्यायमेवमधिगत्य जगत्याः ।
संयुयोज सहसा दिनरत्ने तारकामणिगणः प्रणयेन ॥ ९५ ॥
स्पर्द्धयाऽन्यहरितां समवेक्ष्य तारकाऽऽभरणभारमिवैन्द्री ।
दिक्स्वराज्यमदजातरुषेवाऽऽत्मप्रसूर्यनयनं समधत्त ॥ ९६ ॥
तेजसामतिशयं न सहन्ते हन्त ! केऽपि मलिनोऽन्यजनस्य ।
आत्मरूपं तदमर्षसमर्थस्तारका करवसूनि विवस्वान् ॥ ९७ ॥
उद्यते घुतिभरेऽहिमरश्मेस्तारकेक्षणनिमीलनमासीत् ।
लज्जया सकलदिग्युवतीनामिन्दुना सह विलासवतीनाम् ॥ ९८ ॥
मन्दतामुपययौ विपमेषुश्चित्रमत्र विजयिन्यपि रागे ।
तारकेक्षणकटाक्षविमोक्षान्मङ्क्षु दिग्युवतिभिश्च विरेमे ॥ ९९ ॥
कल्पयत्तमकरोत्तनु तारासंकरेण सह चन्द्रिकयेव ।
पालभानुरत एव तदीयपद्मयोनिपां न विपर्ययेऽद्भुतलेदाः ॥ १०० ॥
व्यानशे नु तमसा निविडेन सर्वतो भुवनमस्तविवेकम् ।
विष्णुपदमुदितं रविरूपं तद्विनाशनकृते ह्यनुरूपम् ॥ १०१ ॥
विभ्रमोऽयमिविधा इव तारा रेजिरे दिवि यथाप्रचारा ।
केवलागमजन्मरूपेऽभ्युद्गते दिनकरेऽस्तमयुक्ताः ॥ १०२ ॥

मूकतामुदवहद् यदुलूकोऽप्यत्रिहंगजरुचिरापं विरामम् ।
मन्दतां खलु बृहस्पतिरागात् तत्सिताम्बररुचिः समुदीतः ॥ १०३ ॥
त्याजिता जगति मैथुनवृत्तिर्दिव्यकर्मणि नृणामनुयोगः ।
कारितो भगवता प्रभयैवाध्वाऽप्यदर्शि भुवि नाभिभुवेव ॥ १०४ ॥
लक्षदक्षजनभाजिनि वादे निर्जिते न हि दिवाऽपि निवादे ।
निष्करेऽपि करसङ्करपूर्णे सोऽध्युवास नगरे सविलासः ॥ १०५ ॥
लौकिकस्तदितरोऽपि च मार्गः सूत्रतश्चलति सार्थबलेन ।
आहतः प्रथमतो वृषभाद्यैः सर्वदर्शिपरपारगतैस्तैः ॥ १०६ ॥
इत्यवेत्य हृदि चैत्यनिनंसुर्निश्चयात् स वृषभप्रभुयोगम् ।
सार्थमुख्यमवलम्ब्य शिवाय शैलशालिनि पथि प्रचचाल ॥ १०७ ॥
दुर्णयैरविनयं प्रतिपन्नैर्भीमदुर्गविषयप्रतिबद्धैः ।
स्खल्यमानगतिरध्वनि नीचैर्नातिचारमतिरेष बभूव ॥ १०८ ॥
वाडवेयनिवहैः सपरीतः प्रीतनिर्भयमना वनमध्ये ।
नैगमानुसरणेन रणेन निर्जितारिरचलद् बलशाली ॥ १०९ ॥
पार्वतीं श्रियमसावुपभुञ्जन् निर्ययौ गिरिशताऽऽक्रमणेन ।
पृष्ठतश्च पुरतः सह मंत्री दुर्गमोक्षपथलीनमनस्कः ॥ ११० ॥
केवलादुपनता उपदेशात् पार्वतीयमनुजा ननु जाल्माः ।
तेन केचन कृताः सुकृतार्था दर्शने विषमबाणजयेन ॥ १११ ॥
विक्रमी क्रमपरिक्रमलील्या तीर्थराजगिरिपार्श्वमुपेत्य ।
तस्थिवानकपटः पटकुट्यां प्रस्फुटं सितपटः स नियोगी ॥ ११२ ॥
श्रीसंकेतनिकेतनं गिरिवरः सम्मेतनामा जिनै-
र्निर्वाणेन पवित्रितः परिचितः श्रीचक्रचक्राऽऽश्रमैः ।
सं संप्राप्तमहोदयश्रियमयं प्रीत्या नियोगीशिता
दर्शं दर्शमिह स्वमेव मनसा मेने पुनस्तादृशम् ॥ ११३ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते उदयश्रीकलिते पूर्वोपत्तनविहारनगरश्रीचिन्तामणिपार्श्वप्रभुस्तुतिवर्णननामा द्वादशः सर्गः ॥



## त्रयोदशः सर्गः ।

### अथ श्रीसम्मेताचलतीर्थराजवर्णनम् ।

मुक्ताचलाद् घटभुवाऽऽचरिता पवित्रीभूता हरिद् विमलशैलबलात् प्रतीची ।
पुण्योत्तरा ककुबसौ स्फुटिकाचलेन सम्मेदतीर्थगिरिणा गुरुणा दिगैन्द्री ॥ १ ॥

उच्चैर्वरारकखरैर्नखरप्रमाणे रेजे गिरिः स्वशिखरैरखरैः क्वचिच ।
रूप्यान् कपिद्धवलितैर्वलितैश्च तिर्यग् द्वेधा तथा कपिशताकुलितैर्द्विधाऽपि ॥ २ ॥

आपूरयन् दशदिशोऽपवनप्रसून-
श्रेणीगलत्परिमलैरमलैर्गिरीशः ।
दुर्गाऽऽश्रयेण फणिनां गणिनां वरेण्यैः
सेव्योऽस्य किं न महिमा स हिमाद्रिभाव्यः ॥ ३ ॥

उत्फुल्लमल्लितरुभिः कृतशेखरश्रीर्वेणुध्वनिध्वनितगोपवधूविलासः ।
नृत्यत्कलापिकुलपक्षरुचा विचित्रश्चित्राय सैष पुरुषोत्तमजैश्चरित्रैः ॥ ४ ॥

उद्दामरप्रसुतयाऽद्भुतया स साधुर्माधुर्यधुर्यरसनिर्झरणैर्नितान्तम् ।
सान्द्रद्रुमावलिकृताऽऽतपवारणेन भूभृत्पदं तदुचितं रुचितं विशेषैः ॥ ५ ॥

आपूर्यमाणविवरैर्मरुता स वंशैरापाद्य वाद्यगणनादमिहाऽऽदरेण ।
चारुप्रकारसहकारलताः स तालं सर्वत्र नर्त्तयति तीर्थसमर्थताये ॥ ६ ॥

शत्रुञ्जयस्फुटिकभूधररैवताद्रिसम्मेदकार्बुदगिरिप्रमुखैश्च दुर्गैः ।
सार्थत्रिकं विजयते भरते प्रसिद्धमेकातपत्रमिहमार्हतधर्मराज्यम् ॥ ७ ॥

एकस्य निर्वृतिपदं यदि तीर्थभर्त्तुः स्यादुन्नयन्त इति लोकहिताय नाम्ना ।
विंशाऽर्हता मयि महोदयलब्धिधामसम्मेदकस्तदुचितः किल वैजयन्तः ॥ ८ ॥

पञ्चापि मेरुगिरयः किल पञ्चतीर्थाऽऽकृत्या स्थिता भरतवर्षजमध्यखण्डे ।
धैर्यक्रियां समुपदेष्टुमिवाधिमैभ्या वेलावलोच्छलितनीरनिधेर्जडस्य ॥ ९ ॥

सर्वाङ्गपुण्यभरलिप्सुतया सुरेशस्तीर्थेशजन्मसमये कृतपञ्चरूपः ।
तच्छिक्षयेव कलधौतगिरिस्तथाऽस्यात् श्रीपञ्चतीर्थतनुभिर्ननु भिन्नपापः ॥ १० ॥

अस्मिन् गिरावधिगते जिनभावनेन पुण्यस्य विंशतिविशोपवलं फलं स्यात् ।
आवेदितुं किमिति विंशतिशृङ्गभङ्गीमङ्गीचकार शिवकारणमेष शैलः ॥ ११ ॥

दानं फलैरविरलैः कलयन् नगानां तीव्राऽऽतपात् कृततपा इव साक्षमालः ।
शैलाश्रयेण घटयन् बहुधातुदाढ्यं श्रीभूधरो धरति किं न गिरीशलीलाम् ? ॥ १२ ॥

प्रख्यापयन्निरिव काञ्चनसिद्धिवीथीमभ्युन्नतैः सशिखरैः समहौषधीकैः ।
प्रीत्या गतागतकरैरमरैर्निषेव्यः किं स्यान्न निर्वृतिपदं विविधाऽऽगमार्थैः ? ॥ १३ ॥

योगैरनेकफलदैर्विहितेष्टसिद्धिर्गम्यो न जातु करिभिर्हरिभिर्बलाऽऽढ्यैः ।
ध्यायन्निव स्थिरतया किमपि स्वरूपं स ब्रह्मलीनमनसां न कथं निरीक्ष्यः ? ॥ १४ ॥

जन्माभिषेकपयसाऽस्मि पवित्रितो यैरांजीवितं भवतु तत्सविधे स्थितिर्मे ।
देवाद्रिरित्यवगमात् कृतपञ्चमूर्त्तिः श्रीतीर्थपञ्चकमिषाद् भरतेऽध्यवात्सीत् ॥ १५ ॥
तीर्थङ्करा हि परिनिर्वृतिमीयुरस्मिन् शैले ततः कनकचैत्यवति प्रसिद्धाः ।
भावं विभावयति नित्यपयोदवृष्टिः सृष्टिं विनाऽभ्रपटलस्य किमद्रिमूर्ध्नि ? ॥ १६ ॥
जन्मोत्सवेऽहमभवं भगवन्निषेवी कल्याणके जिनपनिर्वृतिजेऽपि तादृग् ।
भूयासमित्यभिनिविष्टमनास्सुमेरुः सम्मेदशैलवपुषा भरते समेतः ॥ १७ ॥
प्रोत्साहयन् पथि नटानवटातिगत्याऽदृष्टप्रपातहृतपातकसन्निपातः ।
वादित्रचित्ररवसंभवपूर्वमद्रिं वीर्याङ्कटैः सहभटैरभजन्नियोगी ॥ १८ ॥
आरुह्य गुह्यकशतैः कृतसन्निधानस्तं तीर्थशैलमनुशीलितशालिशीलः ।
लीलावती जननिगीतयशा ववन्दे सङ्घेन चैत्यमनघेन समं समश्री ॥ १९ ॥
अभ्यर्च्य चन्दनसिताभ्रककुङ्कुमाद्यैर्मोघन्मनोरथपथप्रतिपन्नसिद्ध्या ।
जाग्रत्प्रभावजिनभावनयाऽविलम्बं स न्यस्तबिम्बनयनः स्तुतिमाततान ॥ २० ॥

जयति भगवाञ्श्रीनाभेयप्रभुर्जगदीश्वर-
स्त्रिभुवनमहासाम्राज्यश्रीवशीकरणं परम् ।
कनकरुचिकृत् सर्वाऽऽशासु स्वभासुरदीप्तिभि-
रभिनवरविध्वान्तध्वंसश्रियां समुपाश्रयः ॥ २१ ॥
भजत रजतक्ष्माभृत्पीठे तमासनभासिनं
शिवमिव जना दुर्गाकारस्फुरद्भिरिभूषितम् ।
स्फुटतरजटाभारस्फारत्विपादविजिस्वरं
श्रमणगणभृत्पूज्यं सिद्धं शिवालयसंगतम् ॥ २२ ॥
विजयमनिशं देयान्नाम्ना जिनोऽजितयार्चितः
परमपदभाक् शर्म वासौ द्रुमैरतिविद्रुमे ।
विजयिविजयासूनुर्नूनं सुवर्णसवर्णभा-
स्त्रिजगति परं साम्यं मूर्त्यान्तरं परिभावयन् ॥ २३ ॥
कमनदमनः सौभाग्येन ध्रुवं जनरञ्जन-
स्त्रिदशवनिताभावोल्लासी प्रभुर्ननु शम्भवः ।
सकलकलया शुद्धः सिद्धः सम्मेतगिरौ गुरु-
र्गुरुरिव दिवः शास्ताशास्ताः प्रपूरयतां हि नः ॥ २४ ॥
अनुदिनमयं भूयाद् भूत्यै जिनो ह्यभिनन्दनः
समितिमतिमान् मानी मानं जयन्नपिशाश्वतः ।
विबुधललनालालित्येनाप्यविक्रियमानसः
शिरसि रसिकः सिद्धेः सिद्धः समेतमहीभृतः ॥ २५ ॥
उदयशिखरि श्रीमन्मौलौ यथा दिवसप्रभु-
र्भवति कमलाऽऽनन्दी वन्दीकृतप्रभुनाऽद्भुतः ।

सुमतिभगवाँस्तद्वच्छैले समेत्य समेतके
समगमदयं शैवं रूपं शिवाय स नः सना ॥ २६ ॥
दिशतु विशदां पद्मां पद्मप्रभः प्रभुरार्हतीं
गिरिशिरसि यः सिद्धावस्थाऽवलम्बितबिम्बभाक् ।
दधदिव दृढं मूर्त्तं मूर्त्तौ विमुक्तिनितम्बिनी
हृदयनिहितं रागं सद्योऽभ्युदितरविच्छविः ॥ २७ ॥
विपदवनिजच्छेदः पार्श्वे सुपार्श्वजिनेश्वरः
स्वतनुमहसां भारैस्तारैर्जितोऽग्रदिनेश्वरः ।
जगति जयताद् यस्यावश्यं स्तुतीस्त्रिदशेश्वरः
प्रमुदितमना भक्त्याऽऽसक्तः करोति विकस्वरः ॥ २८ ॥
कुवलयमुदे चन्द्रश्चन्द्रप्रभः प्रभयाऽऽभयः
शशधरसुधासारस्फारप्रकाशियशोमयः ।
मनसि लसितं शुक्लध्यानं बहिः प्रथयन्निव
शिव इव सितः शैवं दैवं प्रकाशयतां मयि ॥ २९ ॥
सुविधिरधिकं श्रेयः पुष्णात्वनुष्णरुचिप्रभः
स भवनमुमामज्ञादीनां विधेः सविधे स्थितेः ।
निरवधिसुखस्थानं दानं ददद् भुवि वार्षिकं
सपदि भगवान् यो दारिद्र्यं जहार कृपादृशा ॥ ३० ॥
मनसि वचसि स्वाङ्गे शैत्यं परं कथयन्नथ
शिवपथरथः सेव्यो भव्यैः कृतार्थमनोरथः ।
दशमभगवान् गीतः प्रीतैः सुरैर्जिनशीतलः
सफलयतु मे वारं वारं मनीषितमञ्जसा ॥ ३१ ॥
उपशमवधूमेयान् श्रेयान् जिनोऽञ्जनवर्जितः
शिवनवरमाऽऽश्लेषी मौलौ समेतमहागिरेः ।
दनुजमनुजैः पूज्यो नाम्ना ह्यनन्तचतुष्टयी
परिणतमयी भावं धेयान्मयीहितपूरणः ॥ ३२ ॥
वसुपरिवृतस्त्रेधा मेधा दधातु मनस्विनां
जिनपतिरतिप्रीत्या पूज्यः सुरैर्वसुपूज्यभूः ।
शिव इव जने नित्यं मृत्युं जयन् विजयप्रदः
शिवपरिणतेश्चम्पाऽकम्पापरैरपुनाद् पदैः ॥ ३३ ॥
विमलभगवान् पुष्यान्मुख्यां सुखश्रियमाश्रयः
प्रशमविनयादीनां दीनाङ्गिनां कमलाऽऽकरः ।
करणविजयी दाता भक्ताऽऽत्मनां नृपसंपदः
पदसलिलजन्यासाच्छैलं समेतमिहोद्यपन् ॥ ३४ ॥

जनयतु सुखाऽऽनन्त्यं नित्यं जिनोऽत्र जिनोऽङ्गिनां
शिवपदमिति ध्यानाच्छैलं समेतमुपेयुषाम् ।
शिवमनुनयन् नाम्नाऽनन्तः सतां विषमेष्वपि
नटनघटनाकौशल्येनार्चितस्त्रिदशैरपि ॥ ३५ ॥
हृदयकमले श्रद्धाभाजां जिनो रमतां मतां
रतिमनुनयन् दिष्ट्याऽभीष्टप्रधानविधानतः ।
उपवनघटारम्ये सम्यक् समेतगिरौ शिवं
समधिगतवान् धर्मः शर्मश्रियाः समुपाश्रयः ॥ ३६ ॥
अशिवनिवहे शान्तिः कान्तिर्भृशं जगतीभुवा-
मरिपरिभवे भ्रान्तिः क्षान्तिः परस्परसङ्गरे ।
भुवि भगवतो यस्यावश्यं बभूव जनुर्दिने
दिशतु स शिवं सिद्धः शान्तिः समेतनगोत्तमे ॥ ३७ ॥
अतिशयरमापात्रं गात्रं यदीयमदीप्यत
शिखरिणि ययौ यो निर्वाणं समेदकसंज्ञिते ।
तदनुभजनासक्ते व्यक्ते दधन्मधुरश्रियं
स जयतु जिनः काकुत्स्थाख्यस्तथाऽपरकुन्थुवाक् ॥ ३८ ॥
शमरसपयोराशिर्नूनं विकाशि(सि)तसन्मना
अरजिनवरः कुर्याद् धुर्यां महोदयसंगतिम् ।
विजितसमरः कर्मारीणां भरेऽपि स सङ्गरः
करपरिकरव्यासाद्भासाऽऽश्रयीकृतभास्करः ॥ ३९ ॥
सुकृतविलसद्वल्लीफुल्लक्रियासु पयोधरः
करिहरिभयव्यापत्पल्लीविनाशनपोद्धुरः ।
दिशतु भगवान् मल्लिर्मल्लीप्रसूनलसद्यशाः
रसपरवशा मुक्तिमाणप्रियासुरतेर्दशाः ॥ ४० ॥
यदुकुलनभोभास्वान् भूयान्मुदे मुनिसुव्रतः
क्षपितदुरितस्तीव्रैर्भूरिव्रतैर्घनभूघनः ।
अमृतसमये मूर्द्धन्यद्रेः संमेतवरस्य यः
स्थिरतरतनुर्वैडूर्यस्य श्रियं चिरमाश्रयत् ॥ ४१ ॥
दमितविषयः खेदं दद्यादवद्यविभेदनः
प्रशमितजगद्दोषः श्रीमान् नमिर्जिनपुङ्गवः ।
परमपदवीलाभे यस्याऽचलस्थलमन्वभूत्
सुरसमुदये वेदीभावं समेतमहाह्वयम् ॥ ४२ ॥
विजयकमलां यस्याऽऽदेशाल्ललौ कमलापतिः
परिणयमिषाद् राजीमत्या विबोधविधायिनः ।

जयतु स शिवानन्दी योगीश्वरः परभूतिमान्
यदुकुलरविर्नेमिः सिद्धिं गतः खलु रैवते ॥ ४३ ॥
पार्श्वः शाश्वतबोधनेन भगवान् भास्वानिवाभ्युद्यतः
शैलेश्या शिवमाप तापरहितः शैले समेताभिधे ।
तीर्थं तत् प्रथितं मुनीन्द्रकथितं जातं सुजातं नृणां
पुण्यायेव महोदयाय सुदृशां योगाय भोगाय च ॥ ४४ ॥
माहात्म्यं निजगाद यस्य भगवाँस्तीर्थस्य तीर्थङ्करः
सिद्धार्थक्षितिपाङ्गजः शिवपुरीसार्थस्य वै पार्थिवः ।
श्रीपापापुरि सिद्धिभाक् स जयताच्छैलः समेतश्चिरं
छत्रीभूत इव क्षमातललसल्लक्ष्म्याः प्रभासंभृतः ॥ ४५ ॥
स्थित्वा दिनानि कतिचित् तदुपत्यकायां कुर्वन् मरुत्तरुरिवार्थिसमर्थभक्तिम् ।
निर्णीय शुद्धपथमप्रसुमार्गनीतिं भीतिं विमुच्य पुनराववृते स धीमान् ॥ ४६ ॥
भूभृत्प्रकम्पनरतिः कटकाधिवासैः कूटस्थितिं पथि निरस्य जने स्ववृत्त्या ।
धृत्वाऽध्वना नरवरान् स बले नवादाख्यानं विशिष्टनगरं स समाप दिष्ट्या ॥ ४७ ॥
तीर्थाभिवन्दनबलाद् भरते दधानः सामान्यमन्यनिजयोर्विजयोऽर्जितश्रीः ।
सान्द्रद्रुमाद्रिनिवहाद् बहिराजगाम सूरः स सूर इव वार्दलवारवृन्दात् ॥ ४८ ॥
निर्माय निर्मलयशा बहुसङ्घभक्तेरत्यादरं गतदरः स दरीनिवासे ।
वीरार्हतोऽपि परिनिर्वृतिभूप्रदेशे पादद्वयीनमनतः प्रमदं प्रपेदे ॥ ४९ ॥
सारं सुरासुरनिखातसरः प्रतीर्य पारंगतः सरभसा बहुबाहुवीर्यः ।
स्वं तीर्णदुस्तरभवार्णवमेव मेने सेनेश्वरः स्वरसभास्वरशाश्वतश्रीः ॥ ५० ॥
अन्तर्वणं गणपतिः परितः परीतं वैभाररत्नविपुलोदयहेमशैलैः ।
संप्राप्य राजगृहसीम्नि स तीर्थभक्तस्तीर्थाधिनाथमुनिसुव्रतमाननाम ॥ ५१ ॥
उल्लासिपद्मवनमण्डनकुण्डनीरैर्निर्लोष्णनामनुभवन्नवनीविभागे ।
वीराभिवन्दनसमागतचन्द्रसूर्योग्रपानां कथामथितथां सरसादमंस्त ॥ ५२ ॥
श्रीशालिभद्रभवनोत्तमधर्मसौधैर्योधैस्तथा गुणशिलावनजातबोधैः ।
अद्यापि यत्र जिनशासनराज्यमेकच्छत्रं पवित्रमनसां प्रतिभाति चित्रम् ॥ ५३ ॥
व्यालोक्य राजगृहनामपुरं त्रिलोक्यां दूरस्थिता अपि जिनैः कथिताः पदार्थाः ।
साक्षात्कृता इव कथं द्रढयन्ति बाढं पुंसां भवन्ति च तमः खलु ते कृतार्थाः ॥५४॥
पावापुरं पुरत एव महत्तदीयं गत्वा नियोगपतिरर्चितवीरमूर्त्तिः ।
नाभेयचैत्यगृहमेत्य कृतप्रणामस्तत्याज मानमचलं समलङ्कृताङ्गः ॥ ५५ ॥
नत्वेन्द्रभूतिपदयोः सदयोदयश्रीर्युग्मं पदे विमलकेवलबोधसिद्धेः ।
श्रीगौतमोत्तमगुरुप्रतिबिम्बरत्नं तुष्टाव भावधनमः शमशुद्धवृत्तेः ॥ ५६ ॥
राजन्नं गणपतिः सुरराजां चन्द्रनीरणरणः शुभमूर्त्तिः ।
वस्तुररसरमपाऽनुगमैव शाश्वती विजयभृद्गणलक्ष्मीः ॥ ५७ ॥

मन्द्रगर्जितकलाऽपि यदीया देशनादिविषया गुरुरेवं ।
मङ्गलाय भवति श्रुतिमार्गसंगता व्यसनवारणकर्मा ॥ ५८ ॥
साधुसिन्धुरमुखस्य निनादश्चूलिकादिपदभूर्गणभर्त्तुः ।
सागरान् विजयते स्म विशेषैरङ्गसाधनमयैः शुभवृत्त्या ॥ ५९ ॥
दुर्द्धरान्तररिपोर्विजयोऽस्माभिश्रितः समितिशूरनराणाम् ।
पूर्वसाधुगणभृद्गजराजां बृंहितं महितमेव महीन्द्रैः ॥ ६० ॥
कालिकाङ्गजमतिर्वमति स्म मानमाश्रयति संगतिरागम् ।
सिन्धुजा गणपतेर्ध्वनितेनाप्यूर्मिकाप्रणयिनीव रसेन ॥ ६१ ॥
गन्धहस्तिललितान्यतिशेते यः प्रवृत्तिनिहितप्रभयैव ।
तेन कश्चरणगौरवरील्या स्पर्द्धते गणभृताऽनिभृताऽऽत्मा ॥ ६२ ॥
सिंहजध्वनिधरप्रतिशब्दं यो जिगाय दृढधैर्यवचोभिः ।
सर्वतोऽभ्युदितपद्ममहागोनिर्व्यवायविधिसाधननिष्ठः ॥ ६३ ॥
यः करेऽतिशयभृन्महिमानं मानवैरभिमतं निदधाति ।
विश्रुतः श्रुतिधरेषु गुरुत्वे भद्रजातिकलभाधिकृताङ्गः ॥ ६४ ॥
आनने स्फुरति यस्य महेभाऽऽकार एव सुभगो ध्वनिसौम्यः ।
मानसे परिणताऽऽकृतियुक्तिः साहसाय निहिताऽप्यसुभाजाम् ॥ ६५ ॥
पार्श्वमेव सततं धरते यस्तेजसां विहितविघ्नविनाशम् ।
वर्धमानवरशासनमुख्यैः स्पष्टयन् नयनमङ्गलकारी ॥ ६६ ॥
सामजन्म नियतं वदनेऽस्य सौष्ठवं सकललोकहिताय ।
निश्चितैव समरोचितलक्ष्मीर्भासतेऽनुपदवृत्तविधाने ॥ ६७ ॥
दुर्द्विजिह्ववशतः सकलोर्व्यां निश्चिताऽऽदरभृता पिलवृत्त्या ।
यद् विशुद्धचरणद्वयभाजा स्थीयते बहुसुखेन वृषेण ॥ ६८ ॥
यो द्विमातृतनयप्रमुवीरख्यातिमत्र निदधे पदवृत्त्या ।
ब्रह्मचारिविधिबान्धवधर्मा पोषयन् जगति काञ्चनसिद्धिम् ॥ ६९ ॥
याऽङ्गजास्य रुचिराशु जिगाय शुद्धधौतकलधौतविभासम् ।
चित्रभानुशरणं प्रतिपन्नं प्राकृतयाऽभ्युदयने भुवि शुद्ध्यै ॥ ७० ॥
इष्टतास्य न शिवाङ्कनिवेशात् क्वापि वस्तुनि परे परमार्थात् ।
ब्रह्मणा परिचितेऽप्युचिता तच्छाम्भवी प्रतिकृतिर्गणनाथे ॥ ७१ ॥
आनने प्रसरति स्फुटमेव दानवृत्तिरतिशायितयाऽस्य ।
सेव्यते प्रतिदिनं नृपनागैः पार्श्वमुल्लसितशाश्वतवृद्ध्यै ॥ ७२ ॥
सर्वदैव परमोदकभावो मानसेऽभिरमते गणभर्त्तुः ।
पीनदीर्घयुगबाहुसमृद्धेरादिमङ्गलमिह प्रणिधानम् ॥ ७३ ॥
स्थाप्यते सुकृतकर्मसुसिद्ध्यै यः पुरः सुरवरैरपि नाम्ना ।
लब्धिरूपपयसां भरतोऽब्धिरेष कस्य गणभृन्न नमस्यः ॥ ७४ ॥

जीयते यदमुना यमुनाभितेजसाङ्कनिहितेन हितेन ।
श्रीसुदर्शनभृताऽप्यनुगम्ये सम्यगेव गणभृत्पदमस्मिन् ॥ ७५ ॥
ब्रह्मणादिमतया प्रथितोऽपि न्यस्यतेऽन्त्यपद एव कुमारः ।
येन साधुचरणेन स वज्रः ख्यातिमान् असुरदुर्गजयेन ॥ ७६ ॥
स्थूलभद्रयदनेन धरायां प्रापि निर्मलयशः शशलक्ष्म्या ।
प्राग् यथासमयमर्थविशेषसाधनेन शुचिशीलधनेन ॥ ७७ ॥
वाञ्छितार्थकरणेन सुरद्रोरप्यधः स्थितिकृता गणराजा ।
भिक्षवो विभवभोगविलासं निन्यिरे सुमनसामभिमान्याः ॥ ७८ ॥
सा विनायकमुपेत्य शिवश्रीर्जायते नवसुधाऽशनसौख्यम् ।
एतमेव घनलब्धिसमेतं निश्चयाद् गणपतिं प्रणिदध्मः ॥ ७९ ॥
येऽसिन्दूरसुपादपुर्मधुरिमा नित्यं गवां यान् पुनः
शिश्रायातिशयेन यैश्च सुषमा संपादिता वैभवे ।
येभ्यो दानमहोहितं च विहितं देवैः सदेवानुगैः
येभ्यो ब्रह्मरुचिः सतां समुचिता जज्ञे व्यवायव्ययात् ॥ ८० ॥
येषामद्भुतमहोदयः प्रतिपदं सिद्धिः स्वहस्ते परा
शुद्धानेकफला मुखे परिणता येषु स्थिरा श्रीर्वरात् ।
सर्वाऽऽशापरिपूरकैर्गणधरैः प्राप्तप्रतिष्ठैरिति
तैर्योगं प्रभुभिः स्वचेतसि शिशौ भक्ते कृपा शाश्वती ॥ ८१ ॥
यैर्नैन्द्रभूतिरयमित्युपलक्षितोऽपि तेषामपि त्वमिह साधयसे हृदीष्टम् ।
दत्त्वेन्द्रभूतिपदमुत्तमगौतमेशः मूर्ते बुधेऽपि महतां समदृष्टिरेव ॥ ८२ ॥
स्तुत्याऽऽदिमं गणधरं बहुधोपलभ्याऽऽदेशप्रभुः पुनरमुष्य स देशभाजम् ।
मूर्तिं सुधर्मगणभृत्सुदीक्ष्य साक्षात् पूजापुरस्सरमदःस्तुतिमप्युवाच ॥ ८३ ॥
यदीयकीर्तिः प्रससार गौरी गौरीकृताऽशेषपदार्थरूपा ।
भूपालमौलिष्वपि माल्यवेषाऽऽश्रयेण नित्याऽऽहृतसौमनस्या ॥ ८४ ॥
गौरीमुखे वाग् धृतशुद्धवर्णावासस्यकान्तिस्तत एव गौरी ।
गौरीयशःश्रीस्तत एव देहे भासा स गौरीमय एव देवः ॥ ८५ ॥
गौरीगुरोश्चापि महेश्वरस्य विमुच्य पार्श्वं गुणरागवश्या ।
नास्य प्रमोदज्झति सन्निधानं गौरी तु देवी सुधियां निधानम् ॥ ८६ ॥
गौर्याः पुनः स्याद् भुवि गौरवाप्तिर्न गौरवं संनिधिमेत्यसौ चेत् ।
स्याद् भारती नात्र कृतावतारा न भारती अप्यनया तदाप्ये ॥ ८७ ॥
औदार्यमापार्यमपि प्रपद्य स्वनामनामाऽऽत्मताऽन्वितार्थम् ।
परोपकारादिवरेण्यपुण्यैश्चकार पुण्यं स्वमिहोपयुज्य ॥ ८८ ॥
प्रागल्भ्यमभ्यस्यति भाग्यलभ्यं विस्तारमन्यत्र सुपात्रभावैः ।
निधाय मूर्तं गुरुपादमूले परमपोषमतिमाऽऽनुकूल्ये ॥ ८९ ॥

1 A °रतीन्द्र ।

माधुर्यमेषामुचितं सुवृत्तप्रवृत्तिभाजां गुरुराजराजम् ।
मनोवचःकायनिकाययोगात् त्रैलोक्यतः पिण्डितमेकदेशे ॥ ९० ॥
धैर्यस्थितेरक्षयसेवधिर्यः स्वर्णाचलं चालयति स्म वादे ।
प्रदक्षिणा लक्षणतस्ततोऽमी ग्रहास्तमारुध्य दिवि भ्रमन्ति ॥ ९१ ॥
शोभातिलोभादिव सद्गुणानां यः संग्रही कार्मुकवत् सुवंश्यः ।
सौरस्य जाग्रन्महसो निदानं शुद्धोपजापं तनुतेऽवदानम् ॥ ९२ ॥
यदङ्गरङ्गत्तरदीप्तिजालैर्जितप्रवालैरभितो विशालैः ।
कृते सुवर्णस्य रुचामवर्णे वह्नौ ह्रियाऽह्नाय तदा विवेश ॥ ९३ ॥
व्रतेन गौरी रमणस्वभावं दधौ द्विजाधीशकलामलीके ।
गौरीगुरोः कान्तिमधश्चकार गणेश्वरः स्वीययशःप्रशस्त्या ॥ ९४ ॥
जीयादयं श्रीगणभृत् सुधर्मा यत्कीर्तिगानेन सभा सुधर्मा ।
मनोवचःकायमलं निरस्य सदस्यलोकं कुरुते स्ववश्यम् ॥ ९५ ॥
एवं सात्त्विकत्वेन विधिस्वरूपं प्राकाशयः श्रीपुरुषोत्तमोऽपि ।
मत्याऽथमत्याऽखिलमन्युभावं बिभर्षि विश्वानि शिवानुरागी ॥ ९६ ॥
गणाग्रणीस्त्वं जिनवर्धमानपट्टस्य भूषाकरणेन पूषा ।
द्विधाऽपि पूर्वातिशये समाशाभरप्रकाशाद् वपुषाऽपि धत्से ॥ ९७ ॥
त्वं पञ्चमोऽपि प्रथमः परम्परागणेशिनां विश्वपरोपकारिणाम् ।
दृष्टोऽद्य दृष्ट्या धवलस्वभावतस्तद्ध्यानतः स्वः प्रभुणा सदानतः ॥ ९८ ॥
एवं श्रीजिनशासनोन्नतिमधाद् पात्रापवित्राशयाऽऽ-
देशेशो ह्युपदेशपेशलतया मोहव्यपोहं सृजन् ।
तुष्टः पत्तनवासिनागरजनैः श्रीवर्धमानोद्भव-
स्थानं तीर्थमथ प्रणन्तुमचिराद्भ्युद्यतः संयतः ॥ ९९ ॥
प्राप्ते क्षत्रियकुण्डनाम्नि नगरे कृत्वोपवासं तदाऽऽ-
देशस्य प्रभुरासमागधमहातीर्थेशवन्द्यक्रमः ।
चक्री वाचलदुर्गमार्गे विषयान्तश्चारचारुः पुनः
श्रीवीरप्रतिपत्तिनिश्चितमना रेजे शुभे राजितः ॥ १०० ॥
यत् सेव्यते तु मधुराज्यपुरं सुरार्च्यं तीर्थं जिनेन्द्रजननाञ्जननाथवर्ण्यम् ।
तेनाऽऽश्रितेह मधुरा मधुराज्यभेत्रा जज्ञे प्रिया समधुरा मरुतां पुरस्य ॥ १०१ ॥
एवं देवनिषेवणं प्रणयिना सर्वाऽपि पूर्वा हरित्
तीर्थानामभिवन्दनेन सुदृशा संभाविता तेन सा ।
संप्राप्तेन महोदयश्रियमहो पुण्यैरगण्यैस्तत-
श्चातुर्मास्यविधानतः पुनरपि श्रीपत्तनान्तःस्थितम् ॥ १०२ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते पद्यश्रीसंकलिते
श्रीतीर्थराजगिरिश्रीगौतमस्वामिश्रीसुधर्मस्वामिस्तुतिवर्णनो नाम त्रयोदशः सर्गः ॥

॥ श्रीरस्तु ॥

# परिशिष्टम् ।

## महोपाध्यायश्रीमेघविजयगणिरचितं श्रीतपगच्छपट्टावलीसूत्रवृत्त्यनुसन्धानम् ।

ऐं वीतरागाय नमः ।

अथ प्राक्तनपट्टावलीसूत्रान्तसंहितगाथात्रयव्याख्या यथा—

श्रीविजयसेणसूरी पट्टे गुणसट्ठिमे सुगुणसिट्ठे ।
वाए साहिसहाए जेण दुविओ स जिणधम्मो ॥ १ ॥

सिरि त्ति—श्रीमज्जगद्गुरुविरुदधारि-महाराजाधिराजपातिसाहिश्रीअकब्बरप्रबोधकारि-श्रीहीरविजयसूरिपट्टे एकोनषष्टितमे श्रीविजयसेनसूरिर्भगवान् जज्ञे । किंविशिष्टः ? 'सुगुणसिट्ठे' सुगुणैः श्रेष्ठः—गुणाः स्वभावजा ज्ञानादयो विभावजा औदार्यादयस्तैरतिशयेन प्रशस्यो वर्णनीयः । येन स्वामिना वादे उपस्थिते श्रीसाहिसभायां स जगत्प्रसिद्धो जिनधर्मः प्रमाणयुक्त्या साधितोऽर्हतां शासनं च स्थापितम् ।

तस्य च प्रभोर्विक्रमात् १६०४ वर्षे नारदपुर्यां वृद्धोपकेशशाखीयचोपागोत्रभृत् सा० कमा तद्भार्या कोडिमा, तयोर्गृहे जन्म । सं० १६१३ वर्षे मात्रा पित्रा च सह श्रीविजयदानसूरिहस्ते श्रीहीरविजयसूरिनिश्रया दीक्षा । सं० १६२६ पंन्यासपदम्, सं० १६२८ वर्षे फाल्गुनसितसप्तम्यां श्रीअहम्मदावादनगरे उपाध्यायपददानपूर्वकं आचार्यपदम् । सं० १६५२ वर्षे भाद्रसितैकादश्यां तिथौ भट्टारकपदम् । ते च श्रीगुरवो भट्टारकत्वं विंशतिवर्षाणि प्रपाल्य श्रीस्तम्भतीर्थे सं० १६७१ वर्षे ज्येष्ठशुक्लैकादश्यां स्वर्गमलञ्चक्रुः । एतच्चरितं विस्तरतो विजयप्रशस्तिकाव्याद् बोध्यम् । किञ्चिल्लिख्यते—

श्रीगुरुभिः सं० १६३२ वर्षे चांपानेरदुर्गे समहोत्सवमनेकार्हत्प्रतिमाशतानां प्रतिष्ठा कृता । तथा सूरतिबन्दिरे श्रीचिन्तामणिप्रमुखानेकसभ्यभट्टसमक्षं श्रीभूषणनामा दिगम्बराचार्यो निर्जितः । तथा 'नमो दुर्वाररागादि' इत्यस्य श्रीयोगशास्त्राद्यश्लोकस्य सप्तशतान्यर्थाः सूक्तावल्यादिग्रन्थाश्च कृताः । राजनगरे श्रीखानखानाऽऽह्वयनवाबपर्षदि जैनधर्मव्यवस्थापनेन जयश्रीरलङ्कृता । तत्रैव च श्रीविद्याविजयनाम्नां स्वपदयोग्यं शिष्यं प्रव्राज्य श्रीसाहिबदेकारिता प्रतिष्ठा चक्रे । ततो गन्धारबन्दिरे सा० इन्द्रजीकारितां प्रतिष्ठां श्रीवीरस्य कृत्वा स्तम्भतीर्थे श्रीघनाईकारितां प्रतिष्ठां विधाय श्रीसूरयस्तत्रैव चतुर्मासीं चक्रुः ।

अत्रान्तरे श्रीहीरविजयसूरिषु विद्यमानेष्वपि एषां श्रीसूरीणां गुणातिशयाऽऽकर्णनादुत्कण्ठाभाजः पातिसाहिश्रीअकब्बरसम्राजः श्रीसूरीन् लाभपुरे आकार्य श्रीहीरसूरीश्वरकुशलप्रश्नपूर्वं धर्मवार्त्तां पप्रच्छुः । तत्र गुरुवचश्चातुर्यरञ्जिता मुख्यशिष्यकृताष्टावधानदर्शनाच्चमत्कृताः साहिपादाः श्रीगुरूणां बहुगौरवं चक्रुः । तत्र केनचिद् भट्टेन 'अमी जैना जगदीश्वरं सूर्यं गङ्गां च न मन्यन्ते' इत्युक्ते श्रीसाहिसमक्षं पञ्चशतभट्टैः सार्द्धं श्रीगुरुभिर्विवादः प्रारेभे ।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्मेति मीमांसकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्त्तेति नैयायिकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ १ ॥

इति श्रीहनुमन्नाटकोक्तेन । तथा—

अधाम धाम धामेदं वयमेव स्वचेतसि । यस्याऽऽत्तव्यसने प्राप्ते त्यजामो भोजनोदके ॥ २ ॥

तथा गङ्गोदकं विना नास्माकं देवप्रतिष्ठा स्यात् । इत्यादियुक्तिभिस्तदा भट्टा विजितास्तेन श्रीसाहिपादास्सप्रसादाः श्रीगुरूणां कालीसरस्वती इति बिरुदं दत्तवन्तः । गो[1]-वृषे[2]-महिष-महिषीवध-मृतद्रव्याऽऽदान-बन्धरोध-निषेधरूपपङ्जल्पस्फुरन्मानं श्रीसाहिभिर्दत्वा लाभपुरेऽत्याग्रहेण चतुर्मासिकद्वयं श्रीगुरूणां कारितम्, ततः श्रीहीरविजयसूरिभिरबाधावशाद् विजयसेनमुखान्निर्यामनामिच्छद्भिराकारिताः । श्रीसाहिपादानापृच्छ्य श्रीसूरयश्चतुर्मासिकमध्येऽपि चलन्तः पट्टननगरं प्रापुः । तदा सं० १६५२ वर्षे भाद्रसितैकादश्यां प्रातर्जातं श्रीहीरसूरीश्वरस्वर्गगमनं श्रुत्वा तत्रैव तस्थुः, भट्टारकत्वेन सुमुहूर्त्ते समहोत्सवं श्रीगुरुपट्टमलञ्चक्रुः । ततः क्रमेण श्रीगुरुभिः स्तम्भतीर्थे राजिआ-वजिआऽऽख्यकारितां श्रीचिन्तामणिपार्श्वबिम्बप्रतिष्ठां कृत्वा सं० १६५४ वर्षे अहम्मदावादे भूमध्यान्निर्गतश्रीविजयचिन्तामणिपार्श्वबिम्बस्य शकन्दरपुरे स्थापना चक्रे, तथाऽहम्मदपुरे सा० मोटाकारिता तथा सा० लहुयाऽऽख्यकारिता च प्रतिष्ठा विदधे । समये च लाडोलिग्रामे सूरिमन्त्रध्यानं विधाय श्रीस्तम्भतीर्थे श्रीविजयदेवसूरीणां सूरिपदं दत्त्वा पत्तननगरे तेषां गणानुज्ञां नन्दिं श्रीगुरवः कृतवन्तः, तत्र च पञ्चसप्तत्याधिकशुलार्हत्प्रतिमानां पदप्रतिष्ठाञ्च । तदा सङ्घपतिर्हेमराजसङ्घो मरुस्थलीतः श्रीशत्रुञ्जयतीर्थयात्रार्थं व्रजन्, सप्तशताश्ववारकटककद्वादशशतशकटसंयुक्तः श्रीगुरूँस्तत्राभ्येत्य वन्दितवान्, स्वर्णरूप्यमुद्राभिरर्चितवाँश्च । तद्दर्शनाद् राजनगरवास्तव्य-सा० सूराऽऽख्यः श्रीगुरूपदेशेन मार्गे प्रतिश्राद्धगृहं महमुदिकालम्भनिकां कुर्वन् श्रीअर्बुदाचल-श्रीराणपुरादितीर्थेषु मरुदेशेऽनेकनगरसङ्घेन समं तीर्थयात्रां विधाय निर्विघ्नं प्रत्यागत्य श्रीगुरून् ननाम । तद्वत्सरे श्राद्धैर्लक्षमहमुदिकाव्ययश्चक्रे । तदनु श्रीगुरवो राजधान्यपुरे प्रतिष्ठाद्वयम्, पुनः स्तम्भतीर्थे प्रतिष्ठात्रयम्, गन्धारबन्दिरे प्रतिष्ठाद्वयं विधाय सुराष्ट्रदेशे विजह्रुः । तत्र चतुर्मासकत्रयं प्रतिष्ठाष्टकं श्रीसिद्धाचल-श्रीगिरनारप्रमुखमहातीर्थयात्रास्तत्रत्यसङ्घेन सह कृतवन्तः । ततो हल्लारदेशे नवानगरे चतुर्मासीं विधाय तद्देशपतिः जामराजोऽपि धर्मोपदेशैः श्रीगुरुभिः प्रमोदितः । इत्येवं नानादेशविहारैः भूतलं पवित्रयन्तः श्रीगुरवोऽनेकजीवान् प्रत्यबुधन्, पञ्चाशज्जिनप्रतिष्ठाश्चक्रुः । अष्टौ वाचकपदानि, सार्धशतं पण्डितपदानि ददुः । द्विसहस्रयतिपरिवृताः सवाईश्रीहीरविजयसूरय इति बिरुदं बिभ्राणाः श्रीविजयसेनसूरयः प्रवचनं बहूनि वर्षाणि प्रभावयामासुः ।

प्रान्ते च विजयदेवसूरीश्वरान् विश्वलनगरे च सङ्घाऽऽग्रहात् समनुज्ञाप्य स्वयं श्रीस्तम्भतीर्थे सर्वातिचाराऽऽलोचनपूर्वं कृतानशनाः समाधिना सं० १६७१ वर्षे ज्येष्ठसितैकादश्यां श्रीगुरवः स्वर्गमलञ्चक्रुः । तत्राऽद्यापि बहुवित्तव्ययेन सङ्घकारितं स्तूपं जयतीति गाथार्थः ॥ १ ॥

तप्पट्टे सूरसमो सङ्कितमो विजयदेवसूरिगुरू ।
साहिजहांगीरेणं महातवस्सि त्ति वद्द····हो····॥ २ ॥

तप्पट्टे इति—तत्पट्टे प्रकाशकत्वात् सूर्यसमः तपस्तेजसा षष्टीतमः श्रीविजयदेवसूरिनाम्ना गुरुर्बभूव । किंविशिष्टः ? साहिना पातिसाहिना श्रीअकब्बरभूपालजन्मना श्रीजहांगीरेण महातपा इति कृतनामा इत्यनेनाऽऽस्य सूरेः तपःप्राधान्यं व्यञ्जितम् । अनेकशः पष्ठाष्टमादिभि····विंशतिस्थानकाद्युत्कृष्टतपश्चरणात् यावज्जीव-

मुपवासाऽऽचाम्ल-निर्विकृतिक-स्थानभक्तपानरूपनित्यतपःकरणात् तस्य च श्रमोर्विक्रमात् सं० १६३४ वर्षे ईडरदुर्गे वृद्धोपकेश-ओछवालगोत्रभृत् सान्थिरा तद्भार्या रूपा, तयोर्गृहे जन्म । सं० १६४३ वर्षे जनन्या सह दीक्षा । सं० १६५५ वर्षे पण्डितपदम् । सं० १६५६ वर्षे वैशाखशुक्लषष्ठ्यां उपाध्यायपदपूर्वमाचार्यपदम् । सं० १६७१ वर्षे भट्टारकपदम् । सं० १७१३ वर्षे श्रीऊनानगरे आषाढदेवशयनैकादश्यां प्रातःकालेऽष्टमभक्तेन स्वर्गप्राप्तिः । तत्र स्तूपं भणशाली-रायचन्द्रकारितं श्रीहीरगुरोर्मुख्यस्तूपपार्श्वे समुद्रतीरेऽस्ति । तस्य भगवतो द्वितीयस्वर्गोत्तरदिशि देवत्वेनावतरणम् । इष्टदेवेन निजाराधकानामुक्तं श्रद्धेयमेव । यतो नाम्ना देवः सर्वत्र नरदेवमान्यः । प्रकृत्याऽपि देवपट्टादर्शोदिषु देवाऽऽराधकः देवसांनिध्यवान् । अतस्तदुक्तस्य युक्तत्वात् । अत एव देवशयनैकादश्यां देववेलायां स्वर्गतिरिति ।

एतच्चरितं खरतरमतीय-श्रीवाचनाचार्य-श्रीवल्लभकृत-विजयदेवमाहात्म्यकाव्यात् तथा मत्कृतमाघसमस्यारूप-देवानन्दकाव्याद् ज्ञेयम् । समासस्त्वेवम्—

श्रीमतामेतेषां गुरूणां सूरिपदोत्सवे स्तम्भतीर्थेऽनेकदेश-ग्राम-नगरसङ्घाऽऽह्वानेन सप्तशतीमुनिपरिवृतान् विजयसेनसूरीन् बहुधा विज्ञप्य स्ववेश्मनि द्विधाऽपि विमानश्रियं दधाने सुपर्वशोभाभासुरे प्रचण्डमण्डपाडम्बरेण विचित्रराजवादित्रनिर्घोषैर्नभसि गर्जति सति सर्वसङ्घभोजनपरिधापनादिभिः श्रीमल्लनामश्रेष्ठिना स्वभार्यासोमान्वितेन दशसहस्ररूप्यकव्ययेन महती प्रभावना चक्रे । सुमुहूर्ते श्रीगुरुभिः सूरिपदं प्रदाय श्रीविजयदेवसूरिरिति नाम संदधे । तदा पुनस्तदुत्सवनिमित्तमेवाष्टसहस्ररूप्यकव्ययेन ठक्कर-कीकाऽऽख्येन प्रतिष्ठा कारिता पुनश्चैषां सं० १६५८ वर्षे परीक्षकसहस्रवीरेण पञ्चसहस्रमहमुदिकाव्ययेन कर्णोत्सवपत्तने गणानुज्ञानन्दिमहो महान् जज्ञे । तथा श्रीविजयदेवसूरिभिः प्रतिष्ठाद्वयं राजनगरे, प्रतिष्ठाचतुष्टयं पत्तने, प्रतिष्ठात्रयं स्तम्भतीर्थे सातिशय-महोत्सवपूर्वं चक्रे ।

इडादुर्गे च कल्याणमल्लराजप्रबोधनात् तत्सभास्थितान् भट्टान् पं० श्रीपद्मसागरगणिनामाऽऽस्फालनेन जापयित्वा राजाऽऽग्रहात् तत्र चतुर्मासी चक्रे । तदा च तत्रत्यगिरिशिरसि प्रभूतदेशात् श्रीऋषभदेवबिम्बं नवीनचैत्योद्धारपूर्वं आर्द्रेन्दीवरे महदाडम्बरेण प्रतिष्ठायां श्रीगुरुभ्य एव प्रतिष्ठाप्य स्थापयामास ।

अत्रान्तरे सं० १६७३ वर्षे कतिचिदुपाध्यायैः संभूय कतिचिल्लोकान् स्वायत्तीकृत्य आग्रहवशात् स्वकीयमतं प्रादुष्कृतम् । तन्मतवासिते च स्वकीये भार्ये द्वे सा० देवचन्द्रेण स्तम्भतीर्थवास्तव्येन मृत्वा दैवीभूतेन सम्मतमाद्यजेमनवारायां पाषाणवृष्ट्या संतर्क्य 'अहं भवत्योर्भर्त्ता देवचन्द्रः सप्तदशभिर्देवैः श्रीविजयदेवसूरीणां सांनिध्यं कुर्वाणोऽस्मि, तद्भवतीभ्यामप्ययमेव पारम्पर्याऽऽगतः श्रीगुरुः सेव्यः' इत्युक्त्वा श्रीगुरुभक्ते कृते इत्यद्भुतदेवसांनिध्यादनेकशो लोकाः कुमतानि परितत्यजुः ।

तथा घोघाऽऽख्यबन्दिरवास्तव्य-सा० सोमजीनाम्ना स्वकुटुम्बं पूर्वं धर्माद् भ्रष्टं देवीभूय प्रागुक्तवत् प्रबोध्य श्रीगुरोर्भक्तं चक्रे । तदतिशयश्रवणान्महाराज-श्रीजहांगीरपातिसाहिः श्रीसूरीन् सबहुमानमाकार्य श्रीमण्डपाचले श्रीगुरुभिः समं धर्मप्रश्नादिवार्तां विदधे । तदा सुधासमानदेशनाश्रवणेन तपस्तेजोमयमूर्तिदर्शनेन भृशं तुष्टः श्रीसाहिराजोऽयं गुरुर्महातपा इति बिरुदं दत्तवान् । तदनुलब्धयशोवादाः श्रीसूरिपादाः श्रीसाहिना स्वयमनुज्ञापितस्वकीयदक्षिणीयमहावाद्यवादनादिभिः श्रीचन्द्रपालादिसमग्रश्राद्धैः सोत्सवं प्रतिपदं सुवर्णमुद्राणां न्युञ्छनेषु क्रियमाणेषु भट्ट-चारणादिमार्गणानां मार्गे वाञ्छितदानेन सहर्षमुपाश्रये पादावधारणं चक्रुः ।

किं बहुना ! श्रीजिनप्रवचनप्रासादे कलशाऽऽरोपणमिदमद्भुतं प्रासीसरत् । ततो गूर्जरत्रां पवित्रीकृत्य सुराष्ट्रदेशे द्वीपबन्दिरे फिरङ्गीपातिसाहिप्रदत्तव्याख्यानानुज्ञापूर्वं चतुर्मासकद्वयम्, हल्लारदेशे तद्देशस्वामिभक्त्यनुरोधेन कतिचिद्दिनावस्थानं च कृत्वा स्तम्भतीर्थे चतुर्मासकं तस्थुः । अत्रान्तरे उपाध्यायपाक्षिकैः सागरपाक्षिकैश्च क्रियमाणं जनव्युद्ग्राहमवेक्ष्य श्रीसाचल्यां श्रीगुरवो ध्यानं विदधुः । मासत्रयं ध्यानेनाधिकप्रवृद्धधामानः परेषां द्रष्टुमपि दुष्प्रेक्षास्तत्रैव प्रतिष्ठाद्वयं चतुर्मासीं कृत्वा इलादुर्गे प्रतिष्ठात्रयं सङ्घेन समं तद्देशतीर्थयात्रां कृत्वा क्रमेण आरासणे मूलनायकप्रतिष्ठां चक्रुः । कालान्तरे च इलादुर्गेऽभ्येत्य सा० सहजूकृतमहोत्सवेन सं० १६८१ वर्षे वैशाखसितषष्ठ्यां श्रीविजयसिंहसूरीन् यौवराज्येऽस्थापयत् । तदा तद्देशभूपेन रणमल्लचोकीनामकं गिरिशृङ्गं गुरूपदेशाभव्यचैत्यस्थापनाय सङ्घस्य प्रसादीकृतम् । ततः सीरोह्यां चतुर्मासककरणादनु जाबालपुरे समागत्य श्रीगुरुराजाः सादडीग्रामे गीतार्थाननुज्ञाप्य लुम्पाकपाक्षिकान् श्रीउदयपुरे राणाश्रीकर्णसिंहसमक्षं सभायां वादपूर्वं निरुत्तरान् कारयामासुः । ततः श्रीतपागच्छप्रौढिर्महती बभूव । तत्र च योधपुराधीश्वर-श्रीगजसिंहराजस्य मुख्यमान्य-श्रीजयमल्लनाम्ना जालोरदुर्गे प्रतिष्ठात्रयमन्तराऽन्तरा चतुर्मासकत्रयं श्रीगुरूणामत्याग्रहेण कारयित्वा स्वर्णगिरौ चैत्यं स्वकारितं प्रतिष्ठापयामास ।

सं०-१६८४ वर्षे सहस्रशो रूप्यकव्ययेन श्रीविजयसिंहसूरीणां गणानुज्ञानन्दिमहोत्सवः कारितः । तदनु मेडतानगरे प्रतिष्ठाद्वयं विधाय बन्ध्यनगरे चतुर्मासीस्थितान् श्रीगुरून् श्रुत्वा तन्माहात्म्यश्रवणेन तुष्टो राणाश्रीजगत्सिंहजीनामा श्रीवरकाणकपार्श्वयात्रार्थाऽऽगतानां लोकानां पोषदशम्यां शुल्कमोचनं चक्रे । पारणायां च त्वरितमेव स्वप्रधानझाला-श्रीकल्याणजीकस्य सन्मुखप्रेषणेन श्रीगुरून् दर्शनोत्कण्ठया चाऽऽजुहाव ।

ततः श्रीगुरुपादाः खमणोरग्रामे प्रतिष्ठाद्वयम्, देवकुले चैकप्रतिष्ठाम्, ततो नाडीग्रामे आघाटपुरे चेति प्रतिष्ठापञ्चकं कृत्वा श्रीउदयपुरे राणाजी[ सहित ]सङ्घाग्रहाच्चतुर्मासीं विदधुस्तदा गुरूपदेशाद् राणाश्रीजगत्सिंहजीनाम्ना चतुरो जल्पाः प्रपन्नाः । तद् यथा—

[ १ ] अद्यप्रभृति पीछोला-उदयसागरनामसरोद्वये मीनमहणजालनिषेधः ।

[ २ ] राज्याभिषेकदिने गुरुवारे जीवाऽमारिः कार्या ।

[ ३ ] जन्ममासे भाद्रपदे च जीवहिंसा न कार्या ।

[ ४ ] मचिन्ददुर्गे श्रीकुम्भाराणाकारितजिनचैत्योद्धारश्च कार्यः । ततोऽत्यन्तं श्रीजिनशासनोन्नतिर्जज्ञे ।

तदनुक्रमेण गूर्जरधरायां द्वि-त्रीणि वर्षाणि विहृत्य सुराष्ट्रदेशेन सिद्धाचल-रैवतकादितीर्थयात्रां महाग्रगमनेन कुर्वाणाः परमगुरवः प्रतिष्ठात्रयं चतुर्मासीद्वयं च कृत्वा हल्लारदेशे नवानगरे तद्देशेश्वरलाखाभिधानजामप्रतिबोधनेन चतुर्मासीं कृतवन्तः ।

अत्रान्तरे दक्षिणप्रदेशे कर्णाटदेशे श्रीबीजापुरादिनगरसङ्घेन श्रीपूज्यपादानामानयनविज्ञप्तये प्रेषिता मदेभ्या भाद्री चतुरानाम्नी श्रीगुरून् ववन्दे । प्रतिष्ठां चैकां महोत्सवेन कारयामास । वर्षचतुष्टयं यत्र श्रीगुरवो विहरन्ति स्म तत्र तत्रान्वियाय ।

ततो दाक्षिणात्यसङ्घात्याग्रहात् पुनर्गूर्जरत्रायामभ्येत्य कतिचिद्वर्षाणि तत्र स्थित्वा दक्षिणदेशं विजिहीर्षवः प्रभुपादाः सूरतिबन्दिरे समहोत्सवं समाजग्मुः ।

तत्र च सं० १६८७ वत्सरे समुत्पन्नसागरमतवासितैः श्राद्धैः स्वमतस्य श्रीगुरुमुखात् सत्यमिदमिति कथनाय बहुद्रव्यव्ययेन मीरमोजाऽऽख्यमुपं स्ववशीकृत्य स्वपाक्षिकगीतार्थानाहूय वादः प्रारब्धः । श्रीगुरुभिरपि सागरमतप्ररूपणा उत्सूत्रत्वान्न सत्येति प्रामाणिकपर्षदि राजसमक्षं गीतार्थाननुज्ञाप्य वादेन सागरपाक्षिकाँस्तिरस्कारयाञ्चक्रिरे । ततो लब्धजयवादाः श्रीगुरुपादाः सप्रसादाऽवनिनायकेन सम्मानिताः परे च पराभवं प्रापिता इति ।

ततो दक्षिणदेशे विहृतवन्तः, तत्र बीजापुरेऽन्तरा चतुर्मासकचतुष्टयीं चक्रुः । श्रीगुरुपादतपोमाहात्म्यप्रसरद्यशःपरिमलानुभवेन तत्रत्यपातिसाहि-श्रीईदलसाहिर्दर्शनोत्सुकः श्रीगुरूनाहूय सबहुमानं धर्मस्वरूपं पप्रच्छ । ततः श्रीगुरूणां वचःपीयूषमासाद्य मायन्मना यावद् गुरुस्थिति गोवधनिषेधं प्रपन्नवान्, जिनप्रवचनमानन्दमेदुरं स्फातिमायाति स्म ।

पारणायां च बीजापुराद्यनेकनगरसङ्घेनान्वीयमानाः श्रीगुरवः पयोधितटनिकटस्थ-श्रीकरहेडपार्श्वनाथ-श्रीकलिकुण्डपार्श्वनाथादितीर्थयात्रां कुर्वाणास्तत्तद्देशराजप्रभृतीन् लोकान् धर्मे स्थापयाञ्चक्रुः ।

ततश्चावरङ्गावादनगरे चतुर्मासकमेकं सोत्सवं विधाय खानदेशे बर्हानपुरे चतुर्मासकद्वयं सान्तरं चक्रुः । ततः प्रचलच्च सङ्घेन सह श्रीअन्तरीकपार्श्व-श्रीमाणिक्यस्वामितीर्थयात्रां सृजन्तस्तिलिङ्गदेशे गलकुण्डप्रत्यासन्नभाग्यनगरे पातिसाहि-श्रीकुतबसाहिना सङ्गत्य तत्सभायां तैलङ्गभटान् वादे विजित्य जैनधर्मव्यवस्थापनया श्रीपातिसाहिं प्रमोदितवन्तस्तद्दत्तानुज्ञाश्च तत्रार्हत्प्रतिमानामनेकासां प्रतिष्ठां चक्रुः । एवं च विविधोत्सवैः प्रतिपदं राजप्रबोधादिना सर्वत्र दक्षिणमण्डले विहृत्य प्रतिष्ठासप्तकं चतुर्मासकसप्तकं च कृत्वा श्रीमज्जिनशासनमयं तन्मण्डलं विदधुः ।

बीजापुरे सा० देवचन्द्रेण प्रथमं प्रतिष्ठा कारिता । तत्र षोडशसहस्ररूप्यकव्ययश्चक्रे । द्वितीयस्यां प्रतिष्ठायामष्टसहस्रीरूप्यकव्ययश्चक्रे । तत्र पं० श्रीवीरविजयानां सं० १७०१ वर्षे पंन्यासपदं ददुः । दक्षिणमण्डले च सर्वाण्यशीतिपण्डितपदानि, एकमुपाध्यायपदं च प्रसादितवन्तः । ततः पुनः सङ्घाऽऽग्रहाद् गूर्जरात्रां श्रीगुरवः पवित्रीचक्रुः ।

इतश्च श्रीविजयसिंहसूरयोऽपि गुर्वाज्ञया मरु-मेवात-मेदपाटादौ विहृत्य राणाश्रीजगत्सिंहजीनामानं प्रबोध्य विशेषतो जीवदयासु देशस्थितजैनतीर्थेषु सप्तदशभेदपूजाकरणोपदेशादिभिश्च दृढीकृत्य श्रीजिनधर्मं प्रभावयन्तः श्रीमरुदेशे एकां प्रतिष्ठां मेडतानगरे आगरावास्तव्यपातिशाहिरसव्यवहारिमुख्य-सा० हीरानन्दभार्यया श्राविकामनीत्यभिधानवत्या कारितां निर्माय श्रीकृष्णदुर्गे राठोडवंशीय-श्रीरूपसिंहमहाराजस्य महामात्य-श्रीरायचन्द्रनाम्नोऽभ्यर्थनया चतुर्मासकं चक्रुः । तत्पारणके सहस्रशो रूप्यकव्ययेन मन्त्रिणा कारितप्रतिष्ठायां बहूनि बिम्बानि जिनानां महोत्सवेन प्रत्यतिष्ठिपन् ।

तत्रैवाऽऽगरापुरादागतेन श्रीमहेशदास-मन्त्रिश्रीसुगुणाऽऽह्वयेन बहुवित्तव्ययपूर्वं सुवर्णमुद्रार्चादिना महोत्सवेन श्रीगुरवो वन्दिताः । ततः क्रमान्मालपुर-बुन्दी-चत(व)लेरपार्श्वप्रमुखतीर्थयात्रां संघेन सह कुर्वन्तः श्रीजयतारणनगरे चतुर्मासीं विधाय श्रीस्वर्णगिरौ यात्रां कृत्वा क्रमात् श्रीअहम्मदावादनगरे श्रीगुरून् नेमुः ।

तैः मिलिताः श्रीपरमगुरवः सं० १७०५ वर्षे इलादुर्गे पत्तनवास्तव्य-श्रा० श्रीवन्त्या कारितां प्रतिष्ठां विदधुः । तत्र चतुःषष्टिविबुधेन्द्रान् देवसूरय इव स्थापयामासुः । क्रमेण पत्तन-राजनगरादिषु चतुर्मासककरणेन लोकाननुगृह्य स्तम्भतीर्थे चतुर्मास्यां तस्थुः ।

श्रीविजयसिंहसूरीणां सं० १६४४ वर्षे जन्म, सं० १६५४ व्रतम्, सं० १६७२ वाचकपदम्, सं० १६८१ सूरिपदम् । ते सूरयः परमक्षमापात्रं यावज्जीवं गुर्वाज्ञाराधका विवेकाद्यनेकगुणोदधयोऽष्टाविंशति-वर्षाणि सूरिपदं प्रपाल्य, सर्वातिचारालोचनपूर्वमनशनेन सं० १७०८ वर्षे अहम्मदावादपार्श्वस्थनवीनपुरे आषाढसितद्वितीयायां श्रीविजयसिंहसूरयः स्वर्जग्मुः ।

तत्श्रवणाद् भृशं दुःखार्त्ताः परमगुरवोऽपि संसारानित्यतां विमृश्य क्रमाद् विगतशोका बभूवुः ।

एषां च श्रीगुरूणां तपस्तेजसा देवकृतसांनिध्येन च निरन्तरायतया भूयांसस्तीर्थयात्रासङ्घाः साडम्बराः श्रीशत्रुञ्जयादितीर्थेषु जीर्णोद्धाराश्च जाताः । देवसांनिध्यं चैषां स्फुटमेव मण्डपाचलप्रस्थाने कमाऽऽख्यपरमारस्य भूतार्त्तस्य लोकानां मारणात् पित्रा निगडितस्य श्रीगुरुवासक्षेपेण सज्जीभवनात्, एवं राजनगरवास्तव्यवणिक्-पुत्रोऽपि सप्तवर्षाणि प्राग्ग्रथिलः सोऽपि, तथा मेडतानगरे सा० धानाऽऽख्यक्षेत्रपालाधिष्ठितश्च वासक्षेपात् प्रादुर्बभूव । एवं चैते भगवन्तः स्वविहारेण गूर्जरात्रा-सुराष्ट्रा-हल्लार-मरु मेदपाट-लाट-दक्षिणदेशेषु धर्मबीजानि वपन्तः तद्देशसुभिक्षादिभवनेन स्फुटतरयुगप्रधानातिशयाः शुद्धाशयाश्चिरं भरतभुवि प्रवचनं प्रभावयामासुः । समये च निजायुःशेषं वर्षचतुष्टयं ज्ञात्वा सं० १७१० वर्षे स्वपट्टे श्रीवैशाखसितदशम्यां श्रीविजयप्रभसूरीन् स्थापयामासुः । तद्व्यतिकरस्त्वनन्तरमेव वक्ष्यते—

"सिरिविजयदेवपट्टे पढमं जाओ गुरू विजयसीहो ।
सग्गगए तम्मि गुरू पट्टे विजयप्पहो सूरी" ॥ १ ॥ इति गाथार्थः ।

तप्पट्टंबुजपहकरसरिसो हरिसेण दरिसणिज्जमुहो ।
इगसट्ठियमोऽणुवमो विजयप्पहणाम गच्छगुरू ॥ ३ ॥

व्याख्या — तप्पट्टंबुज इति — तस्य श्रीविजयदेवगुरोः पट्टलक्षणेऽम्बुजे प्रकाशकत्वात् प्रभाकरः सूर्यः, तत्सदृशस्तुल्यः । एकोत्तरषष्ठितमः श्रीविजयप्रभनामा गच्छगुरुर्भगवान् सूरिर्विजयवान् । किंविशिष्टः ? हरिसेण — हर्षेण दर्शनीयमुखः । इत्यनेनास्य नित्यप्रसन्नता ख्यापिता । तया चास्य भगवतो भाग्यविस्फूर्जितस्य नित्योदयत्वं प्रशान्तत्वं च ध्वन्यते । कुपाक्षिकानां प्रत्यर्थिनां मनसाऽप्येतस्य गुरोरहितचिन्तकानां स्वत एव नाशात्; घनस्याभ्युदये शरभानामिव । यद्वा हरिः कृष्णः सेनायां यस्य स हरिसेनो देवानामिन्द्रः ।

"सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभी रणश्रीः" इति नैषधीयकाव्यवचनात् । एवं हरिशब्दस्य तुरग-गजाद्यर्थे हरिसेना नृपाः । अहीनामर्थे धरणेन्द्राद्या नागकुमारा ग्राह्याः । तेषामपि दर्शनीयं मुखं यस्य स तथा । इत्यत्रार्थे त्रिजगद्वन्द्यत्वं भगवतो दर्शितम् । पुनः किंविशिष्टः ? अनुपमोऽतुल्यः । एतेनास्य सूरेः सर्वसूरिभ्यो धैर्यौदार्य-गाम्भीर्य-सौभाग्यता-निस्तन्द्रता-पाण्डित्य-क्षमादिगुणानामधिकता ज्ञाप्यते ।

अस्य च प्रभोः सं० १६७७ वर्षे माघसित-एकादश्यां श्रीकच्छदेशे श्रीमनोहरपुरे वृद्धोपकेशवंश-घोषा-गोत्रभृत् सा० सिवगण-भार्याभानुमतीगृहे जन्म । सं० १६८६ वर्षे दीक्षा । सं० १७०१ वर्षे पंन्यासपदम् । सं० १७१० वर्षे आचार्यपदम् । सं० १७१३ वर्षे भट्टारकपदम् । ते चामी श्रीगुरुपादाः साम्प्रतमपि प्रत्यक्ष-लक्ष्यलक्षप्रभावा नितरां ज्ञानाभ्यास-पुस्तकशोधन-अनेकभव्यजनविबोधनविविधक्रियामग्नमनसो दुस्तपतपन-निर्जीर्यमाणतमसो गच्छस्य स्मारण-वारणादिविधाभिरधिकश्रियं पुष्णन्तः सत्यसन्धाः कल्पान्तेऽप्यविचलवाचः स्वप्रतिपन्नगच्छगीतार्थसङ्घाभ्युदयदायिनो विजयन्ते । एतेषां महिमाऽतिमहान्, न कार्त्स्न्येन वर्णयितुं शक्यः । तथाऽपि किञ्चिदुच्यते —

एकस्मिन् समये परमगुरुतपागच्छाधिपाः श्रीविजयदेवसूरयः स्वामिनो जिनशासनपट्टपरम्पराप्रवाहं प्रवर्तयितुं श्रीसूरिमन्त्रेण ध्यानं चक्रुः; यदस्मदग्रे कः शासनाधिनाथो भविष्यतीति । तदा च प्रवर्धमानतपःपूर्वकजपावधानाऽऽकृष्टो मन्त्राधिराजाधिष्ठायको देवोऽभ्येत्य नमस्कुर्वन् विज्ञप्तवान्—"स्वामिन्! अद्यापि शासनाधिनेतुर्न दीक्षाऽपि प्रवृत्ता, भगवतामपि युष्माकं चिरायुष्कता, तत् किमनया चिन्तयाऽधुना? समये स्वल्पेनाऽपि तपसाऽहं स्मरणीयः, तदैवाऽऽगत्य वक्ष्यामि" इत्युक्त्वा सुरस्तिरोबभूव ।

कालान्तरे च स्वकीयपट्टे श्रीजिनशासनस्वामिस्थापनाऽवसरं निभाल्य श्रीगन्धपुरे गत्वा श्रीगुरुभिर्ध्यानं प्रारेभे । तदा तत्क्षणादेव मन्त्राधिष्ठायको देवः समेत्य निवेदितवान्—"हे स्वामिनः! पण्डितः श्रीवीरविजयनामा सौभाग्यनिधिः विद्यामहोदधिः निरुपधिः चारित्रगुणानामवधिः, अजिह्मब्रह्मविधिः विधिरिव सा····भुवनोपकारकः, केशव इव पुरुषोत्तमः, नरकान्तकृत् कुमोदकः, शिव इव महाव्रती, कामासहनो दक्षजातिस्निग्धः, त्रिदशगुरुरिव निर्मलमतिः, सुमनसामग्रणीरसौ स्वपट्टे स्थाप्यः, यतोऽस्याग्रे महिमा हि मानाधिको भावी" इत्युक्त्वा देवे तिरोभूते श्रीगुरुभिः गाम्भीर्यशालिभिः जनप्रत्ययनाय बहिः शकुनगवेषणादावपि देवोक्तानुवादे दृढीभूते सति राजनगरात् त्वरिताभ्यागत-सा० रत्न-प्रमुखराजनगरीयसङ्घाग्रहेण श्रीस्तम्भतीर्थ-श्रीपत्तन-श्रीसूरतिबन्दिरप्रमुखानेकदेश-ग्राम-नगरसमक्षं श्रीमहावीरस्वामिसातिशयमूर्तेः पुरः पत्रिकाविलोकनाऽऽनन्दितसकललोके श्रीगन्धारबन्दिरे विक्रमात् सं० १७१० वर्षे वैशाखसितदशम्यां भृगुवासरे पुष्यनक्षत्रे सुमुहूर्ते रङ्गदुच्चमण्डपाऽखण्डशोभादिदृक्षयेवाभ्यागतेषु मुक्तानिकरदम्भान्नक्षत्रपक्षेषु वाद्यमानविविधाऽऽतोद्याडम्बरेण गर्जयत्स्वम्बरे दह्यमानासु दुर्जनमनःशकटिकास्विव धूपघटिकासु रसेनाऽऽपूर्यमाणासु सर्वसङ्घप्रमोदतटिकास्विव घटिकासु प्रसरद्यशोभिरिव पुष्पप्रकरैराकीर्णे भूवलये श्रीवीरपट्टाधिपत्यज्ञापनायेव श्रीवीरजिनभवनाऽऽसन्नदेशे मण्डपेऽभ्यागत्य पं० श्रीवीरविजयाः श्रीविजयदेवसूरिभिः स्वपट्टे स्थापयाञ्चक्रिरे । तदा साधुश्रीअर्हईनाम्नः सुतेन श्रीवर्द्धमानसंज्ञेन स्वमातृसाहियदेवीसहितेन प्रतिगृहं सरूप्यमुद्रस्थालिकालम्भनिका चतुर्विधसङ्घवस्त्रपरिधापनादिना भूरिद्रव्यव्ययेन महानुत्सवश्चक्रे । श्रीगुरुणा स्वयं चिन्तितम्, इष्टोपदेशेन उ० श्रीकमलविजयगणिभिर्ज्ञापिताचार्यपदं प्रदाय 'श्रीविजयप्रभसूरिः' इति नाम निर्ममे ।

विजयी जगदाराध्यो यशस्वी च प्रभाववान् । भगवन्नाथवर्णैस्त्वन्नाम्नाऽभूद् विजयप्रभः ॥ १ ॥

तदनु श्रीगुरुः श्रीविजयप्रभसूरिणा सह सूरतिबन्दिरे एकं चातुर्मासकं विधाय, श्रीराजनगरे चतुर्मासी ···
···म् । तत्पारणायां सङ्घमुख्य-सा० सूरापुत्र-सा० धनजीनाम्ना विज्ञप्य श्रीगुरूणां वन्दनकमहोत्सवः प्रारेभे ।
···शून्यदर्शनं भूद्, इतीवाऽऽच्छादिते वियति सुवर्ण-
···लिकाऽऽलोकलोकस्थानाय कमनीयप्रकटपटमण्डपैर्भो
···वर्णचन्द्रोदयप्रभासङ्करेण रात्रिंदिवातीतविमानोपमानतायामुपनतायां जगति सुसीमताकारि-
··· सत्र न तपनकरप्रचार इतीव सहस्रकरकरेषु भूमिमस्पृशत्सु विविधधवलगान-
···मरोरगैः शोभितेषु पटकुल्येषु विश्वविश्रान्तिशारदाभ्रपटलेषु इवाऽत्युच्चमण्डपेषु
··· भगवान् स्वयं स्वतुल्यताज्ञापनार्थं पुरः स्थित्वा सुमुहूर्ते वन्दनकानि
···सर्वसङ्घसमक्षं श्रीपरमगुरुणाऽभाणि—"यथाऽहं तथाऽयं सर्वसङ्घेन
···व्यः"
··· भावप्रतिबिम्बनाद् दर्पण
··· कनकगिरिरिव,
···सिञ्चे ।

तदा सा० श्रीधनजीनाम्नाऽष्टसहस्रमहमूदिकानां यशोबीजानामिव प्रभावना चक्रे, सर्वसङ्घपरिधापनिका च । तत्रैकं चतुर्मासकं अहम्मदपुरे विधाय श्रीपरमगुरुभिः सहैव श्रीविजयप्रभसूरि.................. युगादिदेवयात्रायां द्वीपवास्तव्यमणसालीयसा० रायचन्द्रप्रमुखसङ्घेन सह.....................नालोच्य सुराष्ट्रासङ्घाग्रहेण श्रीउन्नतपुरमलञ्चक्रे ।

क्रमेण देवशयनैकादश्यां.........श्रीविजयप्रभसूरिभिः कृतनिर्यामनाविधयः श्रीविजयदेवसूरयः स्वर्जग्मुः । ततः श्रीवीरनिर्वृते श्रीगौतमस्वामीव श्रीपरमगुरौ स्वर्गतेऽत्यन्तदुःखाऽऽवेशात् श्रीविजयप्रभसूरपि कतिचिद् दिनानि विमनस्कतया निन्ये ।

तदनु चतुर्विधसङ्घाग्रहेण संसारस्वभावमनुभाव्य विगतशोकाः सुमुहूर्ते श्रीविजयप्रभसूरिपादाः भट्टारकपदोद्भूतशोभाप्राग्भारभासुराः श्रीगुरुपट्टं विभूषयामासुः । तद्दिन एव शिवपुरीदेशे यतीनां विहारस्य प्राग् वर्षद्वयं यावन्निषेधस्य मुत्कलता जाता, तद्वर्षेनिका आगता । तद्वर्षे च श्रीद्वीपवास्तव्यसा० नेमिदासनाम्नाऽष्टसहस्रमहमूदिकाव्ययेन श्रीगुरून् सार्धमादाय श्रीशत्रुञ्जयतीर्थयात्रासङ्घो महान् चक्रे ।

एवं श्रीगुरुभिः सुराष्ट्रायां चतुर्मासदशकं चक्रे । तत्प्रभावात् सं० १७१५, सं० १७१७, सं० १७२० वर्षसत्कास्त्रयोऽपि दुष्कालाः सुराष्ट्रादेशे न प्रसारमापुः । तस्मिंस्तु जीर्णदुर्गादिभ्यो गूर्जरात्रायां धान्यागमनं प्रतीतमेव । सं० १७२३ वर्षे घोघाबन्दिरे श्रीजसूनाम्न्या कारितानेकजिनप्रतिमानां श्रीसूरिभिः प्रतिष्ठा चक्रे ।

एषु च गुरुषु विपक्षभावमावहन्तः केचिद् बालिशाः स्वत एव लोकापवादविडम्बिता अधुना दृश्यन्ते । ततः श्रीअहम्मदाबादनगरसङ्घाग्रहेण श्रीगुरवो गूर्जरात्रायामाजग्मुः । तत्प्रभावाल्लोकानां सुभिक्षेण महान् हर्षो बभूव । इत्यादि परमर्षीणामेषां महिमा प्रकट एव । तेन निश्चीयते, एतदाज्ञावर्तित्वमेव उभयथाऽपि शिवाय ।

सिरिविजयरयणसूरिपमुहेहिं णेगसाहुवग्गेहिं ।
परिकलिआ पुहविअले सूरिवरा दिन्तु मे भद्दं ॥ ४ ॥

श्रीगूर्जर-मरु-मालव-मेदपाट-मेवात-कच्छ-हलार-सुराष्ट्र-दक्षिणादिदेशेषु श्रीगुरुतपस्तेजसा साम्प्रतं धर्मकर्माणि निरन्तरं जायन्त इति ।

सोऽयं वीरपरम्पराप्रणयिनीप्राणप्रियः सत्क्रियः, जीयात् श्रीतपगच्छपः सुरवरैः संसेव्यमानक्रमः ।
नाम्ना वीर इति क्षमाधरवरप्रोत्रीतनूत्नक्रियः, प्रत्यक्षं विजयप्रभो गणपतिः श्रीवर्द्धमानप्रभः ॥ १ ॥

श्रीवीरतीर्थान्विकलब्धराज्यः श्रीवर्द्धमानेन कृतोत्सवश्रीः ।
देवाभियुक्तोऽभिधयाऽपि वीरः श्रीवीरतीर्थे गुरुरेष जीयात् ॥ २ ॥

श्रीविजयप्रभसूरेरुपासकः श्रीकृपादिविजयानाम् । विदुषां शिष्यो मेघः सम्बन्धमिमं लिलेख मुदा ॥ ३ ॥

॥ इति श्रीपट्टावलिसूत्रोपरिक्षिप्तगाथात्रयविवरणं सम्पूर्णम् ॥

# दिग्विजयमहाकाव्यान्तर्गतविशेषनाम्नां सूचिः ।

## [ अकाराद्यक्षरानुक्रमेण ]


| | |
|---|---|
| अकबर [ सम्राट् ] | ३०,३१,१३४,१३५ |
| अक्षपाद [ आचार्य ] | ५९ |
| अल्हू [ श्रावक ] | १४० |
| अचलगिरि [ तीर्थ ] | ४४ |
| अजितदेवसूरि | २९ |
| अतिशीता [ नदी ] | ८ |
| अम्बरीकपार्श्व [ तीर्थ ] | १३८ |
| अपापपुः [ तीर्थ ] | २७ |
| अभिनवनगर | ३३ |
| अमरचन्द्र [ वाचक ] | ३५ |
| अर्गलापुर [ आगरा ] | १०० |
| अर्बुदगिरि [ तीर्थ ] | १२६ |
| अर्बुदाचल [ ,, ] | १३५ |
| अवरङ्गपुः [ नगर ] | ३३ |
| अहमदावाद [ ,, ] | ३२,३५,१३४, १३८,१३९,१४१ |
| अहम्मदपुर [ ,, ] | १३५,१४१ |
| अहिमदपाद [ ,, ] | ३९ |
| आगरा [ ,, ] | १३८ |
| आघाटपुर [ ग्राम ] | १३७ |
| आरासण [ तीर्थ ] | १३७ |
| आनन्दविमलसूरि | ३० |
| आर्यमहागिरि | २८ |
| आर्यसुहस्ती | २८ |
| आह्लणपुर [ नगर ] | १३८ |
| इन्द्रजी [ श्रावक ] | १३४ |
| इन्द्रदिन्नसूरि | २८ |
| इन्द्रभूति | ६,१३२ |
| ईडरदुर्ग | १३६ |
| ईदलसाहि [ पातसाह ] | १३८ |
| ईलादुर्ग | १३१,१३८,१३९ |
| उग्रसेनपुर [ आगरा ] | १०० |
| उज्जयन्त [ तीर्थ ] | १२६ |
| उत्तरकुरु [ क्षेत्र ] | १३ |
| उदयनगर | ४४,४६,५४ |
| उदयनगराधीश [ नृप ] | ४८ |
| उदयपुर | ५२,१३७ |
| उद्योतनसूरि | २९ |
| उदयसागर [ तडाक ] | १३७ |
| उन्नतपुर [ आगरा ] | १४१ |
| उपाध्याय [ पद ] | १३८ |
| ऊना [ नगर ] | १३६ |
| ऐरावत [ क्षेत्र ] | १३ |
| ओछवाल [ गोत्र ] | १३१ |
| औरङ्गावाद [ नगर ] | १३८ |
| कच्छ [ देश ] | १३९,१४१ |
| कच्छ [ ,, ] | १३७ |
| कमलविजय [ गणि ] | १४० |
| कमा [ श्रावक ] | १३४,१३९ |
| करहेडापार्श्व [ तीर्थ ] | ३४,१३८ |
| कर्णसिंह [ राणा ] | १३७ |
| कलिकुण्डपार्श्व [ तीर्थ ] | ३४,११०,१३८ |
| कलिन्दिकन्यका [ नदी ] | ९८ |
| कल्याणजी [ मन्त्री ] | १३७ |
| कल्याणमल्ल [ नृप ] | १३९ |
| कालिन्दिका [ नदी ] | १११ |
| कालिन्दी [ ,, ] | १०५ |
| कालीसरस्वती [ बिरुद ] | १३५ |
| काशि [ काशी ] | ८३ |
| काशिका [ ,, ] | ११३ |
| काशी [ नगरी ] | ११०,११७ |
| कीका [ श्रावक ] | १३६ |
| कुतुबसाहि [ पातसाह ] | १३८ |
| कुम्भा [ राणा ] | १३७ |
| कुशस्थल [ देश ] | ११० |
| कृपाविजय [ मुनि ] | १४१ |
| कृष्णदुर्ग | १३८ |
| कैलास [ पर्वत ] | १९ |
| कोडिमा [ श्राविका ] | १३४ |
| कोशला [ देश ] | १७ |
| क्षत्रियकुण्ड [ नगर ] | १३३ |
| खडगपुर | ५२ |
| खमणोर [ ग्राम ] | १३७ |
| खरतर [ गच्छ ] | १३६ |
| खानखाना [ नवाब ] | १३४ |
| खानदेश [ देश ] | १३८ |
| गङ्गा [ नदी ] | १५,१८,१०९,११०,१११ |
| गजसिंह [ नृप ] | १३७ |
| गन्धपुर [ गन्धार ] | १४० |
| गन्धार बन्दिर [ नगर ] | १३४,१३५,१४० |
| गलकुण्ड [ ,, ] | १३८ |
| गिरिनार [ तीर्थ ] | १३५ |
| गुणशिला [ वन ] | १३० |
| गुर्जरात्रा [ देश ] | १३७ |
| गूर्जर [ ,, ] | ३१,३५,१३७,१४१ |
| गूर्जरत्रा [ ,, ] | १३७ |
| गूर्जरात्रा [ ,, ] | १३८,१३९,१४१ |
| गौतम | ६,५७ |
| घनौघपुर [ घोघा ] | ३९ |
| घोघा [ नगर ] | १३६,१४१ |
| घोया [ गोत्र ] | १३४,१३९ |
| चव(ब)लेरपार्श्व [ तीर्थ ] | १३८ |
| चतुरा [ श्राविका ] | ३४,१३७ |
| चतुरिका [ चतुरा ] | ३३ |
| चन्द्र [ गच्छ ] | २९ |
| चन्द्रपाल [ श्रावक ] | १३६ |
| चन्द्रसूरि | २८ |
| चांपानेर [ नगर ] | १३४ |
| जगच्चन्द्रसूरि | २९ |
| जगत्सिंह [ राणा ] | ३१,१३७,१३८ |
| जम्बू [ गणधर ] | २८ |
| जम्बू [ वृक्ष ] | १३ |
| जम्बूद्वीप | ८,१२,९० |
| जयतारणी [ तीर्थ ] | १३८ |
| जयदेव [ सूरि ] | २८ |
| जयानन्दसूरि | २९ |
| जसू [ श्राविका ] | १४१ |
| जहांगीर [ सम्राट् ] | १३५,१३६ |
| जाबालकपुर | १३७ |
| जाम [ नृप ] | १३७ |
| जालन्धर [ देश ] | ९० |

जालोर [ दुर्ग ] १३७
जीर्णदुर्ग [ तीर्थ ] १४१
जीव [ श्रावक ] ५१
जीवा [ जीव ] ४४,५६
ज्ञात [ वंश ] २०
झाला [ जाति ] १३०
टक्कर [ गोत्र ] १३६
तपगच्छ १४१
तपागच्छ १३७,१४०
तपगण ३०,३२,४४,९३
तिलिङ्ग [ देश ] ३४,१३८
तैलङ्ग [ भट ] १३८
दस [ जाति ] १४०
दक्षिण [ देश ] १४१
दक्षिणमण्डल [ ,, ] ३६,१३८,१३९
दशास्यपुरी [ नगरी ] ९७,१००
दिग्विजय [ काव्य ] ८
दिन्नसूरि २८
द्वीप [ नगर ] ३०,१३७,१४१
देवकुरु [ क्षेत्र ] १३
देवचन्द्र [ श्रावक ] ३४,३५,१३६,१३८
देवसुन्दरसूरि २९
देवसूरि २९,३५
देवानन्द [ सूरि ] २९
देवानन्द [ काव्य ] १३६
देवेन्द्रसूरि २९
धनजी [ श्रावक ] १४०,१४१
धनाइ [ श्राविका ] १३४
धर्मघोषसूरि २९
धाना [ क्षेत्रपाल ] १३९
नडीयद्र [ नगर ] १३६
नरसिंहसूरि २९
नर्मदा [ नदी ] १०२
नवादा [ नगर ] १३०
नवानगर १३५,१३७
नवीनपुर १३९
नारदपुरी [ नगरी ] १३४
नारायणपुर [ नगर ] ५६
नाहीपुर-ग्राम ३६,१३७
निषध [ पर्वत ] ११
नील [ ,, ] ११
नैषधीय [ काव्य ] १३९
पण्डित [ पद ] १३८
पत्तन, पट्टन [ नगर ] ७१,११६,१२२, १३३,१३५,१३६,१३८,१४०
पद्मसागरगणि १३६
परमार [ जाति ] १३९
प्रद्युम्नसूरि २९
प्रद्योतनसूरि २८
पंन्यास [ पद ] १३८
प्रभव [ गणधर ] २८
प्रभास [ नगर ] ४४
प्रयाग [ तीर्थ ] १०९
पातिसाहि [ जहांगीर ] ९६,९९
पातिसाहिपुर [ आगरा ] ९५
पातिसाहिसदन ९८
पापापुः [ अपापापुः ] १३०
पीछोला [ तटाक ] १३७
फिरङ्गीपातिसाहि १३७
बर्हानपुर [ नगर ] ३४,१३८
बल [ भद्र ] १५
बाहुबली ११०
बुन्दी [ नगर ] १३८
भद्रबाहु [ पूर्वधर ] २८
भरत [ क्षेत्र ] १४,१५,१९,९०,११८, १२६,१२७,१२९
भरत [ चक्रवर्ती ] १९,११०
भणशाली [ गोत्र ] १३६,१४१
भाग्यपुरी [ नगर ] ३५
भाग्यनगर [ भाग्यपुरी ] १३८
भानुमती [ श्राविका ] १३९
भूषण [ आचार्य ] १३४
भोटा [ श्रावक ] १३५
मचिन्द्र [ दुर्ग ] १३७
मणिरत्नसूरि २९
मण्डपाचल [ तीर्थ ] १३६,१३९
मथुरा [ नगरी ] १३३
मर्ना [ श्राविका ] १३८
मनोहरपुर [ नगर ] १३९
मरु [ देश ] ३२,५६,५८,१३५,१३८, १३९,१४१
मलय [ पर्वत ] ९८,१०७
मल्ल [ श्रावक ] १३६
महातपा [ बिरुद ] १३५,१३६
महेशदास [ श्रावक ] १३८
माघमभक्षा [ ग्रन्थ ] १३६
माणिक्यस्वामी [ तीर्थ ] १३८
मालव [ देश ] १४१
माल्यपुर [ नगर ] ५६,१३८
मानतुङ्ग [ सूरि ] २८
मानदेव [ सूरि ] २८,२९
मीरमोज [ नृप ] १३८
मुनिचन्द्रसूरि २९
मुनिसुन्दरसूरि ३०
मेघ [ ग्रन्थकार ] ४१,८३,१४१
मेडता [ नगर ] १३७,१३८,१३९
मेदपाट [ देश ] ३२,१३८,१३९,१४१
मेदिनीपुर-री [ नगरी ] ५६,९१
मेरु [ पर्वत ] १५
मेवात [ देश ] १३८,१४१
यदुकुल [ वंश ] १२५,१३०
यमुना [ नदी ] १०९,१११
यशोदेवसूरि २९
यशोभद्रसूरि २८,२९
योगशास्त्र [ ग्रन्थ ] १३४
योधपुर [ नगर ] १३७
रणमल्लचोकी १३७
रत्न [ श्रावक ] १४०
रत्नशेखरसूरि ३०
रत्नसानु [ पर्वत ] १२
रम्यक [ क्षेत्र ] १३
रविप्रभसूरि २९
राठौड [ वंश ] १३८
राजगृह [ नगरी ] ७,१३०
राजधान्य [ नगर ] १३५
राजनगर [ अहमदाबाद ] १३५,१३६, १३८,१४०
राजिया [ श्रावक ] १३५
राणपुर [ तीर्थ ] १३५
रायचन्द्र [ श्रावक ] १३६,१४१
रायचन्द्र [ महामात्य ] १३८
रुक्मि [ पर्वत ] १३
रूपसिंह [ नृप ] १३८
रूप्याद्रि [ पर्वत ] १४
रूपा [ श्राविका ] १३६
रूप्याद्रि [ पर्वत ] १४
रैवतक [ ,, ] १३६,१३०,१३०
लक्ष्मीसागरसूरि ३०
लघुहिमाद्रि १३
लहुआ [ श्रावक ] १३५
लङ्कापुरी ४३
लाखा [ नृप ] १३७
लाभपुरी ३१

लाट [ देश ] १३९
लाडोलि [ ग्राम ] १३५
लाभपुर [ नगर ] १३४,१३५
लुम्पाक [ पक्ष ] १३७
वज्र १३२
वज्रसूरि २८
वज्रसेन २८
वजीआ [ श्रावक ] १३५
वध्यनगर १३७
वरकाणक [ तीर्थ ] १३७
वर्द्धमान [ श्रावक ] १४०,१४१
वल्लभ [ उपाध्याय ] १३६
वागडभूपति ५२
वागडमण्डल ५२
वाणारसी [ तीर्थ ] ११२,११३
वादनपुर [ नगर ] ९७
विक्रमभूपति १०
विक्रमसूरि २९
विजयदानसूरि ३०,१३४
विजयदेवमाहात्म्य [ काव्य ] १३६
विजयदेवसूरि ३१,१३५,१३६, १३९,१४०,१४१
विजयप्रभसूरि, विजयप्पह ३५,३७,१३९,१४०, १४१
विजयप्रशस्तिकाव्य [ ग्रंथ ] १३४
विजयरत्नसूरि ५८
विजयसिंहसूरि २९,३२,३३,१३७, १३८,१३९
विजयसेनसूरि ३१,३६,१३४,१३५,१३६
विदेहवर्ष [ क्षेत्र ] ११
विद्यापुर [ बीजापुर ] ३३,३४,३५
विद्याविजय १३४
विबुधप्रभसूरि २९
विमलगिरि [ तीर्थ ] ३३,३८
विमलशिखरी [ ,, ] ३९
विमलचन्द्रसूरि २९
विशाल [ नगर ] १३५
विहार [ नगरी ] १२२,१२४
बीजापुर [ नगर ] १३७,१३८
वीरविजय [विजयप्रभसूरि] ३५,१३४,१४०
वीरसूरि २८
वृद्धदेवसूरि २८
वृद्धोपकेश [ शाखा ] १३४,१३६,१३९
वैताढ्य [ पर्वत ] १४
वैभार [ ,, ] ११०
शकन्दरपुर [ नगर ] १३५
शङ्खेश्वर [ तीर्थ ] ४०,४३,७०,७१,८०,८४
शत्रुञ्जय [ तीर्थ ] १२६,१३५,१३९,१४१
शय्यम्भवसूरि २८
शालिभद्र १३०
शिखरी [ पर्वत ] १४
शिवपुरी [ सीरोही ] ६७,७१,१४१
शिवपूः [ ,, ] ८२
शीता [ नदी ] ८
श्रीवन्ती [ श्राविका ] १३८
श्रेयांस १११
सङ्ग्रामसाधु १२२
सङ्ग्रामपुर ५६
समुद्रसूरि २९
सम्भूतिविजय २८
सम्मेततीर्थ-गिरि १२२,१२५,१३०
सरस्वती [ नदी ] १८,१११,११२
सर्वदेवसूरि-प्रथम २९
सम्राट् हीरविजयसूरि १३५
सहजू [ श्रावक ] १३७
सागर [ गच्छ ] १३७,१३८
सादडी [ ग्राम ] १३७
सान्थिरा [ श्राविका ] १३६
सालच्छद्रिकपुर [ सादडी ] ५५
सावली [ ग्राम ] १३७
सामन्तभद्र [ सूरि ] २८
साहिबदे-देवी [ श्राविका ] १३४,१४०
सिद्धाचल [ तीर्थ ] १३५,१३७
सिन्धु [ नदी ] १४
सिवगण [ श्रावक ] १३९
सिंहगिरि [ सूरि ] २८
सीरोही [ नगर ] १३७
सुखावली [ ग्रन्थ ] १३४
सुगुण [ मन्त्री ] १३८
सुधर्मा [ गणधर ] २८,१३२,१३३
सुनन्दा ११०
सुप्रबु(प्रतिब)द्ध [ सूरि ] २८
सुमतिसूरि ३०
सुमङ्गला ११०
सुमेरु ८,९,११
सुराष्ट्रा [ देश ] ३२,३३,३५,१३५, १३७,१३९,१४१
सुवर्णशैल [ तीर्थ ] ९०
सुवर्णाचल [ सुवर्णशैल ] ९१
सुस्थित [ सूरि ] २८
सूरतिबन्दिर [ नगर ] १३४,१३७,१४०
सूरा [ श्रावक ] १३५,१४०
सूर्यसुता [ यमुना ] १११
सोम [ श्रावक ] १३६
सोमजी [ ,, ] १३६
सोमतिलकसूरि २९
सोमप्रभसूरि २९
सोमसुन्दरसूरि ३०
सौवर्णगिरि [ तीर्थ ] ८९
स्तम्भतीर्थ १३४,१३५,१३६,१३७, १३८,१४०
स्थूलभद्र [ सूरि ] २८,१३२
स्वयद्धतिपुर ४३
स्वर्णगिरि १३७,१३८
हनुमन्नाटक [ ग्रन्थ ] १३५
हरिवर्ष [ क्षेत्र ] १३
हलार [ देश ] १३५,१३७,१३९,१४१
हिमगिरि ९८,१०२
हिमवान् [ हिमगिरि ] १४,९६
हिमशैल [ ,, ] ९८
हिमाद्रि [ ,, ] १२६
हीरगुरु [ सूरि ] १३६
हीरविजयसूरि ३०,३६,१३४,१३५
हीरसौभाग्य [ काव्य ] ३०
हीरानन्द [ श्रावक ] १३८
हेमराज [ संघपति ] १३५
हेमविमलसूरि ३०
हैमन्त [ क्षेत्र ] १५
हैरण्यवत [ ,, ] १५